Government Oriental Library Series.

BIBLIOTHECA SANSKRITA—No. 26.

# तैत्तिरीयारण्यकम्.

## भट्टभास्करभाष्यसहितम्.

THE

# TAITTIRIYARANYAKA.

WITH THE

COMMENTARY OF BHATTABHÁSKARA MISRA

Vol. I.




EDITED BY

A. MAHA'DEVA S'A'STRI, B. A.,

*Curator, Government Oriental Library, Mysore,*

AND

PANDITARATNAM K. RANGA'CHA'RYA,

*First Pandit, Government Oriental Library, Mysore.*

Published under the Authority of the Government of

His Highness the Maharaja of Mysore.

MYSORE.

PRINTED AT THE GOVERNMENT BRANCH PRESS.

1900.

# विषयसूचिका.

| तृतीय चतुर्थप्रपाठकौ. | अनु. | मन्त्र. |
|---|---|---|
| **तृतीयः प्रपाठकः.** | | |
| **चातुर्होत्रचयनम्—** .. .. | | |
| दशहोत्रुपधानमन्त्राः, ग्रहेष्टकोपधानमन्त्रश्च ... | १ | |
| चतुर्होत्रुपधानमन्त्राः, ग्रहेष्टकोपधानमन्त्रश्च ... | २ | |
| पञ्चहोत्रुपधानमन्त्राः, ग्रहेष्टकोपधानमन्त्रश्च ... | ३ | |
| षड्ढोत्रुपधानमन्त्राः, ग्रहेष्टकोपधानमन्त्रश्च .. | ४ | |
| सप्तहोत्रुपधानमन्त्राः, ग्रहेष्टकोपधानमन्त्रश्च .. | ५ | |
| षड्ढोत्रुपधानमन्त्रः ... ... .. | ६ | |
| चातुर्मास्याङ्गकेशनिवर्तनमन्त्राः .. ... | ७ | |
| संभारयजुरुपधानार्था मन्त्राः ... .. | ८ | |
| पत्नीष्टकोपधानमन्त्राः .. .. ... | ९ | |
| प्रातिग्रहेष्टकोपधानमन्त्राः ... .. ... | १० | |
| हृदयेष्टकोपधानमन्त्राः ... .. ... | ११ | |
| नारायणीयस्थानमन्त्राः .. ... | १२—१३ | |
| भर्तृसूक्तं पश्वङ्गभूतोपहोमानुगतम् ... | १४ | |
| मृत्युसूक्तं पशुसंबन्धिवपायागादियाज्यानुवाक्यारूपम् | १५ | |
| अतिग्राह्यान्तःपातिसौर्यग्रहग्रहणमन्त्रः ... | १६ | |
| चमसोपदंसनप्रायश्चित्तमन्त्रः ... ... | १७ | |
| वृष्टिनामकेष्टकोपधानमन्त्रः ... ... | १८ | |
| ज्योतिष्मत्युपधानमन्त्राः ... ... | १९ | |
| अश्वमेधाङ्गरात्रिहोममन्त्राः ... | २० | |
| ब्रह्ममेधाङ्गमन्त्राः ... ... | २१ | |
| **चतुर्थः प्रपाठकः.** | | |
| **पितृमेधमन्त्राः—** ... ... ... | १–१२ | |

श्रीः

# तैत्तिरीयारण्यकप्रारम्भः

॥ हरिः ओम् ॥

भद्रं कर्णेभिश्शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ओं शान्तिश्शान्तिश्शान्तिः ॥

---

एवं व्याख्याता इष्टिपशुसोमाग्नीनां तद्विकृतीनां च मन्त्राः, ब्राह्मणभागाश्च । इदानीं तच्छेषभूतमारण्येऽनुवाक्यं तन्त्रं व्याख्यास्यामः । अत्राहुः—

होतॄन् प्रवर्ग्यकाण्डे च याश्चोपनिषदो विदुः ।
अरुणाम्नायविधी चैव काठके परिकीर्तिताः ॥
रुद्रा नारायणश्चैव मेधो यश्चैव पित्रियः ।
एतदारण्यकं सर्वं नाव्रती श्रोतुमर्हति ॥ इति ।

किञ्च—कल्पे पितृविधिश्चैव प्रवर्ग्यविधिरेव च ।
अरुणाम्नायविधी चैव शतरुद्रविधिस्तथा ॥
कल्पेषु तु य आम्नाता मन्त्रास्तानप्यतन्द्रितः ।
यथाव्रतमुपाकृत्य त्वधीयीतेति चोच्यते ॥

**ओम् ॥ [1]भद्रं कर्णेभिश्शृणुयाम देवाः । भद्रं**

अत्र सन्त्यष्टौ काठके काण्डानि कठमुनिना दृष्टानि सावित्र-नाचिकेतचातुर्होत्रवैश्वसृजारुणकेतुकाख्यानि पञ्चाग्निचित्यानि दिवश्श्ये-नयोऽपामाश्रेष्टयः स्वाध्यायब्राह्मणमष्टममिति । एतेषामारुणकेतुकोऽ-स्मिन्प्रश्ने विधीयते । अरुणाः काण्डऋषयः । प्रथमोऽनुवाकः शान्त्यर्थ उपधानार्थश्च । 'आपमापामपस्सर्वाः' इत्यत्र उपधा-नार्थः पुनराम्नायते । तत्राध्ययनकाले 'भद्रं कर्णेभिः' इति द्वे जपति । ब्राह्मणं च भवति 'भद्रं कर्णेभिरिति द्वे जपित्वा'* इति । उपधानकाले च द्वे अप्येते उपदध्यात् । द्वे चैते त्रि-ष्टुभौ । हे **देवाः** ! उत्तरस्यामृचि श्रूयमाणा इन्द्रादय आम-न्त्र्यन्ते । **भद्रं** भजनीयं कल्याणं वेदाख्यं साङ्गेतिहासपुराणं **कर्णेभिः** कर्णैः श्रोत्रैः । आचार्यान्तेवासिनां ऋत्विग्यजमानानां वा बहुत्वात् बहुवचनम् । 'बहुलं छन्दसि' इति भिस ऐस-भावः । **शृणुयाम** युष्मत्प्रसादात् सर्वदा श्रोतुं समर्था भवेम । किञ्च—**भद्रं** कल्याणं यज्ञादिकर्म च **अक्षभिः** चक्षुरिन्द्रियैः **पश्येम** द्रष्टुं समर्थाः स्याम । 'छन्दस्यपि दृश्यते' इत्युदात्त-त्वम् । **यजत्राः** अध्ययनश्रवणैः यागार्हा वयं पश्येम । यजे-रत्रन्प्रत्यय औणादिकः । केचिदाहुः—यजनीया देवा एभिराम-न्त्र्यन्ते इति । तेषामामन्त्रितनिघातेन भाव्यम् । व्यत्ययेन वा निघाताभावः । बह्वृचास्तु सर्वानुदात्तमेवेच्छन्ति । यथोक्तश्रवण-दर्शनसामर्थ्यं प्राप्तुमिदानीमाह—**स्थिरैः** अविकलैः **अङ्गैः** अव-यवैः चक्षुरादिभिः हस्तादिभिश्च इत्थम्भूताभिः **तनूभिः** शरीरै-र्युक्ता वयं **आयुः देवहितं** देवेन प्रजापतिना स्थापितं षोड-

*आ. १-३२.

**प॑श्येमा॒क्षभि॒र्यज॑त्राः । स्थि॒रैरङ्गै॑स्तुष्टु॒वाꣳ स॑स्त॒नूभिः॑ । व्यशे॑म दे॒वहि॑त॒ं यदायुः॑ । [2]स्व॒स्ति न॒ इन्द्रो॑**

शाधिकशतप्रमाणं, विंशत्यधिकशतप्रमाणं वा । यद्वा—**देवेन** देवनशीलेन **हितं** विहितं 'शतायुः पुरुषः'* इति शतप्रमाणमायुः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । ईदृशमायुः **यत्** यस्मात् **व्यशेम** विविधं प्राप्नुयाम । अश्नोतेर्व्यत्ययेन परस्मैपदम् । 'लिङ्याशिष्यङ्' । यद्वा—विकरणव्यत्ययेन शप् । 'अदुपदेशात्' इत्यादिना धातुस्वरः प्रवर्तते । 'यद्वृत्तान्नित्यम्' इति निघाताभावः । शृणुयाम च पश्येम चेति चार्थस्य विवक्षितत्वात् शृणुयामेत्यत्र 'चादिलोपे विभाषा' इति निघाताभावः । तत्र यासुट उदात्तत्वम् । कश्चिदाह—यद्देवविहितं तद्व्यशेमेति । तस्य 'तिङतिङः' इति निघातेन भाव्यम्, विशब्दात् पदात्परत्वात् । पक्षान्तरे तु यद्वृत्तयोगित्वेन निघाताभावे सति 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वे 'उदात्तवता तिङा' इति समासः । **तुष्टुवांसः** स्तुतिं कुर्वाणाः । छान्दसो लिट् । अध्ययनादिसामर्थ्यादेव भद्रकर्मणि युष्मान् स्तुवन्त इति ॥

[2]अथ द्वितीया—**स्वस्ति न इति** ॥ पूर्वत्र प्रत्यक्षेण प्रार्थिता देवाः । अत्र तु परोक्षेण निर्दिश्य एकैकशः प्रार्थ्यन्ते । **नः** अस्माकं **स्वस्ति** अविनाशं अध्ययनादेरविघ्नेन समाप्तिं **इन्द्रो दधातु** विदधातु **वृद्धश्रवाः** वृद्धश्रवणः सदा स्तोत्रश्रवणात् । यद्वा—वृद्धैः महात्मभिः सदा श्रूयत इति वृद्धश्रवाः । 'गतिकारकपूर्वयोः पूर्वपदप्रकृतिस्वरत्वं च' इति कर्मण्यसुन् [ण्यसिः]।

*सं. १-५-२.

**वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु । [3]आपमापामपस्सर्वाः । अस्मादस्मादि-**

तथा **पूषा** च **स्वस्ति नः** दधातु **विश्ववेदाः** विश्वैर्विद्यते ज्ञायते लभ्यते वेति विश्ववेदाः । पूर्ववदसुन् [सिः] । यद्वा—विश्वानि ज्ञानानि धनानि वा यस्येति बहुव्रीहिः । एवं **तार्क्ष्यः** अपि **नः स्वस्ति** दधातु । तार्क्ष्यो नाम छन्दोमयो रथः यः 'स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिः' इत्युक्तः । विहगराजो वा । तृक्षस्यापत्यं तार्क्ष्यः 'गर्गादिभ्यो यञ्' । **अरिष्टनेमिः** अनुपक्षीणनेमिः । प्रथितनेमिः । **बृहस्पतिश्च नः स्वस्ति दधातु** । 'तद्बृहतोः' इति सुट् । 'उभे वनस्पत्यादिषु' इति पूर्वोत्तरपदयोः युगपत्प्रकृतिस्वरत्वम् ॥

[3]उत्तरा महानाम्न्यः पञ्चानुष्टुभः । ताभिस्सर्वाभिरध्ययनकाले उदकं संस्पृश्य अन्तेवासिने दद्यादाचार्यो व्रताय । उपधानकाले तु आद्याभिः तिसृभिः पृथगुपधाय ततो द्वाभ्यामुपदध्यात् । तत्र प्रथमा—**आपमापामिति** ॥ आप्नोतेः छान्दसे लुङि लृदित्वादङ् । नित्यतायां च द्विर्वचनं, 'अनुदात्तं च' इति द्वितीयस्य निघातः । वर्णव्यत्ययेन दीर्घत्वम् । **अपस्सर्वाः आपमापं** पुनःपुनः प्राप्नुवानीति । 'ऊडिदम्' इति अद्भ्यो विभक्तिरुदात्ता । भूत एव वा लुङ्—सर्वा अपः भृशं प्राप्तवानस्मीति । कास्सर्वा इत्याह—**अस्मादस्मात्** स्थानात् यस्माद्यस्मात् आपः प्रस्रवन्ति । वीप्सायां द्विर्वचने व्यत्ययेन द्वितीयस्य निघाताभावः । उक्तं स्थानविशेषाभिप्रायेण । इदानीं सामान्याभि-

**तोऽमुतः ॥ १ ॥ अग्निर्वायुश्च सूर्यश्च । सह संच-**

प्रायेणाप्याह—**इतः** पृथिव्याः **अमुतः** च दिवः रश्मिवाय्वादिभिरानीयन्ते विसृज्यन्ते च । त्र[illegible]णां 'ऊडिदम्' इति विभक्तेरुदात्तत्वम् । ता एता अपः **अग्निः वायुश्च सूर्यश्च सहभूताः सञ्चस्कर** एते यूयं संस्कुरुत । छान्दसे लिटि मध्यमपुरुषे बहुवचने 'ऋतश्च संयोगादेः' इति गुणः । अग्निर्हि पर्जन्यात्मा अप उत्पादयति, सूर्योऽनुजानाति, वायुः प्रेरयति; तस्माद्यूयमप्येताः संस्कुरुत ये उत्पादयितारः । सहग्रहणमवैमत्याय । यद्वा—छान्दसे लिटि झेः व्यत्ययेन उत्तमपुरुषैकवचनम् । 'सम्पर्युपेभ्यः' इति सुट्, 'णलुत्तमो वा' इति णित्त्वाभावः । **ऋद्धिया** ऋद्धिविशिष्टा यथा भवन्ति तथा संस्कुरुत । छान्दस इकारोपजनः । तत्र ऋकारेण सह आकारस्य य एकादेशः तस्योदात्तत्वात् तिङन्तस्य सांहितिकमुदात्तत्वमाश्रित्य 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, 'उदात्तवता तिङा' इति गतेस्समासश्च । उभयं व्यत्ययेनैव वा । यद्वा—एते अग्न्यादयः एभिस्सहाहं संचस्कर संस्करोमि । यद्वा—अपस्सर्वा अहं प्रापं, अग्न्यादयश्च पूर्वमेताः प्राप्तवन्तः, सामर्थ्यात् प्रथमपुरुषोऽन्वेति, इदानीं अहं एभिस्सहितः संस्करोमीति । केचित्तु—धियेति पदं छिन्दन्ति, पूर्वस्य च लोडन्तस्य अन्त्यवर्णविकारमाहुः । व्यत्ययेन श्नुः । तेषां धियेत्यस्य 'सा वे काचः' इत्यन्तोदात्तत्वप्राप्तेः सर्वानुदात्तत्वं दुर्लभम् । आख्यातस्य च निघातप्राप्तेः अन्तोदात्तत्वं दुर्लभम् । तत्र स्वरयोः विनिमय इति परिहर्तव्यं भवेत् । तस्मात् ऋद्ध्येत्येव पदच्छेदो ज्यायान् । ऋद्धिशब्दो हि नित्स्वरेणाद्युदात्तः ॥

स्कुरर्द्धिया । [4]वायवश्वा रश्मिपतयः । मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः । पुत्रवत्त्वाय मे सुत । [5]महानाम्नीर्महामानाः । महसो महसस्स्वः ।

---

[4]अथ द्वितीया—**वायवश्वा इति** ॥ हे आपः! या यूयं **वायवश्वाः** वायव एव अश्वस्थानीयाः वोढारो यासां **रश्मिपतयः** रश्मय एव पतयः पातारो यासाम् । उभयत्रापि 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **मरीच्यात्मानः** मरीचय एव आत्मा शरीरमाधारभूतं यासां **अद्रुहः** कस्यचिदपि द्रोहमकुर्वाणाः अत एव **देवीः** देवनशीलाः **भुवनसूवरीः** भुवनस्य भूतजातस्य सवित्र्यः । क्वनिपि 'वनोरच' इति ङीब्रेफौ, उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । तादृश्यो यूयं **पुत्रवत्त्वाय** सम्यगध्ययनादिनिर्वृत्त्या यथा पुत्रवान् स्यां तदनुरूपं **मे** मां **सुत** अनुजानीत । मम वा पुत्रवत्त्वमनुजानीत । उभयत्रापि कर्मणस्सम्प्रदानत्वम् । षु प्रसवैश्वर्ययोः, आदादिकः ॥

[5]अथ तृतीया—महानाम्नीरिति ॥ अत्र केषु चित् वाक्येषु ऐकश्रुत्यं दृश्यते; केषु चित् त्रैस्वर्यमेव । केचिदाहुः—

**उदात्तनिहतस्वार्यप्रचयेभ्यो विलक्षणा ।**
**एकश्रुतिस्ससूत्रेषु पञ्चप्रश्नेषु दृश्यते ॥** इति ॥

तत्र 'विभाषा छन्दसि' इत्यस्य व्यवस्थितविषयत्वादेवं भवतीति द्रष्टव्यम् । यदा चैकश्रुत्यं तदा वाक्यस्य अन्त्यमक्षरमेकमुदात्तं, क्वचित्तु द्वे । ततः पूर्वस्य सन्नतरः । ततः पूर्वेषां त्रैस्वर्यं ऐकश्रुत्येन बाध्यते । तत्राद्यमक्षरं लघु चेति प्रायेण

दे॒वीः प॒र्जन्य॑सूवरीः । पु॒त्रव॑त्त्वाय॑ मे सुत ॥ २ ॥
[6]अ॒पाऽन्युं॑ष्णिम॒पा रक्षः॑ । अ॒पाऽन्युं॑ष्णिम॒पा रघ॑म् ।

निहन्यते । शेषमेकश्रुतिर्भवति । तत्र केनेदमुदात्तत्वमिति चिन्त्यम् । केचित्त्वाहुः—'कृत्तद्धितसमासाश्च' इति समासग्रहणस्य व्यत्ययेन नियमार्थत्वमाश्रित्य वाक्यस्यापि प्रातिपदिकत्वात् 'फिषः' इत्यन्तोदात्तत्वं प्रवर्तत इति । द्व्युदात्तत्वे हेत्वन्तरं मृग्यमिति यत्किंचिदेतत् । तस्मात् 'व्यत्ययो बहुलम्' इति प्राप्तस्य स्वरान्यत्वस्य अयं प्रकारविशेषः । आहुश्च—

**वर्णान्यो वा* स्वरान्यो वा* पञ्चप्रश्नेषु दृश्यते । इति ।**

अत्र तु द्वयोर्वाक्ययोरैकश्रुत्यं, द्वयोस्त्रैस्वर्यम् । **महानाम्नीः** महानाम्न्यः महाफलं नाम यासाम् । 'अन उपधालोपिनः' इति ङीप् । **महामानाः** महाफलाः पूजा यासां ताः **महसः** महस्वत्यः महोऽन्नं तेजश्च । 'लुगकारैकाररेफाश्च' इति मत्वर्थीयो लुप्यते । **महसः** च **स्वः** सवित्र्यः । सूतेः क्विपि उवङादेशं बाधित्वा यणादेशः । यद्वा—वीप्सायां द्विर्वचनं, सर्वस्य च महसः सवित्र्य इति । देवीरित्यादि । गतम् । पर्जन्यसूवरीरिति विशेषः । एष महानाम्नीशब्दः सर्वासां नामनिमित्तं हविष्पान्तीयवच्छत्रिवच्च ॥

[6]अथ चतुर्थी—**अपाऽन्युषिणमिति** ॥ अश्नोरुपेश्च औणादिके निन्प्रत्यये अक्षिरुष्णिर्यस्मिन्निति बहुव्रीहौ व्यश्नुवानदाहोऽग्निरुच्यते । योऽध्ययनादिविघ्नकारी ग्रामादिव्यापी महाविषयोऽग्निः तं इतः अ-

*न्यत्वं.

**अपाघ्राममप चावर्तिम् । अप देवीरितो हित ।**
**7 वज्रं देवीरजीताꣳश्च । भुवनं देवसूवरीः । आ-**

स्थानात् अध्ययनादिस्थानात् अपहिंत । हिंतेति वक्ष्यमाणेन अपेति पदं प्रत्येकं अभिसन्बध्यते । हन्तेर्लोटि वर्णव्यत्ययेन इकारः। यद्वा—हिनोतेर्लोटि छान्दसो विकरणस्य लुक् । अपहिनुत अस्मत्पार्श्वात् अपनयत । रक्षश्चास्मत्पार्श्वात् **अपनयत** । ' निपातस्य च ' इत्युपसर्गस्य दीर्घत्वम् । द्वितीयेन अश्न्युष्णिशब्देन सर्वाङ्गव्यापी दाहोऽध्ययनादिविघ्नकारी ज्वरादिरुच्यते । तं **चापनयत** । रपतिश्शोषणकर्मा । अवशब्दस्य वा रेफोपजनः । यदध्ययनादिविघ्नहेतुरात्मनि श्लिष्टं मलं तच्चापनयत । अत्रापि पूर्ववत् उपसर्गस्य दीर्घत्वम् । एवमेतेषु वाक्येषु व्यत्ययेनापशब्दस्य अन्तोदात्तत्वम् । प्रतिसम्बन्धिनां तु अश्न्युष्ण्यादीनां यथाप्राप्तस्वरता । यत्र तु प्रतिसम्बन्धिनां स्वरव्यत्ययः तत्रापशब्दस्वरमेवाद्युदात्तत्वं प्रतिपद्यते अपाघ्रामित्यादिषु । इदं च पञ्चप्रश्नानुज्ञातस्य स्वरान्यत्वस्य प्रकारवैचित्र्यमिति द्रष्टव्यम् । **अघ्रां** अघ्रातव्यं दुर्गन्धं घ्राणशक्तिहानिं वा अस्मत्तः **अपनयत** । सर्वानुदात्तमेवेदं पदम् । **अवर्तिं** दारिद्र्यं, वृत्त्यभावरूपमालस्यं वा **अपनयत** । अत्राव्ययपूर्वपदप्रकृतिस्वरत्वं बाधित्वा व्यत्ययेनोत्तरपदाद्युदात्तत्वम् । पुनश्च अपशब्दग्रहणात् यदन्यदप्यध्ययनादिविरोधि तत्सर्वमपनयतेति । **देवीरित्यादि** । व्याख्यातम् ॥

7अथ पञ्चमी—**वज्रमिति** ॥ पूर्वत्र अश्न्युष्ण्यादीनां अपनयनं प्रार्थितं ; इदानीं तु वज्रादीनां उन्नयनं प्रार्थयते । त्रैलोक्यरक्षाहेतुरिन्द्रायुधं **वज्रं** तदूर्ध्वं **उदीषत** उच्छ्रिततरमुन्नयत ।

दि॒त्यानदि॑तिं दे॒वीम् । योनि॑नोर्ध्वमु॒दीष॑त । [8]शि॒वा न॒श्शन्त॑मा भवन्तु । दि॒व्या आप॒ ओष॑धयः । [9]सु॒-

अस्मदध्ययनाद्यविघ्नसिद्ध्यर्थं उद्भूतसामर्थ्यं कुरुत । ईष गत्यादिषु । यद्वा—ई गतौ, लेटि 'सिब्बहुलं लेटि' इति सिप् । **देवी**रिति । गतम् । **अजीताः** अजिताः प्राणाः तांश्च उन्नयत । यद्वा—उक्तैरश्वचुष्ण्यादिभिः अजितानस्मान् । वर्णव्यत्ययेन दीर्घः । **भुवनं** भूतजातं गवादिकं चोन्नयत । **देवसूवरीः** देवानामपि सवित्र्यः यूयम् । 'वा छन्दसि' इति दीर्घत्वम् । पूर्ववत् क्वनिपि ङी-ब्रेफौ । **आदित्यान्** अदितेः पुत्रान् देवांश्चोन्नयत । **अदितिं** च **देवीं** पृथिवीमुन्नयत । **योनिना** योनित्वेन कारणभावेन भूत्वा । विश्वस्य हि यूयं कारणमिति भावः । यदाहुः—'अप एव ससर्जादौ'* इति ॥

[8]ओषधीरुदकं चोपस्पृश्य दद्यात् । अध्वर्युः तत्सहोपदध्यात् उपधानकाले—शिवा न इति द्विपदया गायत्र्या ॥ **नः** अस्माकं **दिव्याः आपः शिवाः** शान्ता **भवन्तु** । **ओषधयः** च **शन्तमाः** सुखतमाः शान्ततमा भवन्तु । दिवमर्हन्तीति दिव्याः । 'छन्दसि च' इति यः ॥

[9]भूमिमुपस्पृशेत्, भूमिवतीं चोपदध्यात् उपधानकाले—सुमृडीकेति द्विपदया गायत्र्या ॥ **सुमृडीका** सुष्ठु सुखयित्री । यद्वा—शोभना मृडीकाः सुखयितारोऽवयवा यस्याः । 'मृडीकादयश्च' इत्युणादिषु निपात्यते । 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ।

*मनु. १-८.

मृडीका सरस्वति । मा ते व्योम संदृशि ॥ ३ ॥

अमुतस्सुतौषधयो द्वे च ॥ १ ॥

[1]स्मृतिः प्रत्यक्षमैतिह्यम् । अनुमानश्चतुष्टयम् ।

---

सरस्वति सर इत्युदकनाम तद्वति, उदकाधारत्वात् अबिष्टकावत्त्वाद्वा । तादृशी त्वमसि । सर इत्यस्य व्यत्ययेन अन्त्यस्य वर्णान्यत्वम् । आमन्त्रितत्वे हि निघातप्रसङ्गः । स्वरान्यत्वं वा— हे सरस्वति! सुमृडीका त्वमसि । अबिष्टका भूमित्वेन स्तूयते—ते तव तादृश्या व्योम छिद्रं मा सन्दृशि ओषधिवनस्पतिभिः छन्नत्वात् केवलावकाशो मा दर्शि । एतद्धि पृथिव्याः प्रियतरं 'साऽकामयतौषधीभिर्वनस्पतिभिः प्र जायेय '* इति दर्शनात् । दृशेर्लुङि चिणि वृद्ध्यभावश्छान्दसः, आद्युदात्तत्वं च । तत्र 'तिङि चोदात्तवति ' इति गतेरनुदात्तत्वं, समासश्च । यद्वा— तव व्योमाहं मा संदृशि मा समीक्षिषि । लिङि व्यत्ययेन आत्मनेपदोत्तमपुरुषैकवचनम् । 'दृशेश्चेति वक्तव्यम् ' इत्यकर्मकस्य विधानात् सिचश्च इटश्च व्यत्ययेनैव लुक् ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये आरण्यके
आरुणकेतुके प्रथमोनुवाकः.

---

[1]अथोभयतो दर्भस्तम्बस्य अष्टावुपदधाति—स्मृतिः प्रत्यक्षमित्याद्याः सर्वा अनुष्टुभः ॥ तत्र प्रथमा—अत्र स्मृत्यादीन्य-

---

*सं. ७-४-३.

नुमानान्तानि विद्यास्थानानि आरोपितदेवताभावानि आदित्यस्तुति-द्वारेण इष्टकात्वेन स्तूयन्ते, तदभिमानिन्यो वा देवताः । **स्मृतिः** मन्वादिशास्त्रं अनुमेयश्रुतिमूलम् । **प्रत्यक्षं** श्रोत्रादीन्द्रियग्राह्योऽकृत्रिमो वेदाख्योऽक्षरराशिः । अक्षमक्षं प्रति प्रत्यक्षम् । यथार्थेऽव्ययीभावः, 'कूलतीर' इत्यादिना उत्तरपदाद्युदात्तत्वम् । ताद्धर्म्याद्धर्मिणि वृत्तिः । ऐतिह्यशब्देनेतिहासपुराणं गृह्यते । इति हासत् भूदिति प्रायेणैवंरूपेऽर्थे इतिहासग्रन्थकृतिः । छान्दसो ण्यत् । यद्वा—इतिहेतिनिपातसमुदायेन इतिहासपुराणं लक्ष्यते । तदेवैतिह्यं 'अनन्तावसथेतिहभेषजाञ्ञ्यः' इति ञ्यस्य व्यत्ययेनान्तस्वरितत्वम् । अस्यापि विद्यास्थानत्वं व्यासादिदर्शनात्, श्रुतिपरिग्रहाच्च । तथा हि—वैश्वसृजेषूपधानमन्त्रेषु 'इतिहासपुराणं च'* इति इष्टकात्वेन चोद्यते । 'तेनाथर्वाङ्गिरसो ब्राह्मणानीतिहासान् पुराणानि'† इति शिरःप्रभृत्यालम्भने वेदत्वमेव श्रूयते । 'यद्ब्राह्मणानीतिहासान्पुराणानि'† इति ब्रह्मयज्ञस्वाध्यायत्वं श्रूयते । अङ्गन्यायमीमांसास्त्वितिकर्तव्यतारूपत्वाद्वेदग्रहणेनैव गृहीता भवन्ति । अनुमीयते अनेनेति **अनुमानः** आचारः । यत्र तु ग्रन्थकरणं स्मृत्वा सा स्मृतिः ; यत्र तु विनैव ग्रन्थमाचार एव स्वमूलमुपस्थापयति सोऽनुमान इति । एतच्चतुष्टयं चतुरवयवं धर्मप्रमितिसाधनम् । 'संख्याया अवयवे तयप्' । वाक्यस्यैकश्रुतित्वादन्त्यमुदात्तम् । इत्थं धर्मसाधनत्वेन विभक्त‡रूपमभिधाय इदानीं सर्वपरिग्रहार्थं अविभक्त§रूपाणि स्मृत्यादीनि बहुवचनेन गृह्यन्ते । **एतैस्सर्वैरेव** न किंचित्परिहाय समस्तैरपि धर्मसाधनैरेतैः विद्यास्थानैः **आदित्यमण्डलं** आदिभूतस्य देवस्य सवितुर्मण्डलं **विधास्यते** प्रमीयते । छान्दसो लृट् । यादृशं मण्डलमिदं भवति, यादृशं च

*ब्रा. ३-१२-८. †आ. २-११,१०. ‡अविभक्त. §विभक्त.

एतैरादित्यमण्डलम् । सर्वैरेव विधास्यते । [2]सूर्यो

प्रवर्तते, यथा वा मन्वन्तरादिभेदेन भिन्नं कालं प्रवर्तयति, यथा चोदकसृष्ट्यादिना विश्वमुत्पादयति तत्सर्वं स्मृत्यादिप्रसिद्धमिति । यद्वा—एतैस्सर्वैरपि देवताभूतैरभिमानिरूपैस्सहादित्यस्य सर्वदेवतादिभूतस्य मण्डलं विधास्यते विविधमन्तरिक्षे धार्यते स्थाप्यते । सर्वविद्याभिमानिदेवतासहितं सत् आदित्यमण्डलं दिवि वर्तत इति । न हि स्मृत्याद्युल्लङ्घिनी काचिद्देवता भवति । अपरा च योजना—एतैस्सर्वैरिष्टकाभूतैः आदित्यस्य देवानां मुख्यत्वेनादिभूतस्य अग्नेरारुणकेतुकस्य सूर्यात्मना स्थितस्य मण्डलं दिविष्ठं भूमिष्ठं वा चितिरूपं विधास्यते विधीयते चीयते । आदित्यमण्डलमिति स्वरान्यत्वेनाद्युदात्तत्वम् ॥

[2]अथ द्वितीया—अतः परं कालकारित्वेन सूर्यस्तुतिः । **सूर्यः** सुष्ठु प्रेरयिता उदकस्य सविता वा । स एकां सर्वसारभूतां **मरीचिं** रश्मिं **आदत्ते** गृह्णाति स्वीकरोति यथा चन्द्रादयो **दीप्यन्ते** कालकृतः । किमर्थमादत्ते—**सर्वस्मात् भुवनादधि** सर्वस्य भूतजातस्य उपरि; सर्वं भूतजातं निर्वर्तयिष्यामीति । यथा सर्वं भूतजातं रसवीर्यपाकादिभिरनुगृह्यते । तदेवाह—**तस्याः** मरीचेः **पाकविशेषेण** तत्कृतेन भूतानां पाकविशेषेण रसवीर्यादिवैलक्षण्यात्मना **स्मृतं** अवगतमस्माभिः* **कालविशेषणं** कालो विशेष्यते येन तत् निमेषादिपरार्धपर्यन्तं वैलक्षण्यं कालस्य अनाद्यन्तस्य । कृदुत्तरपदप्रकृतिस्वरत्वेन ल्युटि लित्स्वरः । केचिदाहुः—कालोऽयमनाद्यन्तो ग्रहैरनुमीयते; क्षेत्रे व्रीह्यादिराशिः

*अवस्थाभिः.

**मरीचिमादत्ते । सर्वस्माद्भुवनादधि । तस्याः पाकविशेषेण । स्मृतं कालविशेषणम् । [3]नदीव प्रभवात्काचित् । अक्षय्यात्स्यन्दते यथा ॥ ४ ॥ तां**

---

प्रस्थादिभिरिव ग्रहैः* परिच्छिद्यते काल इति यावत् । सांख्यादयः पुनः क्रियैव काल इति वदन्ति ॥

> **आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे ।**
> **भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥** इति ।

सर्वथा आदित्याधीनं कालवैलक्षण्यमिति ॥

[3]अथ तृतीया—नदीवेति ॥ इदानीमुक्तं कालवैलक्षण्यं दृष्टान्तेन समर्थयते—**यथा काचित् नदी** गङ्गादिः कुतश्चित् **अक्षय्यात्** क्षेतुमशक्यात् अविनाशात् **प्रभवात्** उत्पत्तिस्थानात् **स्यन्दते** । यथा च **तां** स्यन्दमानां नदीं अन्याः अल्पा **नद्यः अभिसमायन्ति** आभिमुख्येन सङ्गच्छन्ते सा ताभिः संहिता प्रभवति । यथा च **सा** तादृशीभिस्सह प्रवहन्ती अत एव उरुः विस्तीर्णा **सती** भवन्ती **न निवर्तते** यावत्समुद्रं गच्छति, मध्ये निवर्तयितुमन्यैर्न शक्यते; उदकार्थिभिरपि तदेकदेशेनैव कार्यं क्रियते । अत्रान्त्ये वाक्ये प्रथमादारभ्य एकान्तरं वर्णान्यत्वं स्वरान्यत्वमन्त्यवर्जम् । एवं दृष्टान्तं प्रदर्श्य अत्र 'एवं नानासमुत्थानाः' इत्युत्तरया दार्ष्टान्तिकं योजयति । अपरा योजना—नदीव काचिदयं कालः अक्षय्यात् कुतश्चित्प्रभवात् स्यन्दते । सा तु गगनादिमूलभूता प्रकृतिरिति केचित् ।

---

*ग्रहमैः.

**नद्योऽभि संमायन्ति । सोरुस्सती न निवर्तते । [4]एवं नानासंमुत्थानाः । कालास्संवत्सरꣳ श्रिताः । अणुशश्च महशश्च । सर्वे समवयन्त्रि तम् । [5]स तै-**

तस्या अपि मूलभूता बिन्दुपरमादिव्योमशब्दवाच्या परमप्रकृति-रित्यन्ये । एवं दृष्टान्तदार्ष्टान्तिकद्वयप्रतिपादनानन्तरं यथा तां नदीं अन्या नद्योभिसमायन्ति यथा च सोरुः सती न निवर्तत इति पुनर्दृष्टान्तमात्रम् । 'एवं नानासमुत्थानाः' इति तत्रैव दार्ष्टान्तिकयोजनेति ॥

[4]अथ चतुर्थी—एवमिति ॥ यथा नद्यन्तराणि महानदीं समवयन्त्रि **एवं नानासमुत्थानाः** नानाप्रकारसमुन्मेषाः **कालाः** कालावयवाः त्रुटिनिमेषादयः **संवत्सरं** संवत्सरात्मकं कालं **श्रिताः** प्राप्ताः । संगम्य वसन्त्यस्मिन्नंशा इति संवत्सरः सविशेषः कालः **अणुशश्च महशश्च** सूक्ष्मा महान्तश्च कालांशाः **सर्वे** अपि **तं** कालं **समवयन्त्रि** अपृथग्भूताः तत्रैव समवेता वर्तन्ते । अत्र समवयन्त्रीति रेफोपजनः छान्दसः, महतोऽन्त्यलोपश्च । 'बहुल्पार्थात्' इति शस् । अत्र चतुर्णामपि पदानां अन्त्यानि पदानि व्यत्यस्तस्वराणि । नानासमुत्थाना इति बहुव्रीहौ पूर्वोत्तरपदे त्वन्तोदात्ते । नानाशब्द आद्युदात्तः, नाञन्तत्वात् । श्रितशब्दः प्रत्ययस्वरेणान्तोदात्तः प्राप्तः सर्वानुदात्तो दृश्यते । तमिति प्रातिपदिकस्वरेण अन्तोदात्तत्वं प्राप्तमनुदात्तं प्रचीयते । छान्दसमाख्यातस्योदात्तत्वम् । 'गतिर्गतौ' 'तिङि चोदात्तवति' इति गतिद्वयमनुदात्तम् ॥

[5]अथ पञ्चमी—स तैरिति ॥ अत्र तृतीयचतुर्थयोरैकश्रुत्यं

स्सर्वैस्समाविष्टः । ऊरुस्सन्न निवर्तते । अधिसंवत्सरं विद्यात् । तदेव लक्षणे ॥ ५ ॥ [6]अणुभिश्च

---

प्रथमतृतीययोराद्यं पदं मुक्त्वा शिष्टपदत्रयं व्यत्यस्तस्वरम् । उक्तं 'सर्वे समवयन्त्रि तं' इति स कालः **तैस्सर्वैः** कालांशैः **समाविष्टः** समवेतः अत एव **ऊरुः** विस्तीर्णः सविशेषः **सन्** भवन् **न निवर्तते** यावत्संवत्सरं भवति । अर्थिभिश्च अस्यैकदेश उपयुज्यते ब्रह्मादिकीटान्तैः । अत्र तैरित्युदात्तं प्राप्तं अनुदात्तं दृश्यते । 'सर्वस्य सुपि' इति सर्वशब्दस्य आद्युदात्तत्वं प्राप्तं न क्रियते । समाविष्टपदं 'गतिरनन्तरः' इति स्वरमनादृत्य अन्तोदात्तं भवति । समस्तस्यानुदात्तत्वं न्याय्यं* तथा न ञः। आख्यातस्य छान्दसे निघाताभावे 'तिङि चोदात्तवति' इति नेर्निघातः । एवं **अधिसंवत्सरं** संवत्सरात्मनि सविशेषे काले **विद्यात्** जानीयात् ज्ञातव्यम् । किं **तदेव** यदुक्तमस्माभिरिदानीं 'नदीव प्रभवात्' इत्यादिना । व्यत्ययेन तच्छब्दो निहतः; एवशब्दश्चाद्युदात्तः । किं भूतं विद्यात्—**लक्षणे** लक्षणम् । विभक्तिव्यत्ययेन सप्तमी । यद्वा—**लक्षणे** संत्सरात्मकस्य लक्षणानिरूपणवेलायाम् । तदेव कालस्य लक्षणं जानीयादिति यावत् । अधिसंवत्सरमिति विभक्त्यर्थेऽव्ययीभावः ॥

[6]अथ षष्ठी—अणुभिरिति ॥ यदुक्तं 'कालांशैः समाविष्टः कालो गच्छति' इति, नेदं वचनसाध्यमित्यधुना प्रतिपादयति । **अणुभिश्च महद्भिश्च** कालांशैः **समारूढः** सङ्घत्यारूढ एवायं

---

*सन्नित्यस्यानुदात्तत्वमन्याय्यं. †भव.

**मंहद्भिश्च । समारूढः प्रदृश्यते । संवत्सरः प्रत्यक्षेण । नाधिसंत्त्वः प्रदृश्यते । [7]पटरो विक्लिधः**

---

अत एव संवत्सरात्मना विभक्तात्मा कालः प्रत्यक्षेण **प्रदृश्यते** प्रकर्षेण दृश्यते **न** तु **अधिसत्वः** संवत्सरलक्षणेभ्यः उपरि वर्तमानो निर्विशेषो यः कालात्मा नासौ प्रत्यक्षेण दृश्यते; तस्य विशेषापहृतचित्तानां मनुष्याणामगोचरत्वात् । तस्मादुपपन्नं यथोक्तं वैलक्षण्यमिति । समारूढपदे 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । अगत्याख्यातयोः स्वरसमासावुक्तौ । व्यत्ययेन यक्स्वराभावः । अधिसत्वपदे अव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥

[7]अथ सप्तमी—पटर इति ॥ यदुक्तं 'नाधिसत्त्वः प्रदृश्यते' इति तत्र हेतुरयमुच्यते । **पटरः** पटलः छादनचर्मपुटवान् । मत्वर्थीयो रः । **विक्लिधः** विविधक्लेदनशीलः । क्लिदेरिगुपधलक्षणे के अन्त्यविकारश्छान्दसश्चतुर्थः । द्वितीयमेके वदन्ति । **पिङ्गः** पिङ्गलवर्णः **एतत् वरुणलक्षणं** वारकस्य छादनकर्तुः विकारात्मनो लक्षणं रूपम् । वरुणो लक्ष्यते येन तद्रूपं पटरत्वादीत्यर्थः । **यत्रैतत् रूपं उपदृश्यते** प्रथमत उपलभ्यते ज्ञानसाधनेन विषयीक्रियते तत्र **सहस्रं** अनेकं **नीयते** प्राप्यते ग्राहकेण । यद्वा—अनेकत्वं नीयते विषयः यथा द्वौ चन्द्रौ बहवः प्रदीपा इति । याथात्म्यं तु वस्तुनश्छाद्यते; एवमत्रापि कालात्मनो यद्वारकं रूपं संवत्सररूपं तदुपलब्ध्यपहृतचित्तानां युक्तमेव यत्संवत्सरात्मैवोपलभ्यते न त्वधिसत्व इति । कः पुनः कालस्य वारकात्मा विकारः; उच्यते—पटरः आदित्यादिगतिवैचित्र्यवान् । विक्लिधः विक्लेदनशीलः वर्षाहेमन्तावयववान् । पिङ्गः सन्ध्यारागा-

पिङ्गः । एतद्वरुणलक्षणम् । यत्रैतदुपदृश्यते । सहस्रं तत्र नीयते । [8]एकꣳ हि शिरो नाना मुखे । कृत्स्नं तदृतुलक्षणम् ॥ ६ ॥ उभयतस्सप्तेन्द्रियाणि । जल्पितं त्वेव दिह्यते । [9]शुक्लकृष्णे संवत्स-

दिहेतुत्वात् एवंविधवैचित्र्ययोगात्मा विकारः कालस्य याथात्म्यं निरुणद्धीति । यत्रैतदिति व्यत्यस्तस्वरे । उपदृश्यत इति । गत्याख्यातयोस्स्वरसमासावुक्तौ । तत्रेति व्यत्ययेन सर्वानुदात्तं, नीयत इति निघाताभावश्च । 'अचः कर्तृयकि' इत्याद्युदात्तत्वम् ॥

[8]अथाष्टमी—**एकं हीति** ॥ अस्य कालात्मनः **एकं शिरः** संवत्सरलक्षणः शिरस्थानीयो द्वादशमासावयवः कालांशः **नाना** पृथग्भूते पृथक्स्वभावे वा अस्मिन् शिरसि **मुखे** द्वे दक्षिणोत्तरायणे षड्‌ण्मासात्मके मुखस्थानीये । **तत्** इदं कालवैलक्षण्यप्रतिपादनात्मकं **कृत्स्नं** अपि **ऋतुलक्षणं** ऋत्वादिभेदवतः कालात्मनो वैलक्षण्यज्ञानोपायभूतम् । तत्कथमित्याह—**उभयतः** उभयोरपि मुखयोः **सप्तेन्द्रियाणि** प्रत्येकं सप्तशीर्षण्याः प्राणाः वर्तन्ते । ते च विविधं भूतजातं उत्पादयन्ति । तदानुरूप्येण च प्रतिनियतपृथग्विधसर्वकालावयवसमुन्मेषात् काल्पनिकं तदपेक्षं कालवैलक्षण्यमिति प्रतिपादितं भवति । यस्मादेवं तस्मात् **जल्पितं** एव काल्पनिकशब्दसंजल्प एव कालात्मनि दिह्यते उपचीयते न पारमार्थिका एते भेदा इति । अत्र त्वेवशब्दयोस्स्वरान्यत्वेन सर्वानुदात्तत्वम् । आख्यातस्य स्वरान्यत्वमुक्तम् ॥

[9]अतः परं ब्राह्मणं कालस्य । यदुक्तं मुखे अयने द्वे इति तत्स्वयमेव ब्राह्मणं व्याचष्टे—**शुक्लकृष्णे** इति ॥ ये पूर्वं

**रस्य । दक्षिणवामयोः पार्श्वयोः । तस्यैषा भवति । शुक्रं ते अन्यद्यजतं ते अन्यत् । विषुरूपे अहनी द्यौरिवासि । विश्वा हि माया अवसि स्वधावः । भद्रा ते पूषन्निह रातिरस्त्विति । [10]नात्र भुवनम् ।**

---

**संवत्सरात्मनः** कालस्य दक्षिणवामयोः पार्श्वयोः स्थिते मुखे अयनात्मके अस्माभिरुक्ते ते **शुक्लकृष्णे** अहोरात्रे षण्मासप्रमाणे **विद्यात्** देवानामहोरात्रत्वात् तयोः । पित्र्यमानुषयोरप्यहोरात्रयोः पञ्चदशतिथिप्रमाणयोः त्रिंशद्घटिकाप्रमाणयोश्च **दक्षिणवामयोः पार्श्वयोः** एव वृत्तिर्वेदितव्या । **तस्येति** । योऽयमस्माभिरहोरात्रस्वरूपप्रतिपादनायोक्तः **तस्य** प्रतिपादिका **एषा** वक्ष्यमाणा ऋक् **भवति** । तां च स्वयमेव वदति—शुक्रं त इति । त्रिष्टुबेषा 'अग्ने यं यज्ञमध्वरम्'* इत्यत्र व्याख्याता । हे **पूषन्** ते तव **शुक्रं** एकं **यजतं** यजनीयं एकम् । इत्थं **विषुरूपे** नानारूपे **अहनी** अहोरात्रे वर्तेते । तयोर्मध्ये **द्यौरिव** त्वं **असि** तयोः प्रवर्तयिता वर्तसे । हे **स्वधावः** अन्नवन् **विश्वा मायाः** कालपरिमाणानि **अवसि** उत्पादयसि तस्य तव या **भद्रा रातिः** दानं सा इहास्मासु **अस्त्विति** ॥

[10]एवं 'सूर्यो मरीचिमादत्ते' इत्यादिना एतदन्तेन प्रकरणेन 'तस्याः पाकविशेषेण । स्मृतं कालविशेषणं' इति यत्प्रतिज्ञातं तत्समर्थितम् । इदानीं वैलक्षण्यस्यापारमार्थिकत्वेऽपि तदेव वेद्यं न तु पारमार्थिकं समस्तविकल्पशून्यमिति प्रतिपादयति—

---

*सं. ४-१-११.

**न पू॒षा । न प॒शवः॑ । नादि॒त्यस्सं॑वत्स॒र ए॒व प्र॒त्य॒क्षेण॒ प्रि॒यत॑मं वि॒द्यात् । ए॒तद्वै सं॑वत्स॒रस्य॑ प्रि॒य-**

---

**नात्रे**त्यादिना ॥ 'नादित्यः' इत्यादिषु पञ्चसु वाक्येषु ऐकश्रुत्यम्। आद्ये ऐकश्रुत्यसाम्यात् बहवोपि वाक्यार्था एकवाक्यत्वं भजन्ते। **न हि अत्र** पारमार्थिके कालस्वरूपे **भुवनं** भूतजातमस्ति । तस्मात् 'सर्वास्मात् भुवनादधि' इत्यादिना यदुक्तं तन्नोपपद्यते। **न** च **पूषा** अस्ति । तेन 'भद्रा ते पूषन्निह रातिरस्तु' इत्युक्तस्यासम्भवः । **न** च **पशवः** रश्मयः सन्ति । तेन 'सूर्यो मरीचिमादत्ते' इत्यादिकं न घटते। यद्वा—**पशवो** द्रष्टारः ते च न सन्ति। तेन 'उभयतस्सप्तेन्द्रियाणि' इत्यादिकं न सङ्गच्छते। **न** च **आदित्यः** अस्ति । तेन 'एतैरादित्यमण्डलं' इत्यादिकं अनर्थकं भवेत् । किं तर्हि तदानीं विद्यत इत्याह—**संवत्सर एव** भुवनादिरहितः लुप्तसमस्तभेदमविशिष्टं कालमात्रमेव तदानीं भवति । भवतु तदेव वेद्यमस्त्वित्याह—**प्रत्यक्षेणे**ति। **प्रत्यक्षेण** हि लोकः **प्रियतममेव** प्रीणयितृतममेव **विद्यात्** वेदितुमर्हतीति किमनेन गहनेन निष्प्रयोजनेन । किं तर्ह्यस्य प्रियतमं रूपमित्याह—**एतद्वा** इत्यादि । **एतद्वै** प्रजानां **प्रियतमं** प्रीणयितृतमं **संवत्सरस्य रूपं** । किं? **योऽस्य** जगतः **महानर्थः** प्रयोजनं **उत्पत्स्यमानो भवति** कालविशेषापेक्षया सर्वे हि भावा रूपादयः प्रजादयश्च कालविशेषमपेक्षमाणा एव ह्यात्मानं लभन्ते। सोऽर्थः कालविशेषाधीनत्वात् तस्य रूपमित्युपचर्यते । तस्मात्तदेव रूपं वेद्यं प्रयोजनवत्त्वादिति । तस्मात्तदेव रूपं 'स्मृतिः प्रत्यक्षमैतिह्यम्' इत्यादिना तेन प्रकारेण प्रतिपादितमिति । यद्वा—इतीत्यनन्तरप्रकरणप्रतिपादितं रूपं प्रतिनिर्दिश्यते । तस्य गुणवत्त्वं

**तंमः॑ रू॒पम् । योऽस्य महानर्थ उत्पत्स्यमा॑नो भ॒-
वति॑ । [11]इ॒दं॑ पु॒ण्यं॑ कु॑रु॒ष्वे॒ति॑ । तमाह॑रंणं द॒द्यात् ॥
य॒था॒ ल॒क्ष॒ण ऋ॑तु॒लक्षं॑ण॒ं भु॒वंनः॒ स॒प्त च॑ ॥ २ ॥**

**[1]सा॒कं॒जाना॑ः स॒प्तथ॑माहु॒रेक॒जम् । षडु॑द्य॒मा**

---

प्रतिपादयति । य इति च व्यत्ययेन पञ्चम्यर्थे प्रथमा । इदं च संवत्सरस्य रूपमादित्याधीनमिति तस्यैवेयं स्तुतिः । तद्रूपेण चेष्टकाः स्तूयन्ते इति सर्वमुपपन्नम् ॥

[11]**इदं पुण्यमित्यादि** ॥ अयमनुवाकप्रतिपादितस्यार्थस्य स्तुतिः । यदिदं कालस्वरूपप्रतिपादनमेतदनुवाकोक्तं **इदं पुण्यं** सदा **कुरुष्व इति तं** एतमेवार्थं **आहरणं** आहरणीयं आहरणरूपं वा **दद्यात्** उपदिशेत् शिष्याय गुरुः । तमिति व्यत्ययेन निहतः ॥

इति आरण्यके प्रथमे द्वितीयोनुवाकः.

---

[1]एकादश संख्यावतीरुपदधाति—**साकंजानामिति** ॥ प्रथमा जगती; द्वितीया त्रिपदा गायत्री; तृतीया त्रिष्टुप्; उत्तरा अनुष्टुभः; अन्त्या द्विपदा गायत्री । तत्र प्रथमा—साकंजानामिति । पुनरादित्यात्मना इष्टकाः स्तोतुं तस्य कालविशेषकारित्वेन स्तुतिः प्रस्तूयते । तत्रायं कालोऽनादिप्रवृत्तो वा? कुतश्चिद्वा अक्षय्यात् प्रवृत्तः? कादाचित्कादित्यादिपरिस्पन्दात्मा? सर्वथा तस्यादित्यप्रवृत्तिनिबन्धनमेव विशेषणान्वयनिमित्तं वैलक्षण्यमिति सामान्येनोक्तं पूर्वानुवाके । अत्र तु वैलक्षण्ये विशेषहेतुं ऋतुप्रवृत्तिं

**ऋषयो देवजा इति । तेषामिष्टानि विहितानि धामशः । स्थात्रे रेजन्ते विकृतानि रूपशः । [2]को नु**

दर्शयति—**साकंजानां** सहजानां आदित्यात् सहोत्पन्नानां रश्मीनां **सप्तथं** सप्तमम् । सप्तानां पूरण इति 'थट् छन्दसि' इति थडागमः । स पुनः 'सूर्यो मरीचिमादत्ते'* इति पूर्वोक्तः । तं मरीचिं सप्तानां मध्ये **एकजं** एकत्वेन प्रधानत्वेन जातं सर्वसारभूतं **आहुः** मन्त्रद्रशः । अन्ये ये **देवजाः षडृषयः** अर्षणाद्दृषयः प्रकाशकत्वात् ते तस्यैवैकस्य **उद्यमाः** उद्यमनसाधनानि शिक्यपादस्थानीया गुणभूताः सहकारिण इत्यप्याहुः । ते तु षण्णां ऋतूनां प्रवर्तका इति भावः । तदेव प्रपञ्चयति—**तेषामिति । तेषां** च ऋषीणां **इष्टानि** अभिप्रेतानि साधनानि† **विहितानि** विविधं स्थापितानि वै । **धामशः** नामशः नामानि च भिन्नानि । 'संख्यैकवचनाच्च' इति शस् । **विकृतानि स्थात्रे** स्थापयित्रे आदित्यात्मने संवत्सराय विविधं कृतानि **रेजन्ते** दीप्यन्ते । वर्णव्यत्ययेन एत्वम् । स्वामिकार्यसंपादनसामर्थ्येन उज्ज्वलानि भवन्ति । यद्वा—स्वामिकार्यार्थं रूपशो विकृतानि रेजन्ते कम्पन्ते । रेजृ कम्पने, । उपकरणानां प्राधान्यख्यापनार्थं तान्येव रेजन्ते इत्युक्तानि ॥

[2]एवं सम्पूर्णसामग्रीका अप्रमत्ताः सखायस्सन्तः स्वामिकार्यमेव निर्वर्तयन्तीत्युक्तम् । इदानीं सखित्वादेवैते परस्परमप्रतिकूलाः स्वामिकार्यं निर्वहन्तीति दर्शयति । **को नु मर्या** इति द्वितीया ॥ हे **मर्य्या** मनुष्या इदं ब्रूत **को नु** खलु युष्माकं मध्ये **अमिथि-**

*आ.१-२.[2] †साधनानि धामशः धामानि स्थानानि.

**मर्या अमिंथितः । सखा सखायमब्रवीत् । जहाको अस्मदींषते । [3]यस्तित्याज सखिविदꣳ सखायम् । न तस्यं वाच्यपिं भागो अंस्ति । यदींꣳ शृ-**

---

तः अबाधितः **सखा** समानख्यानस्सन् **सखायं** समानख्यानं अब्रवीत् । इतः प्राक् किमेवं वक्ता **दृष्टः** सखा । कथमित्याह—**जहाकः** हानशीलः । जहातेरौणादिकः आकप्रत्ययः, द्विर्वचनं च । अयं हि तत्स्वभावः **अस्मत्तः** अस्मत्सकाशात् **ईषते** भीतः पलायते इति किमेवं कश्चित् **सखा** सखायं ब्रूते; नैवं प्रतिकूलस्वभावित्वं सखिषु विद्यते इति । ईष गत्यादिषु ॥

[3]इत्थं सखीनां परस्परविरोध एव नास्तीति प्रतिपादितम् । इदानीं सखिद्रोहिणो निन्दां दर्शयति—**यस्तित्याजे**ति तृतीयया ॥ **सखिविदं** सखीनां लब्धारं, सखित्वस्य वा ज्ञातारं **सखायं यस्तित्याज** त्यजति । छान्दसो लिट् । **तस्य** दुरात्मनः **वाच्यपि भागो नास्ति** वेदात्मिकायां वाचि अध्ययनाधिकारभागित्वमपि नास्ति । दूरे अर्थज्ञानयजनादिभागित्वम् । ईमिति पादपूरणे । यत् यद्यपि स जाल्मः **शृणोति** (अर्थज्ञानादिकं करोति) **अलकं शृणोति** नैव शृणोति । अलमिति प्रतिषेधे । 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच् । श्रवणफलाभावात् अश्रवणमेव तत् । हेतुमाह—**न हि** असौ **सुकृतस्य** सुष्ठुकरणार्हस्य फलस्य **पन्थां** मार्गं **प्रवेद** न प्रजानाति स पुनः पन्था अयमेवारुणकेतुकोऽग्निः । एवं सखिद्रोहिणः स्वाध्यायाध्ययनार्थावबोधयजनादिषु अधिकाराभावो मन्त्रलिङ्गेन दर्शितः । वेदेत्याख्यातस्य 'हि च' इति निघाताभावः । समासगतिनिघातावुक्तौ ।

**णोत्युलकं शृणोति ॥ ८ ॥ न हि प्र वेद सुकृतस्य पन्थामिति । [4]ऋतुर् ऋतुना नुद्यमानः । वि-**

'सूपमानात्कः' इति सुकृतशब्दोन्तोदात्तः । पन्थामिति छान्दसमात्वं; नलोपो वा । इतिशब्दो हेतौ । हिः पादपूरणार्थः । यद्वा—हिशब्दो हेतौ । इतिशब्दस्समाप्तौ । एवं सखिद्रोहिणः स्वाध्यायाध्ययनार्थावबोधयजनेष्वधिकाराभावो मन्त्रलिङ्गेन दर्शितः ॥

[4]अथ चतुर्थी—**ऋतुर् ऋतुनेति** ॥ अत्र ऋतूनां निर्वहणक्रमं दर्शयति—ऋत्ववयवस्संवत्सरः **ऋतुः** सः **ऋतुना** वसन्तादिना **नुद्यमानः** प्रेर्यमाणः **अभिधावः** आभिमुख्येन धावन् वेगेन गच्छन् **विननाद** विनदति विविधान् शब्दान्करोति जनयति । छान्दसो लिट् । यथा रथादिः प्रेर्यमाणः शब्दं करोति तूर्णगतिरेवं संवत्सरोपि प्रेर्यमाणः शब्दं करोति इत्युपचर्यते वेगवत्त्वप्रतिपादनार्थम् । यद्वा—विविधान् नादान् लोकस्य जनयति ऋतुभेदेन लोकस्य वाचो भिद्यन्ते । तच्च परस्तात् 'एता वाचः प्रयुज्यन्ते' इत्यादौ वक्ष्यते । अपरा योजना—ऋत्ववयवौ मासौ ऋतुशब्देनोच्येते; यथा 'मधुश्च माधवश्च वासन्तिकावृतू'* इति । अत्र च ऋतूनां सङ्गत्यतिशयः प्रतिपाद्यते । ऋतुना नुद्यमानः ऋतुः द्वितीयो मासः विननाद विनदति । कथं अभिधावः तूर्णं तर्ह्यागच्छेति । एवं स्वामिकार्योद्युक्तौ परस्परसङ्गत्या ऋतुधर्मानुपजनयन्तौ संवत्सरत्वेन परिणमेते इति । अभिपूर्वाद्धावतेः लोण्मध्यमपुरुषैकवचने 'इतश्च लोपः' इतीकारस्य लोपः । ऋतुनेत्यस्य छान्दसं सर्वानुदात्तत्वम् । एवं द्वौ मासौ एक ऋतुरि-

*सं. ४-४-११.

**नंनादाभिधावः । षष्टिश्च त्रिंशका वल्गाः* । शुक्लकृष्णौ च षाष्टिकौ । [5]सारागवस्त्रैर्जरदक्षः† । वसन्तो वसुभिस्सह । संवत्सरस्य सवितुः । प्रैषकृ-**

---

त्युक्तं; स च **षष्टिश्च त्रिंशका वर्गाः** त्रिंशत्परिमाणमेषामिति त्रिंशकाः । 'विंशतित्रिंशद्भ्यां ड्वुन्' इति ड्वुन्प्रत्ययः । वर्गाः समूहाः त्रिंशन्मुहूर्ताः एकस्मिन् अहोरात्रे । तेन तादृशाः अहोरात्रा वर्गशब्देनोच्यन्ते । तादृशाः षष्टिवर्गाः एक ऋतुः । **शुक्लकृष्णौ** शुक्लतिथिवर्गः कृष्णतिथिवर्गश्च । एतौ द्वौ त्रिंशकौ एकस्मिन्नृतौ **षाष्टिकौ** सम्भूय षष्टिपरिमाणौ । 'प्राग्वहतेष्ठन्' इति ठन् । एवं त्रिंशन्मुहूर्तपरिमाणषष्ट्यहोरात्रात्मक एक ऋतुः; स च शुक्लकृष्णात्मकषष्टितिथिपरिमाण इति प्रतिपादितं भवति । अस्यास्संख्यावत्त्वं सर्वासां नामनिमित्तं छात्रिवत् ॥

[5]एवं सर्वर्तुप्रवृत्तिसाधारणो विधिर्दर्शितः । इदानीं ऋतूनां प्रथमं वसन्तमधिकृत्योच्यते—**सारागवस्त्रै**रिति पञ्चम्या ॥ आरागः सर्वतो रागः तत्सहितानि वस्त्राणि येषां तैः वसुभिः प्रजानां वासहेतुभिः देवताविशेषैः सह संवत्सरात्मनः **सवितुः** देवस्य **प्रैषकृत्** किङ्करस्थानीयः **प्रथमः** ऋतुः **स्मृतः** मन्त्रदृग्भिः वसन्तो नाम । वसन्त्यत्र सुखिताः प्रजा इति वसन्तः । औणादिको झच् । यद्वा—'अमूनादयत' इत्यादेः प्रैषस्य कर्ता **जलदक्षः** जले दक्षः समर्थः सर्वत्र प्रजानां तत्र जलप्रियत्वात् । सप्तमी पूर्वपदप्रकृतिस्वरत्वम् । सारागवस्त्रैरिति बहुव्रीहिस्वराभावः छान्दसः; सन्नतराभावश्च ॥

---

*वर्गा इत्येव भाष्ये दृश्यते.

†जलदक्ष इत्येव भाष्ये दृश्यते.

त्वं प्रथमस्स्मृतः । [6]अमूनादयतेत्यन्यान् ॥ १ ॥ अमूꣳश्च परिरक्षतः । एता वाचः प्रयुज्यन्ते । यत्रैतदुपदृश्यते । [7]एतदेव विजानीयात् । प्रमाणं

[6]अथ षष्ठी—**अमूनिति** ॥ यदुक्तमृतुना नुद्यमानः ऋतुर्विविधं नुदतीति तत्र वसन्तस्य नुद्यमानस्य वाचः अनया प्रदर्श्यन्ते—**अमूनादयत** भोजयत इति **अन्यान्** कांश्चित् ब्राह्मणान् प्रयुङ्क्ते । कुत एतत्? एता वाचः प्रयुज्यन्ते इति वक्ष्यमाणत्वात् । **अमून् परिरक्षतः** अन्यान् व्यतिरिक्तान् ब्राह्मणान् प्रयुङ्क्ते । वसन्ते प्रवृत्ते ब्राह्मणानां यज्ञोपनयनादौ प्रवृत्तेः अयनादौ निरुपद्रवावस्थानात् । एवं संवत्सर ऋतुद्वारेण जगद्व्यवस्थां ब्रवीतीति निरूप्यते । यद्वा—नोदकस्य ऋतोर्नोदनशब्दा एते 'अमूनादयत, अमून्रक्षत' इति । अत्र लोण्मध्यमपुरुषबहुवचनस्य सकारोपजनः छान्दसः । व्यत्ययेन वा लट् प्रथमपुरुषद्विवचनान्तस्य । **एवमेता वाचः प्रयुज्यन्ते यत्रैतत्** वसन्तस्य स्वरूपं **उपदृश्यते** । यद्वा—यत्र वसन्ते एतदारुणकेतुकस्य अग्नेश्चयनमुपदृश्यते । एतदनुष्ठानेन सम्यगृतुधर्माः प्रवर्तन्त इति यावत् । यत्रेति पूर्ववन्निहतानि ॥

[7]सप्तमी—**एतदेवेति** ॥ **एतत्** आरुणकेतुकानुष्ठानमेव कालस्य पर्याये परिवर्तने ऋतुधर्माणां स्वस्मिन्स्वस्मिन्काले यथापूर्वोन्मेषणे **प्रमाणं** कारणं **विजानीयात्** । यद्वा—यदेतत् वसन्तप्रवृत्तौ कालधर्माणां वैलक्षण्यप्रदर्शनं यथोक्तप्रकारं* सर्वकालपर्यये प्रमाणं विजानीयात् । एवमेव सर्वेऽपि ऋतवो भिन्नस्वभावा इत्यनुमात-

*यथोक्तप्रकारप्रयुक्तं.

कालपर्यये । विशेषणं तु वक्ष्यामः । ऋतूनां तन्निबोधत । [8]शुक्लवासा रुद्रगणः । ग्रीष्मेणावर्तते सह । निद*हन्पृथिवीꣳ सर्वाम् ॥ १० ॥ ज्योतिषाऽप्रतिख्येन सः । [9]विश्वरूपाणि वासाꣳसि । आ-

व्यं सामान्यरूपम् । तत्र यत् ऋतूनां विशेषणं विशिष्टं रूपं तदपि वक्ष्यामः । तत् उच्यमानं निबोधत हे बुधाः! । बुध बोधने, भौवादिकः । पूर्ववत् स्वरव्यत्यया अनुसन्धेयाः ॥

[8]अथाष्टमी—शुक्लवासा इति ॥ प्रथमतृतीययोरैकश्रुत्यं, प्रथमस्याद्युदात्तत्वात् । इदं ग्रीष्मवर्णनम् । शुक्लवस्त्रपरिधानो रुद्राणां रोदयितृस्वभावानां देवताविशेषाणां गणः ग्रीष्मेण सहावर्तते । गृह्यतेऽस्मिन्नुदकमिति ग्रीष्मः सः रुद्रगणः पृथिवीं सर्वां अप्रतिख्येन अप्रतिरूपकेण अप्रतिघातेन वा ज्योतिषा निदहन् नितरां दहन् ग्रीष्मेण सह ऋतुधर्मान् प्रवर्तयन् सावितुरभिप्रायेण पुनःपुनः प्रवर्तते । स्वरान्यत्वं यथायथं द्रष्टव्यम् ॥

[9]अथ नवमी—विश्वरूपाणीति ॥ तृतीयचतुर्थयोरैकश्रुत्यम् । द्वे अप्युदात्ते । अत्र वर्षा वर्ण्यन्ते । विश्वरूपाणि नानावर्णयुक्तानि वासांसि आदित्यानां निबोधत । किं कुर्वताम्? संवत्सरीणं संवत्सरभावि । 'संपरिपूर्वात्ख च' इति खः । कर्मफलं कर्मणः कृष्यादेः फलं निष्पत्तिं वर्षाभिः वर्षर्तुना सह ददतां प्रयच्छतां प्रजाभ्यः वर्षासूत्पन्नस्य संवत्सरोपभोग्यत्वात् । यद्वा—संवत्सरीणस्य कर्मफलस्य हेतुमुदकं कृष्यादि कर्मफलहेतुत्वात्ताच्छब्द्यम् । ज्योतिष्टोमादेः कर्मणो वा फलभूतं उदकं ग्री-

*निज.

दि॒त्यानां॑ नि॒बोध॑त । सं॒व॒त्स॒रीणं॑ कर्म॒फ॒लम् । व॒र्षाभि॒र्दद॑ता॒ꣳ॒ सह । [10]अदुः॒खो दुः॒खच॑क्षुरि॒व । तद्मा॑ऽऽपीत इ॒व दृ॒श्यं॑ते । शीते॒ना॑ऽव्यथ॒य॑न्नि॒व । रु॒रु॒द॑क्ष इ॒व दृ॒श्यं॑ते । [11]ह्ला॒दय॑ते ज्व॒ल॑तश्चै॒व । शा॒म्य-

ऽमेण ग्रस्तं वृष्टिरूपेण ददतां जगद्रक्षणार्थमिति । प्रथमे पादे समासविभक्त्यन्तयोः स्वरान्यत्वेनान्तोदात्तत्वम् ॥

[10]अथ दशमी—**अदुःख इति** ॥ अयं वर्षर्तुरेव दृश्यते । **अदुःखः** सर्वदुःखरहितोऽपि **दुःखचक्षुरिव दृश्यते** अक्षिरोगेण कामिलादिनाऽभिभूतचक्षुषः प्रजा भवन्तीति कालोऽप्युपचर्यते । किञ्च—**तद्मा** तेन कामिलादिना अक्षिरोगेण तद्वान् स्वयमपि **आपीत इव** लोको **दृश्यते** चक्षुषामापतितवर्णत्वात् स्वयमप्यापीत इव प्रतिभाति । मतोर्वत्वाभावः अन्त्यलोपश्च वर्णान्यत्वम् । यद्वा—तस्मिन्काले लोको मयतीति तद्मा आपः ताभिः पीत इव लोको दृश्यते । किञ्च **शीतेन** तत्कालाभिवृद्धेन व्यथाहेतुनाऽपि **अव्यथयन्निव** अहिंसयन्निव प्रजा दृश्यते, शीतत्राणावहितत्वात् सर्वलोकस्य । किञ्च **रुरुदक्षः** रुरुभिः मृगैः समृद्ध इव च **दृश्यते** । मृगपूगानां तद्वधकारिणामसंचारात् । तृतीयापूर्वपदप्रकृतिस्वरत्वम् । अतिदुर्बला* मृगा अपि तस्मिन्काले सुखं वर्तन्त इति ॥

[11]अथैकादशी—**ह्लादयते इति** ॥ प्रथमस्यैकश्रुत्यम् । **ह्लादयते** लोकमयमृतुः वृष्टिसमृद्ध्या । तत्र हि 'अहो सुवृष्टो देवः संपत्स्य-

*अतिचपला.

**तंश्चास्य चक्षुंषी । [12]या वै प्रजा भ्रंᳪश्यन्ते । सं- वत्सराता भ्रंᳪश्यन्ते । याः प्रतिं तिष्ठन्ति । संव-**

न्ते नस्सस्यानि ' इति सर्वो लोको ह्लादं भजते । **अस्य** एवं- विधस्य वर्षर्तोः **चक्षुषी ज्वलतश्च शाम्यतश्च** । अन्तर्भावितण्यर्थौ ज्वलतिशाम्यती । पदार्थान् ज्वलयतः शमयतश्चेति । अनेन हि ऋतुना दृष्टाः पदार्थाः शक्तिविशेषलाभेन औज्ज्वल्यं भजन्ते, शान्ता निवृत्तोपद्रवाश्च भवन्तीति । यद्वा—पदार्थानां औज्ज्वल्यशमने चक्षु- षोरुपचर्येते—यत्रयत्रास्य दृष्टिः तत्सर्वं ज्वलति शाम्यति च । तस्माद्विश्वमप्याह्लादयत इति । शाम्यत इति श्यन उदात्तत्वं स्वरान्यत्वम् ॥

[12]उत्तरं ब्राह्मणं—**या वै प्रजा** इति ॥ चत्वारि वाक्यान्ये- कश्रुतीनि; तृतीये प्रसक्ताद्युदात्तत्वमेव । केचिदैकश्रुत्यमाहुः । यदुक्तं ' संवत्सरीणं कर्मफलं वर्षाभिः नीयते ' इति तत्स्वयमेव ब्राह्मणं व्याचष्टे—**याः प्रजाः भ्रंश्यन्ते** ऋतुविपर्यासजन्मना अवग्रहादिना सस्यादिहेतुभूतसम्यग्वृष्टयभावेन वर्षर्तौ गलितर्तुसं- पदो भवन्ति **ताः संवत्सरादेव भ्रंश्यन्ते** । आगामिनि सर्वस्मि- न्नपि संवत्सरे गलितर्तुसंपदस्ताः प्रजा भवन्ति । **याः** पुनः प्रजाः **प्रतितिष्ठन्ति** अनेनर्तुनाऽनुगृहीताः तृप्ता भवन्ति **ताः** सर्व- स्मिन्नपि **संवत्सरे प्रतितिष्ठन्ति** । ननु नात्र वर्षर्तुग्रहणं, तत् कुतो भ्रंशः, कुत्र वा प्रतिष्ठेत्यत आह—**वर्षाभ्य** इत्यर्थः इति । या वर्षाभ्यो भ्रंश्यन्ते या वर्षासु प्रतितिष्ठन्तीत्ययम- र्थोऽत्र विवक्षित इत्यर्थः, वर्षाणां प्रकृतत्वात् । वर्षाभ्य इति प्रदर्शनम्, वर्षास्वित्यर्थः इत्यपि वेदितव्यम् । केचिदाहुः—हेतौ पञ्च-

त्सरे ताः प्रति तिष्ठन्ति । वर्षाभ्यं इत्यर्थः॥११॥

शृणोत्यन्यान्थ्सर्वामेव षड्च ॥ ३ ॥

[1]अक्षिदुःखोत्थितस्यैव । विप्रसंन्ने कनीनिके । आङ्क्ते चाद्गणं नास्ति । ऋभूणां तन्निबोधत ।[2] क-

---

मी, सप्तमी च निमित्ते । वर्षाभ्य इति च संवत्सरस्यैव विशेषणम् । वर्षर्तुरूपेणावस्थितो यः संवत्सरः तद्धेतुकः सर्वप्रजानां प्रभ्रंशः तन्निमित्तैव च प्रतिष्ठेति ॥

इति आरण्यके प्रथमे तृतीयोनुवाकः.

---

[1]गता वर्षाः; शरदिदानीं वर्ण्यते ऋतुवतीष्षड्डुपदधाति—**अक्षिदुःखोत्थितस्येति** ॥ अनुष्टुभः सर्वाः; चतुर्थी तु उपरिष्टाज्ज्योतिः । त्रिष्टुबित्येके । तत्र प्रथमा । **अक्षिदुःखोत्थितः** निवृत्ताक्षिरोगः तस्येव । उपाध्याया ऐकारं ब्रुवते । एवशब्द एव सादृस्यं ब्रूते । वर्णव्यत्ययो वा । **कनीनिके** अक्षितारके । अवयवाभ्यां अवयविनोः लक्षणा । अस्यर्तोः चक्षुषी **विप्रसन्ने** निवृत्तदोषे निर्मले भवतः । ऋतुचक्षुषोः प्रसन्नत्वात् ताभ्यां दृष्टं जलादिकमपि प्रसीदतीति । **आङ्क्ते** चक्षुषी कृताञ्जनसंस्कारे इव निर्मले करोति अयमृतुः । अत एव च **अद्गणं नास्ति** । चक्षुष्यं किंचित् तमोरूपमद्गणं यद्रजनीमुखेषु विजृम्भते, तदत्र प्रजा न बाधते । तत् एतत् सर्वं **ऋभूणां** देवताविशेषाणां स्वभूतं सामर्थ्यं **निबोधत** ॥

**नकाभानि वासांꣳसि । अहतानि निबोधत । अन्नमश्नीत मृज्मीत । अहं वो जीवनप्रदः । [3]एता वाचः प्रयुज्यन्ते । शरद्यत्रोपदृश्यते ॥ १२ ॥ अभिधून्वन्तोऽभिघ्नन्त इव । वातवन्तो मरुद्गणाः । [4]अमुतो जेतुमिषुमुखमिव । सन्नद्धास्सह**

---

[2]अथ द्वितीया—**कनकाभानीति** ॥ तृतीयस्यैकश्रुत्यं; अन्यत्र पूर्ववत् स्वरान्यत्वमनुसन्धेयम् । तेषां ऋभूणां **कनकाभानि** स्वर्णाभानि **अहतानि** अच्छिद्राणि **वासांसि** परिधानानि **निबोधत** । अथ शारद्यो वाचः प्रदर्श्यन्ते—**अन्नमश्नीत** भक्ष्यं भोज्यं च पुष्कलं अश्नीत । **मृज्मीत** शोधयत च लेपान् । यद्वा—मृष्टमश्नीतेति विशिष्टाशनविधिः मकारोपजनः छान्दसः, यासुडभावश्च । **अहं** खलु **वो** युष्माकं **जीवनप्रदः** प्राणधारणसाधनमन्नादिकं प्रकर्षेण युष्मभ्यं ददामि ॥

[3]अथ तृतीया—**एता इति** ॥ **एताः** एवंप्रकाराः **वाचः प्रयुज्यन्ते** । कदा? **यत्र** यदा शरत् **उपदृश्यते** । शरत्प्रतिपत्तौ हि व्रीह्यादीनामुत्पत्त्या अकिञ्चनोऽपि सुखभोजी भवतीति सर्वलोकोऽनेनर्तुना एताभिः वाग्भिः प्रेर्यमाण इव दृश्यते । अतः परं हेमन्तवर्णनं—**अभिधून्वन्तः** कम्पयन्तः विश्वं **अभिघ्नन्त इव** आभिमुख्येन हननं कुर्वन्त इव च भवन्ति । **वातवन्तः** वायुना बलेन वा तद्वन्तः **मरुद्गणाः** मरुतां देवताविशेषाणां संघाताः । अस्यर्तोरेते सहकारिणो भवन्ति ॥

[4]अथ चतुर्थी—**अमुत इति** ॥ अन्त्यवर्जमेकश्रुति । **इषु-**

**दद्दृशे ह । अपध्वस्तैर्वस्तिवर्णैरिव । विशिखासः कपर्दिनः । [5]अक्रुद्धस्य योत्स्यमानस्य । क्रुद्धस्येव लोहिनी । हेमतश्चक्षुषी विद्यात् । अक्षणयोः क्षिप-**

---

मुखं इषुमुखविषयं इषुमुखे वर्तमानं शत्रुं जेतुमिव **सन्नद्धाः** कृतसन्नाहाः कवचादिभृतः **सह** सङ्घीभूताः **अमुतः** अन्तरिक्षात् ते मरुद्गणा **दद्दृशे** दृश्यन्ते प्रकाशमाना भवन्ति । छान्दसो लिट् । वचनव्यत्ययेनैकवचनम् । यद्वा—लट्येव 'बहुलं छन्दसि' इति शपः श्लुः, 'लोपस्त आत्मनेपदेषु' इति तलोपः । ह इति पादपूरणः । **अपध्वस्तैः** अवलम्बितैः अपगतध्वंसैर्वा **वस्तिवर्णैः** वस्त्राकारैरिव कैश्चित्परिधानैरुपलक्षिताः । वसेः कर्मणि क्तिनि वस्तयो वस्त्राणि । **विशिखासः** विविधशिखाः तत्रापि **कपर्दिनः** बद्धशिखण्डाः । अन्ते द्वावुदात्तौ ॥

[5]अथ पञ्चमी—**अक्रुद्धस्य** अप्यस्यतोः **हेमतः** हिमवतः । हेभावः छान्दसः । **योत्स्यमानस्य क्रुद्धस्येव** पुरुषस्य **चक्षुषी लोहिनी** लोहितवर्णे **विद्यात्** । व्यत्ययेन स्त्रीलिङ्गता । 'वर्णादनुदात्तात्' इति ङीब्नकारौ । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । हिमोपघातेन तदानीं प्रजानां चक्षुषां लोहितत्वादेवमुक्तम् । किञ्चायमृतुः **अक्षणयोः क्षिपणोरिव** । यकारस्य स्थानव्यत्ययः । अक्ष्णोः क्षिपण्योरित्यर्थः । क्षिपणी क्षेपणी कशा । क्षिपण्योरिवायमक्ष्णोः प्रेरयिता भवति । अक्षिप्रेरणमात्रेण प्रजानां प्रवृत्तेः क्षेपण्योरिव सर्ववस्तुविनाशहेतुत्वाद्वा अक्ष्णोः प्रवर्तकत्वातिशयप्रतिपत्त्यर्थं विनाशहेतुप्रतिपत्त्यर्थं वा अक्ष्णोः क्षिपणीसादृश्यम् ॥

णोरिव ॥ १३ ॥ [6]दुर्भिक्षं देवलोकेषु । मनूनामुदकं गृहे । एता वाचः प्रवदन्तीः । वैद्युतो यान्ति शैशिरीः । [7]ता अग्निः पवमाना अन्वैक्षत । इह जीवि-

---

[6]अथ षष्ठी—**दुर्भिक्षमिति** ॥ अत्र शिशिरमधिकृत्योच्यते । **दुर्भिक्षं** दुःखेन भिक्ष्यं लभ्यं दुर्भिक्षं **उदकं देवलोकेषु** देवग्रहणात् ज्योतिषां प्रकाशस्थाने अन्तरिक्षे । अतः परं अन्तरिक्षे उदकभिक्षा नास्ति, वृष्ट्यभावात् । **मनूनां** मनुष्याणां **गृहे** इदानीं उदकं तिष्ठतीति । उपलक्षणमिदं गुप्तप्रदेशानां कूपादीनाम् । तस्मादुदकार्थिभिः तत एवोदकं ग्राह्यमिति । **एताः** एवंरूपा **वाचः प्रवदन्तीः** एवं प्रकर्षेण वदन्त्यः इव **यान्ति** गच्छन्ति । वदतिरत्र प्रकाशने । एवं प्रकाशयन्त्यो वाच इति, यथा 'वाचं वदन्तीं'* इति । **वैद्युतः** विद्योतनशीलाः । विद्युतो वा । वर्णव्यत्ययेनैकारः, यलोपो वा । **शैशिरीः** शिशिरेभवाः शैशिर्यः । उत्साद्यन्तात् ङीप् । उभयत्रापि 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । यद्वा—एताः शैशिरीः वाचः प्रवदन्त्यो वैद्युतो यान्ति क्वापि लयं गच्छन्तीति । यद्वा—वैद्युतो नाम वायोः स्त्रियः विद्युद्रूपाः यान्ति गच्छन्ति । छान्दसो यलोपः ॥

[7]अतः परं ब्राह्मणम्—**ता** वाचो विद्युतो वा **पवमानाः** शोधयन्तीः निरुदकं लोकं कुर्वन्तीः **अग्निः अन्वैक्षत** अनुक्रमेण ऐक्षिष्ट । इह पृथिव्यां **जीविकां** जीवनहेतुं उदकं **अपरिपश्यन्** । एता एवं प्रवदन्ति, इह च उदकं न पश्यामि,

---

*सं. ५-६-८.

कामपरिपश्यन्न् । तस्यैषा भवति । [१]इहेह वस्स्वतपसः । मरुतस्सूर्यत्वचः । शर्म सप्रथा आवृणे ॥ १४ ॥

**दृश्यन्त इवावृणे ॥ ४ ॥**

---

किं भविष्यतीति * ता एव गच्छन्तीरनुक्रमेणासन्तृप्त एवैक्षतेति। **तस्य** एतस्यार्थस्य प्रतिपादिका **एषा** वक्ष्यमाणा ऋक् **भवति ॥**

[१]इहेहेति ॥ इयं त्रिपदा गायत्री । हे **मरुतः स्वतपसः** स्वायत्ततपसः **सूर्यत्वचः** सूर्यदीप्तयः सूर्यरूपाः वा तत्प्रेषण†-कारित्वात् अहं **वः** युष्मत्सकाशात् **शर्म** सुखं कीदृशं? **सप्रथाः** प्रथनवत् विस्तीर्णम् । वर्णव्यत्ययेनाकारः । **इहेह** इह चेह च स्थाने **आवृणे** आभिमुख्येन वृणे प्रार्थये । 'इह जीविकामपरिपश्यन्' इत्युक्तं, तस्मादिह सर्वस्मिन् पृथिव्यवकाशे जीविकाभूतमुदकं विस्तीर्णमुदकं युष्मत्सकाशात् प्रसादेन प्राप्नवानीति प्रार्थयते । अत्र **मरुत** इति हेमन्ते प्रसिद्धाः मरुद्गणाः आमन्त्र्यन्ते, हेमन्तशिशिरयोरेकदेवताकत्वात् 'सतां सत्यानां'‡ इति च तेषामेव संज्ञाभेद इति । अत एव हेमन्तशिशिरयोरेकत्वात् 'पञ्च वा ऋतवः'§ इत्यादिकमुपपद्यते । 'हेमन्तशिशिरावृतूनां प्रीणामि'¶ इत्यादिसहनिर्देशादिश्चोपपन्नो भवति ॥

इत्यारण्यके प्रथमे चतुर्थोनुवाकः.

---

*तीति मत्वा. †तत्त्रिःप्रदक्षिणा. ‡आ. १-१५. §सं. ७-१-१०. ¶सं. १-६-२.

[1]अतिताम्राणि वासांसि । अष्टि वज्रि शतघ्नि च । विश्वे देवा विप्रहरन्ति । अग्निजिह्वा असश्चत । [2]नैव देवो न मर्त्यः । न राजा वरुणो वि-

---

[1]प्रवर्ग्यमदन्तीरुपधाय शान्तिं करोति—**अतिताम्राणीति** चतसृभिः ॥ सर्वा अनुष्टुभः । चतुर्थी अभिक्रान्ताक्षरा । पूर्वत्र आदित्यात्मना संवत्सरात्मना ऋत्वात्मना चाभिष्टुतः इदानीं विश्वदेवरूपेण स्तूयते—**अतिताम्राणि** अतिरक्तानि **वासांसि** विश्वेषां देवानम् । अष्टचादयः प्रहरणविशेषाः । अश्नुते व्याप्नोति शत्रूनिति **अष्टिः** । वर्जयति, व्रजन्त्यनेन वा शत्रव इति वा **वज्रः** । शतं हन्तीति **शतघ्नं** शतघ्नी वा । तैः तद्वत् तत्सहितं वा **विप्रहरन्ति** विविधं प्रहरन्ति शत्रून् **विश्वे देवाः** । मत्वर्थीय इकारः । यद्वा—इकारान्तानि प्रहरणनामानि । तानि विप्रहरन्ति विविधं प्रहरन्ति* शत्रुसकाशं प्रापयन्ति* । शिशिरस्यैव एतद्देवताकथनमिति केचित् । शिशिराधिकारे च मदन्त्युपधानं निर्जलत्वादस्येत्याहुः । 'अत्यूर्ध्वाक्षः'† इति चोत्तरोऽनुवाकः शिशिरमेवाधिकृत्य भविष्यति । ते विश्वे देवाः **अग्निजिह्वाः** अग्निः आरुणकेतुकः प्रकृतः जिह्वा येषां तादृशा भूत्वा **असश्चत** शब्दमकुर्वन् । तेषां जिह्वास्थानीयः आरुणकेतुकोऽग्निः इत्थं सदर्पमिह शब्दयतीति भावः । सश्चतिः शब्दनकर्मा, व्यत्ययेनैकवचनं; शपो वा लुक् ॥

[2]अथ द्वितीया—**नैवेति** ॥ इत्थं सदर्पं तेनाग्निना प्रतिज्ञातं **कच्चन** कश्चिदपि **देवः मादृक्** **मादृक्** मत्तुल्यप्रभावो नैव

---

*न्तु. †आ. १-६.

**भुः । नाग्निर्नेन्द्रो न पवमानः । मातृक्कच्चन विद्यते ।**
**[3]दिव्यस्यैका धनुरार्त्निः। पृथिव्यामपरा श्रिता॥ १५॥**
**तस्येन्द्रो वम्रिरूपेण । धनुर्ज्यामछिनत्स्वयम् । [4]त-**
**दिन्द्रधनुरित्यज्यम् । अभ्रवर्णेषु चक्षते । एतदेव**

---

**विद्यते** । मातृक् कच्चन इति वर्णान्यत्वं छान्दसम् । मनुष्योऽपि नैव विद्येत मादृक् । **न** च **विभुः वरुणो** राजा **नाग्निः नैवेन्द्रः पवमानो**ऽपि नैवेति ॥

[3]अथ तृतीया—**दिवीति** ॥ **अस्य** अग्नेः स्वं यत् **धनुः** तस्य **एका आर्त्निः** कोटिः **दिवि श्रिता** अवस्थिता । **अपरा पृथिव्यां श्रिता** । **तस्य** अग्नेः **धनुर्ज्यां** स्वभूतस्य तथाऽवस्थितस्य धनुषो ज्यां **इन्द्रो वम्रिरूपेण** आगत्य स्वयमेव **अच्छिनत्** अलुनात् । वमनात् वम्रिः । तस्यावलेपोक्तिमसहमानः तमग्निं निग्रहीतुकामः तस्य धनुर्ज्यामच्छिनत् ॥

[4]अथ चतुर्थी—ततः प्रभृति **तत्** अज्यं छिन्नज्याकं **इन्द्रधनुरिति चक्षते** कथयन्ति मन्त्रदृशः; अज्यत्वस्य इन्द्रकृतत्वात् इन्द्रधनुरित्याचक्षते **अभ्रवर्णेषु** अपो बिभ्रतीति अभ्राणि जलदाः तेषां वर्णेषु प्रकाशनेषु । यद्वा—चक्षतिः पश्यतिकर्मा; अभ्रवर्णेषु चक्षते पश्यन्ति लौकिकाः । **एतदेवेति** । **शंयोः** शंयुनाम्नः रोगभयार्तानां शमनयावनकर्तुः । यद्वा—यज्ञस्य स्वगाकर्तुः । **बार्हस्पत्यस्य** बृहस्पतिपुत्रस्य धनुः यथोक्तस्वार्थसंपादनसाधनम् । कोऽस्य विशेष इत्याह—**एतत्** खलु **रुद्रस्य** आरुणकेतुकस्य अग्नेः **धनुः** । तस्मात्किमनेन कर्तुं न शक्यत इति ।

**शंयोर्बार्हस्पत्यस्य । एतद्रुद्रस्य धनुः । [5]रुद्रस्य त्वेव धनुरार्त्निः । शिर उत्पिपेष । स प्रवर्ग्योऽभवत् । तस्माद्यस्सप्रवर्ग्येण यज्ञेन यजते । रुद्रस्य**

रुद्रशब्देन आरुणकेतुकस्याग्नेरभिधानम् । तदीयत्वेन धनुषोऽप्यधृष्यत्वख्यापनार्थं यथा रुद्रस्य भगवतो धनुरप्रधृष्यं एवमिदमपि श्रूयते 'रुद्रो वा एष यदग्निः '* इति । केचिदाहुः—यदित्यध्याह्रियते । यदेतत् **रुद्रस्य** आरुणकेतुकस्य **धनुः** एतदेव शंयोर्धनुः सोऽप्यनेन स्वाभिमतं साधयतीति ॥

[5]अतः परं ब्राह्मणम्—**रुद्रस्य त्वेवेत्यादि** ॥ उक्तं 'इन्द्रो वम्रिरूपेण आरुणकेतुकस्य धनुः ज्यामच्छिनत् ' इति । अथ तस्य लूनज्याकस्य धनुषः को वृत्तान्त इत्याकाङ्क्षायां वृत्तान्तशेषं ब्राह्मणं स्वयमेव ब्रवीति । लूनज्याकस्य धनुषः ऊर्ध्वं कोटिरुत्सर्पति । तस्यैव **रुद्रस्य** आरुणकेतुकस्याग्नेः यज्ञस्य च†वोढा **धनुः** प्रतिष्कभ्यातिष्ठत् । तस्यैव स्वामिनः **शिरः उत्पिपेष** चूर्णीकृत्य ऊर्ध्वमगमयत् यथेन्द्रेणाभिसंहितम् । सः **प्रवर्ग्या**ख्यं तेजो**ऽभवत्** । उक्तं च—प्रवर्ग्ये 'तस्य धनुर्विप्रवमाणं शिर उदवर्तयत् '‡ इत्यादि । **तस्मात् सप्रवर्ग्येण यज्ञेन यो यजते सः रुद्रस्य** अग्नेः यज्ञस्यैव प्रकृतस्य लूनज्याकात्मीयधनुःकोट्युत्सारितं **शिरः प्रतिदधाति** पुनः स्वस्थाने स्थापयति । 'यज्ञस्यैव तच्छिरः प्रतिदधाति '‡ इत्येव छन्दोगाः । अतः परं वेदितुः स्तुतिः—**यः एवं** आरुणकेतुकवृत्तान्तं **वेद नैनं रुद्रः**

*सं. ५-४-३. †च यस्तस्य. ‡आ. ५-१.

स शिरः प्रतिदधाति । नैनꣳ रुद्र आरुको भवति । य एवं वेद ॥ १६ ॥

श्रिता यजते त्रीणि च ॥ ५ ॥

[1]अत्यूर्ध्वाक्षोऽतिरश्चात् । शिशिरः प्रदृश्यते । नैव रूपं न वासाꣳसि । न चक्षुः प्रतिदृश्यते ।

---

अयमग्निः आरुणकेतुकः **आरुकः भवति** । आर्तिं कृत्वा न बाधते । छान्दस उकञ्; आङ्पूर्वो हिंसायां वर्तते ॥

इत्यारण्यके प्रथमे पञ्चमोनुवाकः.

---

[1]अथ ऋतुमण्डलानि त्रीण्युपदधाति—**अत्यूर्ध्वाक्ष** इति ॥ आसामृचां इयं संज्ञा । वक्ष्यति चानुवाकान्ते 'इत्यृतुमण्डलानि' इति । सर्वाश्चानुष्टुभः । अत्रापि शिशिरधर्मा एवोच्यन्ते **अत्यूर्ध्वाक्षः** शीतपीडया अत्यर्थमूर्ध्वे अक्षिणी यस्येति । षच् समासान्तः । **अतिरश्चात्** न कदाचिदपि तिरश्चीनमक्षि देहं वा कर्तुं शक्नोतीति । अतिरश्चीनेन देहेन अक्ष्णा वा उपलक्षितः **शिशिरः प्रदृश्यते** । तिर्यक्छब्दात्परस्याः तृतीयायाः छान्दसः तकारोपजनः । 'सुपां सुलुक्' इति वा आदादेशः । तत्कालभाविनां प्रजाधर्माणां शिशिरस्थानीयतयोपचारः । किञ्च—नैवास्मिन्काले रूपादीनि दृश्यन्ते शीतपीडया रूपादि शोभनवस्तु वा नाद्रियते लोक इत्यर्थः ॥

[2]अन्योन्यं तु न हिꣳस्रातः । सतस्तद्देवलक्षणम् ।
लोहितोऽक्षिण शारशीर्ष्णिः । सूर्यस्योदयनं प्रति ।

[2]अथ द्वितीया—**अन्योन्यमिति** ॥ तुशब्दो विशेषणार्थः **न**-शब्द उपमार्थः । न केवलं रूपाद्यनादर एव, अपि तु **अन्योन्यमिव हिंस्रातः** हिंस्तः काललोकौ परस्परं बाधकाविव भवतः । हिंसेर्लेटि ‘लेटोऽडाटौ’ इत्यडागमः । छान्दसः रेफोपजनः, ‘बहुलं छन्दसि’ इति वा रुट् । यद्वा—यौ नित्यविरुद्धौ पदार्थौ तावप्यस्मिन्काले अन्योन्यं न हिंस्तः । शीतजन्मना आलस्यातिशयेन तूष्णीं आसाते । एवं **सतः** अस्य शिशिरस्य **तत्** रूपं **देवलक्षणं** देवस्य सूर्यस्य ऋतूनां प्रवर्तयितुः लक्षणं चिह्नं तत्प्रेरणाविशेषस्य फलमिदमित्यर्थः । यद्वा—सन्नाम्नो गणस्य शैशिरस्य । व्यत्ययो वा सतामिति । केचिदाहुः वकारतकारयोर्लोपोपजनौ—स्वतस्तदेव लक्षणं शिशिरस्य रूपान्तरोत्पादकत्वमित्यर्थः । यथोक्तं—‘अधिसंवत्सरं विद्यात् । तदेव लक्षणे’* इति । स्वरस्य तु अव्याप्तिबहुलत्वात् न विशेषाध्यवसानहेतुत्वमिति न तत्प्रमाणीक्रियते । पक्षद्वयेऽपि तदित्यस्य निहतत्वात् । किञ्च—अस्मिन् शिशिरकाले **सूर्यस्योदयनं प्रति** सूर्यस्य उदयकाले प्राणिनां हिमक्लिन्नत्वात् तदानीं लोकोऽयं **अक्षिण लोहितः** भवति । शैत्यजन्मा विकारविशेषो लौहित्यमक्षिण दृश्यते । **शारशीर्ष्णिः** शारश्शीर्ष्णीति व्यत्यस्तस्थानस्स†कारः । शारो वर्णविशेषः विषमरूपः यश्शारिकासु दृश्यते तद्वर्णः शिरसि भवति, लोकस्य हिमकुण्ठितत्वात् । ‘शीर्षन् छन्दसि’ इति शीर्षन्भावः । यद्वा—शारशिरसोऽस्य शिशिरर्तोरपत्यं लौकिको

*आ, १-२. †इश.

**[3]त्वं करोषि न्यञ्जलिकाम् । त्वं करोषि निजानुकाम् ॥ १७ ॥ निजानुका मे न्यञ्जलिका । अमी वाचमुपासतामिति । [4]तस्मै सर्व ऋतवो नमन्ते । मर्यादाकरत्वात्प्र पुरोधाम् । ब्राह्मणं आप्नोति ।**

---

जनः शारशीर्ष्णिः । बाह्वादिषु शिरश्शब्दस्य पाठादिञ्, पूर्ववत् शीर्षन्भावः, 'अल्लोपोऽनः' ॥

[3]अथ तृतीया—**त्वं करोषीति** ॥ अत्र शिशिरस्य प्रत्यक्षवदामन्त्रणम् । हे शिशिर! **त्वं करोषि** किं? **न्यञ्जलिकां** न्यग्भूतः अवाचीनकरतलः अञ्जलिः क्रियते तस्यां क्रियायां यस्यां शीताभिभूता अग्निसमीपं गत्वा तादृशमञ्जलिं धारयन्तीति शीतापनयनक्रिया न्यञ्जलिका तां त्वं करोषि । तस्मिन्काले प्राणिनां तत्कारित्वात् शिशिरे तत्कारित्वमुपचर्यते । किञ्च—**त्वं करोषि निजानुकां** न्यग्भूते जानुनी यस्यां तां तापनक्रियां त्वं करोषीति शीताभिभूता हि जना जानुनी भूमौ निपात्य प्रत्यासन्नतरं देशं अग्नेः कुर्वन्ति तापनार्थम् । एवमनयोः क्रिययोः शीतनिवारणार्थत्वात् अयं लोकः **निजानुका मे** अस्तु **न्यञ्जलिका** च **मे** अस्तु इत्येवंविधां वाचं **अमी** प्राणिनः **उपासतां** भजन्ताम् । ताभ्यां क्रियाभ्यां शीतनिवृत्तिर्यथा भवति तथा त्वमनुगृहाण प्राणिनः अग्निवत् । एवं माध्यमिकः कश्चिद्ब्रवीति ॥

[4]अत उत्तरं ब्राह्मणम्—**एवं** उक्तप्रकारं ऋतुमण्डलानामेषां स्वरूपं **यः वेद** जानाति **तस्मै सर्वे** वसन्तादयोपि **ऋतवो नमन्ते** स्वयमेव प्रह्वीभवन्ति न शिशिर एव प्रह्वीभवति, तेन

**य एंवं वेद । [5]स खलु संवत्सर एतैस्सेनानींभिस्स-ह । इन्द्राय सर्वान्कामानंभि वहति । स द्रप्सः ।**

---

ऋतुनिमित्तानि सुखानि भवन्ति दुःखानि च न भवन्तीति । कर्मकर्तर्यात्मनेपदम् । ‘न दुहस्नुनमां यक्चिणौ’ इति यक्चिणोः प्रतिषेधः । किञ्च—एवं वेदिता **ब्राह्मणः पुरोधां** पुरतो धानं सर्वलोकस्य प्राधान्यं च **प्राप्नोति** । उभयत्र हेतुः **मर्यादाकरत्वा**दिति । मर्यादाकरत्वादेवंविदुषे ब्राह्मणाय सर्वे ऋतवो नमन्ते पुरोधां च ततो हेतोः प्राप्नोतीति । मर्यैः मनुष्यैः आदीयन्त इति मर्यादाः । ऋतुनिमित्ता लोकस्य व्यवस्थाः तत्कर्तृत्वात् प्रकाशकत्वात् । अन्य आहुः—एवमिति सर्वस्यारुणकेतुकप्रकरणोक्तस्य प्रतिनिर्देशः । अयमर्थः—य एवं सर्वेष्वपि ऋतुषु उक्तप्रकारमारुणकेतुकस्य स्वरूपं वेद तस्मै सर्वे ऋतवो नमन्ते, सर्वर्तुव्यवस्थाकरत्वात् पुरोधां च प्राप्नोतीति ॥

[5]कथं पुनरारुणकेतुकविदो मर्यादाकरत्वमित्याह—**स खल्विति** ॥ यस्यायं वेदिता **स खलु** आरुणकेतुकः ऋतुभिः संवत्सरात्मना परिणतः **सेनानीभिः** सेनास्थानीयैः **एतैः** ऋतुभिः वस्वादिभिर्वा **सह इन्द्राय सर्वान्कामान्** इन्द्र ईश्वरः स्वामी यान्यान्कामान् वृष्ट्यादीन् कामयते तान् सर्वान् अस्मै **अभिवहति** आभिमुख्येन संपादयति । तस्मादेवं महानुभावस्य आरुणकेतुकस्य वेदिता मर्यादाकरो भवत्येवेति । तत्र तावदारुणकेतुकस्य वृष्टिहेतुत्वं दर्शयति—**स द्रप्स इति** । **स** ह्यारुणकेतुको **द्रप्सः** उदकं जगद्धेतुत्वात् अयं प्रधानं कारणं अन्या देवताः प्रत्यङ्गानीति । द्रवणात् प्सानीयत्वाच्च द्रप्सः । प्सा भक्षणे, पृषोदरादिः **तस्य** एतस्यार्थस्य प्रतिपादिका **एषा ऋग्भवति** ॥

**तस्यैषा भवति ॥ १८ ॥ [6]अव द्रप्सो अꣳशुमतीमतिष्ठत् । इयानः कृष्णो दशभिस्सहस्रैः । आवर्तमिन्द्रश्शच्या धमन्तम् । उपस्नुहि तं नृमणामथ*द्रामिति । [7]एतयैवेन्द्रस्सलावृक्या सह । असुरान्प-**

[6]अव द्रप्स इति ॥ त्रिष्टुबेषा । एतां च द्रप्सवतीमुपदधाति । **अंशुमती** पृथवी । अशनेन शं सुखं भवति येन अशनायायाश्शमो भवति सः अंशुः पर्जन्यः; तद्वर्षणं वा, तदधीनसिद्धित्वात् । तद्वती पृथिवी तां **अवातिष्ठत्** अतिक्रम्यातिष्ठत् । **द्रप्स** उदकम् । अवशब्दः अत्यर्थे । 'ससाधनां क्रियां उपसर्ग आह' इति क्रमणमनेन विशेष्यते, अतिक्रम्येत्यर्थः । तेन तिष्ठतिना योगाभावात् 'समवप्रविभ्यस्स्थः' इत्यात्मनेपदाभावः । तदतिक्रमे च सर्वमर्यादाविनाशः । अतिक्रमकारणमाह—**इयानः** ईयमानः तदीयैः दशभिस्सहस्रैः दशसहस्रसंख्यैः रश्मिभिः आदीयमानः । कर्मणि छान्दसस्य लिटः 'लिटः कानज्वा' इति कानजादेशः । **कृष्णः** कर्षणशीलः हे आदित्य! **इन्द्रः** ईश्वरः त्वरया वर्षस्य द्रावयिता वा त्वं **शच्या** कर्मणा तदनुरूपेण व्यापारेण सहितः **आवर्तं** आवृत्यावृत्य । आभीक्ष्ण्ये णमुल् । धमन्तं गर्जनादिना शब्दयन्तम् । **नृमणां** नृभिः मनुष्यैः मननीयं सदा प्रार्थितं, तेषां वा मनसा अर्थितं **अधद्रां** वृष्टिरूपेण अधोद्रवणशीलाम् । छान्दसः सलोपः । उभयत्र छान्दसं दीर्घत्वम् । ईदृशं तं द्रप्सं **उपस्नुहि** अस्मत्पार्श्वमुपेत्य स्रावय । 'ष्णु प्रस्रवणे' आदादिकः ॥

[7]एतयेति ॥ **एतया** अंशुमत्या **सलावृक्या** सलस्य सलिलस्य

*मथ,

**रिवृश्चति । [8]पृथिव्यꣳशुमती । तामन्ववस्थितस्सं-वत्सरो दिवं च । नैवं विदुषाऽऽचार्यान्तेवासिनौ । अन्योन्यस्मै द्रुह्याताम् । यो द्रुह्यति । भ्रश्यते**

आवृश्चनकारिण्या आदात्र्या वा । 'कुक वृक आदाने' । ईदृश्या पृथिव्या **सह** एव इन्द्रः **असुरान्** असुस्थानीयस्य सलिलस्य दातॄन् मेघान् **परिवृश्चति** परितः सर्वतः वृष्ट्यर्थं भिनत्ति । उदकाधारत्वाभ्युपगमः साहित्यमस्या वृष्टौ; यथा—किंचित् पात्रमानीय गां दोग्धीति ॥

[8]उक्तं पूर्वस्यामृचि 'अंशुमतीमवातिष्ठत्' इति; का पुनरियं अंशुमतीति जिज्ञासायां स्वयमेव ब्राह्मणं व्याचष्टे—पृथिव्यंशुमतीति ॥ उक्तं चांशुमतीत्वम् । **तां** अंशुमतीं पृथिवीं दिवं च **अन्ववस्थितः** । लक्षणे अनोः कर्मप्रवचनीयत्वम् । संवत्सरात्मा आरुणकेतुकोऽग्निः तदुभयाधीनात्मकत्वात् तयोरवस्थित इत्युच्यते । नैवमिति । **एवं**रूपमारुणकेतुकमग्निं **विदुषा** ब्राह्मणेन सह **आचार्यान्तेवासिनौ न द्रुह्यातां अन्योन्यस्मै** अन्योन्यद्रोहमनेन न कुर्याताम् । आचार्यः अध्वर्युः आचरति आचिनोति अस्मात् धर्मानिति । तस्य अन्तेवसन् यजमानः अन्तेवासी । अन्योन्यग्रहणं द्रोग्धृत्वद्रोह्यत्वयोः निषेधार्थम् । 'सर्वनाम्नो द्वे भवतः समासवच्च बहुलम् । यदा न समासवत् पूर्वपदस्य तदा प्रथमैकवचनम्' । 'क्रुधद्रुह' इति संप्रदानत्वम् । अन्योन्यस्मै । अथ **यो द्रुह्यति** द्रोग्धा द्रोहयिता वा तस्य भवति स **भ्रश्यते स्वर्गाल्लोकात्** कर्मफलं न प्राप्नोति । इति एतानि **ऋतुमण्डलानि** ऋतुमण्डलनामधेयानि एता ऋचः आम्नाताः । **सूर्यमण्डलानि** सूर्यपरिवर्तनानि **आख्यायिकाः** आख्यातुं 'तुमुण्ण्वुलौ' इति ण्वुल्,

स्वर्गाल्लोकात् । इत्यृतुमण्डलानि । सूर्यमण्डलान्याख्यायिकाः । अत ऊर्ध्वꣳ संनिर्वचनाः ॥ ११ ॥

निजानुकां भवंति द्रुह्यातां पञ्च च ॥ ६ ॥

[1]आरोगो भ्राजः पटरः पतङ्गः । स्वर्णरो ज्यो-

---

'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठ्यभावः । अन्य आहुः—प्रकरणस्यायमुपसंहारः; इति एवमुक्तप्रकारेण आरुणकेतुकप्रकरणेन अनेन सर्वाण्यृतुमण्डलानि ऋतुपरिवर्तनानि उक्तानि । सूर्यस्य मण्डलानि परिवर्तनरूपाणि उक्तानि । आख्यायिकाश्च तत्रतत्रोक्ताः उक्तमर्थमाख्यातुं शीलं यासां ताः 'शुक्रं ते अन्यत्'* इत्याद्या ऋच उक्ताः । 'संज्ञायाम्' इति ण्वुल् । **अत ऊर्ध्वं** अतः परं **सनिर्वचनाः** निर्वचनं ब्राह्मणं तत्सहिताः आख्यायिकाः वक्ष्यन्ते । पूर्वत्र मन्त्रोक्तार्थप्रसिद्ध्यर्थं आख्यायिका दर्शिताः । अत ऊर्ध्वं तु ब्राह्मणोक्तार्थसुप्रसिद्ध्यर्थं काश्चिदाख्यायिका वक्ष्यन्त इति ॥

इत्यारण्यके प्रथमे षष्ठोनुवाकः.

---

[1]अथ दक्षिणत उदीचीरात्मन्युपदधाति सप्त आरोगादिभिः सप्तसूर्यनामभिः । नामधेयान्येव मन्त्राः । तत्प्रतिपादिकामाख्यायिकां ब्राह्मणं दर्शयति—आरोग इति ॥ त्रिष्टुबेषा । तत्रायं प्रयोगः 'आरोगः तया देवतया' इत्यादि । सप्तवायुस्कन्धवृत्तिनः सप्तसूर्या आरोगादयः सहोदयास्तमया अतिदवीयस्तया नोपलभ्यन्ते इत्येके । एकस्यैव धर्मभेदेन सप्तत्वमित्यन्ये ।

---

*आ. १-२.

**तिषीमान्॑ विभा॒सः । ते अ॒स्मै॒ सर्वे॑ दिवमा॑तप॒न्ति । ऊर्जं॑ दुहा॒ना अ॑नप॒स्फुर॑न्त॒ इ॒ति । कश्य॑-**

आद्यो बलवानित्यन्ये । येन बलवत् रुज्यन्ते पीड्यन्ते प्राणिनः स **आरोगः** । आरोहावस्थो वा; छान्दसो वर्णव्यत्ययः । भ्राजयति ज्वलयति सर्वदा यो विश्वं स **भ्राजः** उन्मिषद्रवः प्रजाया व्यामोहकस्वभावेन रश्मिना वा विश्वं व्यामोहयतीति **पटरः*** किञ्चिदुन्मिषितगतिः वा । **पतङ्गः** ज्ञानबोधयिता विश्वस्य । स्वर्णसमानप्रभः **स्वर्णरः** अत्युज्ज्वलः । मत्वर्थीयो रः । ज्योतिषी ज्योतिर्द्वयमुभयोः पार्श्वयोः यस्य द्योतनस्वभावशक्तिद्वयाक्रान्तसमीपो **ज्योतिषीमान्** । छान्दसो नपुंसकद्विवचनस्यालुक् । समन्तात् ज्योतिर्भिः व्याप्तो वा । विविधं भासयति सर्वान् लोकानिति **विभासः**, सर्वलोकव्यापितेजा वा । **ते** सप्तसूर्याः **अस्मै** यजमानाय यजमानाभ्युदयाय **सर्वे** अपि **दिवमातपन्ति** प्रद्योतयन्ति **ऊर्जं** रसं **दुहानाः** तत्र यजमानार्थमाप्याययन्तः **अनपस्फुरन्तः** असुष्ठुस्फुरणं अपस्फुरणं स्वस्वकार्यविरुद्धं स्फुरणं अकुर्वन्तः । **इति**शब्देन एतादृक्प्रसिद्धान् आरोगादीन् उपदध्यात् इति दर्शयति । **कश्यपो** नाम **अष्टमः** सूर्यः । छान्दसो वर्णव्यत्ययः । विश्वं साक्षित्वेन सर्वदा पश्यतीति कश्यपः । 'पाघ्राध्माधेट्दृशःशः' इति शः । वक्ष्यते 'कश्यपः पश्यको भवति । यत्सर्वं परिपश्यतीति सौक्ष्म्यात्'† इति । **स** कश्यपो **न** कदाचिदपि **महामेरुं जहाति** मेरुवासं नोत्सृजति । मेरुस्था-

*स भ्राजः पटलः पटरः छादकः व्यामोहकः प्रजाया व्यामोहकस्वभावेन रश्मिना वा विश्वं व्यामोहयतीति पटरः. †आ, १-८.

**पोऽष्टमः । स महामेरुं न जहाति । तस्यैषा भवति । [2]यत्ते शिल्पं कश्यप रोचनावत् । इन्द्रियावत्पुष्कलं चित्रभानु । यस्मिन्त्सूर्या अर्पितास्सप्त साकम् ॥ २० ॥ तस्मिन्राजानमधि विश्रयेममि-**

---

नामेव सर्वदा दृश्यः परिवर्तते पार्श्वेषु* यो वा मानसोत्तरं किञ्चित्किञ्चिदपसृत्य परिवर्तते **तस्य** अष्टमस्य प्रतिपादिका **एषा** ऋक् **भवति** ॥

[2]यत्त इति ॥ त्रिष्टुप् † । हे **कश्यप** पश्यक सूक्ष्मदृष्टे! **यत्ते** तव **शिल्पं** सूक्ष्मं कर्म जगत्सृष्टिलक्षणं **रोचनावत्** प्रकाशवत् । जगत्सु प्रकाशार्हं, जगतां वा प्रकाशकम् । **इन्द्रियावत्** वीर्यवत्, इन्द्रियैर्वा तद्वत् इन्द्रियसामर्थ्यवत् । 'मन्त्रे सोमाश्व' इति दीर्घत्वम् । **पुष्कलं** अविकलम्, पुष्टिकरं वा । **चित्रभानु** चायनीयदीप्तिमत् । किञ्च—**यस्मिन्** त्वयि तत्कर्मशिल्पे जगत्सृष्टिलक्षणे **सप्तापि सूर्याः साकं** सहभूता **अर्पिताः** त्वयैव स्थापिताः **तस्मिन्** ब्रह्मपदे **इमं** यजमानं **राजानं** राजमानं दीप्यमानम् । मुमागमोऽनित्य इत्युक्तम् । **अधि विश्रय** उपरिष्टात् स्थापय । अन्तर्भावितण्यर्थश्श्रयतिः ॥

[3]यदुक्तं 'यस्मिन् सूर्या अर्पितास्सप्त साकं' इति तद्विवृणोति—**ते सर्वेऽपि** सूर्याः **कश्यपात् ज्योतिर्लभन्ते** तस्मात्तदनुगृहीता जगत्सृष्टिं कुर्वन्तीति । यच्चोक्तं—'तस्मिन्राजानमधि विश्रयेमं' इति तदपि व्याचष्टे—**अस्मा** इति । यजमाना-

---

*पार्श्वे तु. †अनुष्टुबेषा त्रिष्टुप्.

**ति । [3]ते अस्मै सर्वे कश्यपाज्ज्योतिर्लभन्ते । तान्थ्सोमः कश्यपादधि निर्धमति । भ्रस्ताकर्मकृदिवैवम् । [4]प्राणो जीवानीन्द्रियजीवानि । सप्त**

---

र्थमेव खलु ते कश्यपाल्लब्धज्योतिषो दिवमातपन्तीति । कथं पुनः सूर्याणां कश्यपात् ज्योतिर्लाभ इत्यत आह—तानिति । **तान्** सूर्यान् **सोमः कश्यपादधि** उपरि निर्धमति दाहयित्वा निर्गमयति । कश्यपाग्नौ दहनेन अपनीतकिट्टानिव कृत्वा स्वर्णादीनिव ततो ज्योतिष्मतो निर्गमयति । यद्वा—निर्धमनं शोधनं, सोमः कश्यपाग्नौ शोधयति यथा दह्यमानस्वर्णवत् आत्मीयं ज्योतिर्लभन्ते तिमिरं मुञ्चन्ति तथा निर्धमयति । यस्मादयं सोमः तेषां **भ्रस्ताकर्मकृदिव** भवति । वर्णव्यत्ययेन भ्रस्ता भस्त्रा दृतिः; तया यत्कर्म क्रियते तत् भ्रस्ताकर्म; तस्य कर्ता भ्रस्ताकर्मकृत् । यथा सुवर्णकारादिः सुवर्णादेः किट्टादिकमपनेतुं भस्त्रया वायुमुत्पाद्य ज्वालिताग्निना ततः किट्टादिकं अपनयति तत्स्थनीयोऽयं सोम एषामिति । ओषध्यात्मा ओषधीशात्मा वा सोमः द्वयोरपि यागादिसाधनद्वारेण कश्यपाग्नेः उत्तेजनहेतुत्वेन भस्त्राकर्मकृत्त्वोपपत्तेः ॥

[4]अथ किमात्मान एते सप्तसूर्या इत्याह—प्राण इति ॥ मुखनासिकाभ्यां यो निष्क्रामति स **प्राणः** । एवमादिभिः सप्तभिः वृत्तिभेदैर्भिन्नः प्राणाख्यो वायुः सप्त सूर्या इति केचिदाचार्या आहुः । प्राणिनां जीवननिमित्तभूतानि **जीवा**ख्यानि तत्त्वानि महदादिपृथिव्यन्तानि सप्तसूर्या इत्यन्ये । तेषामधिष्ठातारः सप्तक्षेत्रज्ञा इति केचित् । इन्द्रियाणां चक्षुरादीनां मनोबुद्धिसहिता-

**शीर्षण्याः प्राणाः । सूर्या इत्याचार्याः । [5]अपश्यमहमेतान्थ्सप्त सूर्यानिति । पञ्चकर्णो वात्स्यायनः । सप्तकर्णश्च प्लाक्षिः ॥ २१ ॥ आनुश्रविक एव नौ कश्यप इति । [6]उभौ वेदयिते । न हि शे-**

---

नामधिष्ठातारः क्षेत्रज्ञाः सप्तेत्यपरे । तेषामेवेन्द्रियाणां स्वकार्यकरणलक्षणजीवननिमित्तभूताः स्वसामर्थ्यविशेषाः सप्तेत्येके । द्वे चक्षुषी द्वे नासिके द्वे श्रोत्रे एकमास्यमिति **सप्त शीर्षण्याः प्राणाः** शिरसि भवाः प्राणनहेतवः सप्तसूर्या इत्यन्ये । **इति** एवं **आचार्याः** बहुधा आचक्षते; याथात्म्यं न जानन्तीति यावत् ॥

[5]अथ **अपश्यं** चक्षुर्भ्यामेव दृष्टवान् **एतान् सप्तसूर्यान्** याथातथ्येन जानामि **इति पञ्चकर्णो** नाम **वात्स्यायनः** वत्सस्य पुत्रः । तथा **सप्तकर्णो** नाम **प्लाक्षिः** प्लक्षपुत्रः । इदं चाप्याहतुः—यः अष्टमः सूर्याणां **कश्यपो** नाम सः **नौ** आवयोः **आनुश्रविक एव** । अनुक्रमेण श्रवणमनुश्रवः तत्र भवः आनुश्रविकः; अध्यात्मादित्वात् ठक् । ‘यत्ते शिल्पं कश्यप’ इत्यादिश्रुतिप्रसिद्ध एवावयोः न कदाचिदप्यावाभ्यां दृष्ट इति ॥

[6]अथैवमुक्तवन्तौ **उभौ** पञ्चकर्णसप्तकर्णौ ऋषी **वेदयिते** बोधयति । वर्णव्यत्ययेन इकारः । को वेदयते ‘गार्ग्यः प्राणत्रातः’ इति वक्ष्यति । प्राणत्रातो नाम गर्गस्यापत्यम् । कथं वेदयते—**न हि** युवां **महामेरुं गन्तुं शेकुमिव** शेकथुरिव । पुरुषवचनवर्णानां व्यत्ययः । नूनं महामेरुं गन्तुं शक्तौ युवां य-

**कुमिव महामेरुं गन्तुम् । अपश्यमहमेतत्सूर्यमण्डलं परिवर्तमानम् । गार्ग्यः प्राणत्रातः । गच्छन्त महामेरुम् । एकं चाजहतम् । [7]भ्राजपटरपतंङ्गा निहने । तिष्ठन्नातपन्ति । तस्मादिह तप्त्रित-**

---

दाहथुः 'आनुश्रविक एव नौ कश्यपः' इति । अहं तु **गार्ग्यः प्राणत्रातः एतत्** अपि **सूर्यमण्डलं** कश्यपमण्डलमपि मेरौ **परिवर्तमानं अपश्यं** तत्रैव गत्वा दृष्टवानस्मि । तस्मात् युवामपि यदि तं दिदृक्षेथे यदि च मेरुं गन्तुं शक्नुथः तर्हि तं **महामेरुं गच्छन्त** गच्छतम् । तशब्दात् परत्रावस्थितो मकारः स्थानव्यत्ययेन पूर्वत्र गच्छतीति । किञ्च—तं च **एकं** प्रधानं सूर्याणां कश्यपं गच्छतं पश्यतं **अजहतं** महामेरुं न जहाति यः; 'स महामेरुं न जहाति' इत्युक्तं स्मारयति । एवमेतौ प्राणत्रातो वेदयत इति ॥

[7]उक्तं मेरुस्थानामेव कश्यपो दृश्यो भवतीति । तत्र सप्तसु सूर्येषु आतपत्सु कथं तदतिलङ्घनेन मेरुर्गन्तव्यः; तस्मादानुश्रविक एव कश्यपस्सर्वेषामिति वचनावसरे सुखगमनं मेरुमार्गमाभ्यां उपदिशति प्राणत्रातः । अत्रारोगप्रवृत्तेः सुप्रसिद्धत्वादितरेषां प्रवृत्तिविशेषं दर्शयति—भ्राजादयः सूर्याः **निहने** वक्ष्यमाणस्य मेरुमार्गस्याधःप्रदेशे **तिष्ठन्** तिष्ठन्तः जनान् **आतपन्ति** अधोमुखत्वात् रश्मीनाम् । विभक्तिवचनयोः व्यत्ययः निपूर्वात् हन्तेः छान्दसोकारप्रत्ययः । यद्वा—निहने निहत्य तिष्ठन्तः । क्त्वार्थे एप्रत्ययः । **तस्मादिह** मनुष्यलोके अन्तरिक्षे च भ्राजादयः त्रयः **तप्त्रितपाः** तप्तृतपसः । तपश्शब्देन रश्मिरु-

पाः ॥ २२ ॥ अमुत्रेतरे । तस्मादिहातप्त्रितपाः । तेषामेषा भवति । [8]सप्त सूर्या दिवमनुप्रविष्टाः । तानन्वेति पथिभिर्दक्षिणावान् । ते अस्मै सर्वे घृ-

---

च्यते । अधस्तात्तापनशीला रश्मयो येषां ते तथोक्ताः । वचनव्यत्ययेनैकवचनम् । यद्वा—तपन्तीति तपाः रश्मयः; पचाद्यच् । तमृन् शत्रून् । छान्दस इकारोपजनः । अथ इतरे स्वर्णरादयः सूर्या अमुत्र परलोकेषु तिष्ठन्त आतपन्ति । तस्मादिह अर्वाचीने मेरुमार्गे ते अतप्त्रितपाः अतप्तपसः, ऊर्ध्वमुखत्वात् रश्मीनाम् । तस्मात् उभयेषां मध्ये सुखशीतलेन पथा मेरुर्गन्तव्य इति । अथ तेषां सप्तानां सूर्याणां मार्गप्रदत्वप्रतिपादिनीयं ऋक् भवति ॥

[8]सप्त सूर्या इति ॥ त्रिष्टुप् । एतां चानियतदेशामुपदधाति । सप्त एते सूर्या दिवं अन्तरिक्षं अनुप्रविष्टाः अनुक्रमेण व्याप्ताः । तान् भक्तेभ्यो मार्गप्रदान् अन्वेति अनुक्रमेण प्राप्नोति । पथिभिः सुखैः मार्गैः । कः? दक्षिणावान् यजमानः अन्विष्टकं विहितदक्षिणादानसम्यङ्निर्वर्तितारुणकेतुकाग्निचयनसमासादितभगवत्प्रसाद इत्यर्थः । इदानीं न केवलं पथिलाभ एव, अपि तु सत्कारविशेषानप्यस्य कुर्वन्तीत्याह—ते इति । ते सप्तसूर्याः सर्वे अपि अस्मै यजमानाय अनपस्फुरन्तः सुष्ठु स्फुरमाणा ऊर्जं रसवत् घृतं मध्वादि दुहाना अपहरन्त एव आतपन्ति । तत्रतत्र गतायास्मै घृतकुल्यादिकं ददति 'अहो स्वागतम् । इहास्यताम् । इदं भुज्यतां' इति वदन्ति । आतपन्ति स्थानविशेषं भोग्यविशेषं च प्रकाशयन्ति । एवमारुणकेतुकचितां स्थान-

तमातपन्ति । ऊर्जं दुहाना अनपस्फुरन्त इति ।
[9] सप्तर्त्विजस्सूर्या इत्याचार्याः । तेषामेषा भवति ।
[10] सप्तदिशो नानासूर्याः ॥ २३ ॥ सप्तहोतार ऋ-

---

त्वेन प्रतिपादनात् सप्तसूर्या अपि तत्र पूर्वं गताः आरुणकेतुकचित इति दर्शितं भवति ॥

[9]अथ अपरे **आचार्याः सप्तर्त्विजः** सप्तहोत्राः सप्त **सूर्या इति** आहुः । ते च धिष्ण्यवन्तो होतृप्रभृतयः । **तेषां** ऋत्विगात्मनां सूर्याणां प्रतिपादिका **एषा** ऋक् **भवति** ॥

[10]सप्तदिश इति ॥ अनुष्टुबेषा । एतां चोपदधाति अनियतदेशाम् । अत एव लिङ्गात् सत्रे आरुणकेतुको नास्तीत्याहुः, ये यजमानाः ते ऋत्विज इति तत्र ऋत्विजामभावात् । अन्ये तु यजमाना एव तत्र ऋत्विजः सन्तीति तत्राप्यस्तीत्याहुः । **सप्तदिशो नानासूर्याः** पृथक्पृथक् विभिन्नाः सूर्याः सन्तीत्यर्थः । प्राची सूर्यवतीति प्रसिद्धा । अन्या अपि सप्त सूर्यवत्य एव, तत्कार्यस्य प्रेरणादेर्दर्शनात् । अथ **सप्तहोतारः** होतृकाः होतृप्रभृतयः ऋत्विजः सप्तसूर्याः तत्कार्यकारित्वात् । तदेवाह—**देवा आदित्याः** द्योतनस्वभावाः आदित्याः रसादानशीलाः ये ऋत्विगात्मानः **सप्त** सूर्याः **तेभिः** तैः **सोमाभिः** सावकस्वभावैः । सूतेः 'अन्येभ्योऽपि दृश्यते' इति मनिन् । छान्दसं दीर्घत्वम् । **रक्षणः** लक्षणः लक्षणीयः कालः वैलक्षण्यं भजते । तस्मात् कालवैलक्षण्यहेतुत्वादेषां सूर्यत्वमिति सम्यक् निवृत्तिहेतुत्वात् कालधर्माणाम् । वर्णव्यत्ययेन रेफे 'रोरि' इति लोपे 'ढ्रलोपे'

त्विजः । देवा आदित्या ये सप्त । तेभिस्सोमाभी रक्षण इति । [11]तदप्याम्नायः । दिग्भ्राज ऋतून्करोति । एतयैवावृताऽऽसहस्रसूर्यताया इति वैशम्पायनः । तस्यैषा भवति । [12]यद्द्याव इन्द्र ते शतꣳ-

इति दीर्घत्वम् । यद्वा—रक्षणः लक्षणो लक्षणीयो लोको भवत्येतैः, तस्मादेते सप्तसूर्या इति । लिङ्गव्यत्ययो वा । एतैः लोकानां रक्षणं भवति, तस्मादेते सूर्या इति ॥

[11]ननु ऋत्विजां सूर्यत्वप्रतिपादनाय इयमृगुपादीयते । तत्र 'सप्तदिशो नानासूर्याः' इत्यंशस्याप्रस्तुताभिधानत्वं स्यात् । तत्राह—तदप्याम्नाय इति ॥ तादृशोपि **आम्नायः** अस्त्येव । कीदृश इत्यत आह—दिग्भ्राज ऋतून् करोतीति । दिशां भ्राजः प्रकाशकाः **दिग्भ्राजः** तादृशाः सप्तसूर्याः सन्ति । ते **ऋतून् करोति** ऋतुधर्मान् प्रवर्तयन्तीति । व्यत्ययेनैकवचनम् । तस्मात्तेषां सूर्याणां आम्नायान्तरप्रसिद्धत्वात् तत्प्रतिपादनस्य चापेक्षितत्वात् नाप्रस्तुताभिधानदोष इति । एवं **एतया आवृता** कर्मणा कार्यभेदनिबन्धनकारणभेदकल्पनया नानासूर्यत्वं कल्पनीयं **आसहस्रसूर्यतायाः** उपलक्षणत्वात् ततोप्यधिकाः कल्प्या इति **वैशम्पायन**नामा ऋषिराह । **तस्य** अर्थस्य प्रतिपादिका **एषा** ऋक् **भवति** ॥

[12]यद्द्याव इति ॥ वैशम्पायनदृष्टस्यार्थस्य इयमृक् प्रतिपादिका । तस्मादृषिरयमस्याः । न तु वैशम्पायनमभिवदति । इयं च संस्तारबृहती । एतां चानियतदेशामुपदधाति । व्याख्याता

शतं भूमीः । उत स्युः । न त्वां वज्रिन्त्सहस्रꣳ सूर्याः ॥२४॥ अनु न जातमष्ट रोदसी इति । [13]नानालिङ्गत्वादृतूनां नानासूर्यत्वम् । अष्टौ तु व्यवसिता इति । सूर्यमण्डलान्यष्टांत ऊर्ध्वम् । तेषां-

चेयं 'नवो नवः'* इत्यत्र । हे इन्द्र वज्रिन्! तव द्यावः द्योतनशीलाः शतंशतं भूमीः भूमिकाः यत् यदि उत स्युः अपि स्युः यथा वयं शृणुमः यदि तथा ताः सर्वा अपि भवेयुः तदा त्वां रोदसी रोदस्योः जातं सहस्रं अपि नाना सूर्याः नान्वष्ट नाश्नुवते तेजसा त्वां न प्राप्नुवन्ति । अश्नोतेः छान्दसो लङ् । विकरणस्य लुक् । वचनव्यत्ययेनैकवचनम् ॥

[13]कथमिदमुपपद्यत इत्याह—नानालिङ्गत्वादृतूनां इति ॥ फलकुसुमविशेषसमृद्ध्यादिभिः नानाभूतैः लिङ्गैः नानासूर्यत्वमनुमीयते। यद्येक एव सूर्यस्स्यात् तस्यैकस्वभावत्वात् वसन्तादीनां विलक्षणधर्मत्वं न स्यात् । तस्मादृतूनां नानालिङ्गत्वात् नानासूर्यत्वं प्रतिकार्यं सूर्यानेकत्वं सिद्धम् । अष्टौ एव तु सूर्या व्यवसिताः विनिश्चिताः अकाल्पनिका इति प्रायशः सर्वाचार्यमतम्। अत ऊर्ध्वं तेषां सूर्याणां अष्ट मण्डलानि उच्यन्ते तत्र चोक्ता आरोगादयः कश्यपान्ताः । तेषां कश्यपः प्रकृतिः 'कश्यपादुदिताः सूर्याः'† इति । द्वितीयादीनि च मण्डलानि अतिदवीयस्तया नोपलभ्यन्ते, प्रथमेन व्यवहितत्वाद्वा । प्रथमस्य मण्डल-

*तै. सं. २-४-१४. †आ. १-८.

मेषा भवंति। [14]चित्रं देवानामुदंगादनीकम् । चक्षुं-

स्य चत्वारि सहस्राणि चत्वारि शतानि दशोत्तराणि योजनानि व्यासः । अष्टौ धनुस्सहस्राणि एकं योजनम् । यथाऽऽहुः—

नृषि योजनं ञिला भूव्यासोऽर्केन्द्वोर्घ्रिञा गिणक मेरोः ॥*

इति । अथ कियत्युच्छ्राये मण्डलमिदं परिवर्तते । उच्यते— 'खयुगांशे ग्रहजवः'* इति आकाशकक्ष्यायाः सवितृभगणैः विंशतिसहस्राधिकत्रिचत्वारिंशल्लक्षसंख्यैः हृत्वा लब्धं सवितुः कक्ष्यापरिधिप्रमाणं योजनानि अष्टाविंशतिलक्षाणि सप्ताशीतिसहस्राधिकानि षट्च शतानि षट् †षष्ट्यधिकसाग्राणि । अथाकाशकक्ष्यायोजनान्युच्यन्ते शून्याम्बराकाशरसस्वरेषुशून्ययमाद्रिवेदाद्रिवेदरवयः‡ एतावत्परिधिकं रवेर्मयूखास्समुद्योतयन्ति । इयमेवाकाशकक्ष्या; अन्यथा ह्यपरिमितत्वादाकाशस्य परिमाणोपदेशो न घटते । सवितृकक्ष्यापरिधेः त्रैराशिकेन सवितृकक्ष्यापरिधिविष्कम्भो लभ्यते । स च चतुर्दश§सहस्राधिका नवलक्षकाः एकषष्टिश्च साग्राः । तदर्धं रविभूम्यन्तरालयोजनानि सप्त¶पञ्चाशत्सहस्राधिकाश्चत्वारो लक्षाः त्रिंशच्च साग्राणि । अतः पञ्चविंशत्यधिकपञ्चशतप्रमाणे भूव्यासार्धे शुद्धे शुद्धशिष्टं भूसवित्रन्तरालयोजनानि षट्पञ्चाशत्सहस्राधिकाश्चत्वारो लक्षाः साग्रपञ्चाधिकानि च पञ्च शतानि । एवमार्यभटीया आहुः । पौराणिकैस्तु बहुधोक्तमिति अलमतिप्रसङ्गेन ॥

[14]अथ तेषां सूर्यमण्डलानां प्रतिपादिका इयमृक् भवति । चित्रं

*आर्यभ. सू. ६, ५.

†अष्टौ च शतानि अष्ट.

‡...षुशून्ययमाद्रिसागराद्रिवेदरवयः.

§षोडश.

¶अष्ट.

**मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः । आऽप्रा॒ द्यावा॑पृथि॒वी अ॒न्त-रि॑क्षम् । सूर्य आ॒त्मा जग॑तस्त॒स्थु॑षश्चे॒ति ॥ २५ ॥**

**सा॒कं प्र॒क्षिस्त॒प्त्रि॑त॒पा नाना॑सू॒र्या॒-स्सू॒र्या॒ नव॑ च ॥ ७ ॥**

**[1]क्वे॒दम॒भ्रं नि॑वि॒शते । क्काय॒ꣳ सं॑व॒थ्स॒रो मि॑थः ।**

---

देवानामिति ॥ त्रिष्टुबियम् । एतां चोपदधाति । व्याख्यातेयं 'नवो नवः'* इत्यत्र । **चित्रं** चायनीयं **देवानां** सर्वेषां **अनीक**स्थानीयं मित्रादीनां चक्षुस्थानीयं इदं मण्डलं **उदगात्** उद्गच्छति । जातावेकवचनम् । एवंभूतानि मण्डलान्युद्यन्तीति । केचिदाहुः देवानां देवनशीलानां मण्डलानां अनीकं परम्परा उदेतीति । उदेत्य च **द्यावापृथिवी अन्तरिक्षं** च इदं मण्डलं स्वतेजसा **आऽप्राः** आपूरयति । पुरुषव्यत्ययः । **जगतः तस्थुषश्च** जङ्गमस्य स्थावरस्य सर्वस्य प्रकाशकत्वात् **आत्म**स्थानीयः **सूर्यः** प्रबोधादिप्रदानेन विश्वस्य प्रेरकं प्रसावकं च सूर्यशब्दवाच्यं मण्डलमिदमित्थं करोतीति ॥

इत्यारण्यके प्रथमे सप्तमोनुवाकः.

---

[1-2]अथ संवादावुपदधाति—क्वेदमिति ॥ अनुष्टुभौ । आपो बिभर्तीत्यभ्रम् । तच्च गौरवप्रतिपादनार्थमुक्तम् । **क्व** आधारे इदं दृश्यमानं **अभ्रं निविशते** । आधेयतया वर्तते आधार-

---

*सं. २-४-१४.

**क्वाहः क्वेयं देवरात्री । क्व मासा ऋतवश्श्रिताः । [2]अर्धमासा मुहूर्ताः । निमेषास्त्रुटि*भिस्सह । क्वेमा**

विशेषाभावे ह्ययोगोल्या[1]दिवत् इदं पतेत् । यद्वा—कुत्र कारणवस्तुनि इदं कार्यात्मकं निविशते अवतिष्ठते । **अयं संवत्सरः** मिथस्स्वभावः **मिथः** विभिन्नावयवारब्धः **क्व** निविशते इत्येव । सङ्गम्य वसन्त्यस्मिन् कालविशेषा इति संवत्सरः । तस्मात् विशिष्टेनाधारेण कारणेन वा भवितव्यमिति प्रश्नः । इदानीं तानेव कालविशेषान् ऐकदेश्येन व्याचष्टे—**क्व अहः** दिवसः **क्व च इयं रात्री** । 'रात्रेश्चाजसौ' इति ङीप् । हे **देव**! सर्वस्य विधातः इदं नो वक्तुमर्हसीति । **क्व मासाः** सौरसावनचान्द्रनाक्षत्राः **श्रिताः** । क्व च **ऋतवो** वसन्ताद्याः श्रिताः । **क्वार्धमासाः** मासानां अर्धानि । 'अर्धं नपुंसकम्' इति समासः । क्व च **मुहूर्ताः** घटिकाद्वयात्मिकाः । क्व च **निमेषाः** प्राणात्मिकाः **त्रुटिभिस्सह** त्रुटयश्च क्वेति यावत् । त्रुट्यो नाम तत्पराशतभागाः । यथोक्तम्—

**पराच्छततमो भागस्त्रुटिरित्यभिधीयते ॥**

अन्ये आहुः—'द्व्यणुकप्रमाणाः त्रुटयः' इति । **क्व च इमाः** परिदृश्यमानाः **आपः निविशन्ते** । **यदि** घनाः **इतो** भूमेः **यान्ति** गच्छन्ति **सम्प्रति** इदानीं क्वेमा वर्तन्ते आपः पुनः पृथिवीसंयोगात् कुत्रासामवस्थानम् । यद्वा—'यदीतो यान्ति संप्रति' इति सर्वशेषोऽयं, यदि यदा इतो गच्छन्ति अभ्रादयः संप्रति तदानीं क्व एतेषामवस्थानमिति ॥

*स्तुटि. [1]गोला.

**आपो निविशन्ते । यदीतो यान्ति संप्रति । [3]काला अप्सु निविशन्ते । आपस्सूर्ये समाहिताः । अभ्राण्यपः प्रपद्यन्ते । विद्युत्सूर्ये समाहिता । [4]अनवर्णे इमे भूमी । इयं चासौ च रोदसी । किꣳस्वि-**

[3]अथ तिस्र उपदधाति—काला इति ॥ द्वे अनुष्टुभौ । इतरा द्विपदा गायत्री । **कालाः** पूर्वोक्ताः संवत्सरादयः ते **अप्सु निविशन्ते** अपामुत्पत्तौ व्यापृताः सर्वे कालावयवाः । यद्वा—काला अप्सु कार्यतया निविशन्ते; अद्भिः कालावयवा उत्पद्यन्ते, सर्वयोनित्वात्तासाम् । **आपः** च इतो याताः **सूर्ये समाहिताः** सम्यगाहिता निहिताः । **अभ्राणि** अपि **अपः प्रपद्यन्ते** तदुत्पत्तौ व्याप्रियन्ते । **विद्युत्** च **सूर्ये समाहिता** सम्यक् निहिता, तदीयरश्मिजन्यत्वात् । अत्र 'क्व विद्युन्निविशते' इति प्रश्नः उन्नेयः ॥

[4]अथ द्यावापृथिव्योः विधारकं पिपृच्छिषुः प्रथमं ते स्तौति—अनवर्णे इति ॥ **अनवर्णे** अनेकरूपे, 'इयं वै रजता । असौ हरिणी'* इति दर्शनात् । 'अन इति निपातोऽनेक वचनः' । यद्वा—नञ एव तत्पुरुषश्च बहुव्रीहिः† । यद्वा—नशब्दस्य बहुव्रीहिः नञस्तत्पुरुषः; । यद्वा—अवर्णः अरूपं अवद्यं; नञस्तत्पुरुषः; ततः तद्रहिते अनवर्णे अनवद्ये; बहुव्रीहिः । ईदृश्यौ इमे भूमी द्यावापृथिव्यौ । तदेवाह—इयं चासौ च रोदसी । रोदशब्दवाच्ये रोदनाधारभूते प्रजापतेः । अत्र भूमिशब्देन द्यौरप्युच्यते । दिव्यपि हि पृथिवीनामानि दृश्यन्ते । यथा 'यो द्वितीयस्यां तृतीयस्यां'‡ इति । यद्वा—विश्वभूतभवनाधारभूते इमे

*ब्रा. १-८-९. †एव द्वौ तत्पुरुषबहुव्रीही, ‡सं. १-२-१२.

**दन्त्रान्तरा भूतम् । येनेमे विधृते उभे । [5]विष्णुना विधृते भूमी । इति वत्सस्य वेदना । [6]इरावती धेनुमती हि भूतम् । सूयवसिनी मनुषे दशस्ये ॥**

---

भवतः अनवद्ये चेति । अथ एवम्भूते इमे रोदसी **येन विधृते** विविधधृते पृथक्त्वेनासंकलिते येन तिष्ठतः तादृशमहिमशाली कः। **अत्र** अनयोः **अन्तरा** मध्ये **भूतं** विद्यमानं **किं स्वित्** वस्तु स्यात् । किमिति प्रश्ने, स्विदिति वितर्के ॥

[5]अत्रोत्तरं—विष्णुनेति ॥ अत्र सूर्यप्रकरणत्वात् उपसंहारे च ‘ अग्नयो वायवश्चैव । एतदस्य परायणम् । ’ इति त्रिस्थानस्थानां अग्निवायुसूर्याणां मध्ये स्वरूपेणाग्निवायूपादाने सूर्यस्यैव पारिशेष्यसिद्धेः सूर्यस्यैव विधारकत्वं प्रतिपादयिष्यन् विष्णुत्वेन सूर्यं व्यपदिशति । **विष्णुना** व्यापकेन इमे उभे अपि व्याप्य तिष्ठता भगवतैव इमे **विधृते** भवितुमर्हतः, अन्येनाशक्यत्वात् यद्वा—सूर्यस्थो विष्णुरेव इह विष्णुः । अतस्ते विधारयन्नयं अतुल्यमहिमा सूर्यः **इति वत्सस्य** ऋषेः **वेदना** ज्ञानं समजनीति ॥

[6]अथैकामुपदधाति—इरावती इति ॥ त्रिष्टुबेषा । **इरावती** इरावत्यौ उदकवत्यौ **धेनुमती** प्रीणनत्वेन धेनुस्थानीयैः निधानैः तद्वत्यौ, गोमत्यौ वा । **सूयवसिनी** शोभनैः भक्ष्यैः तद्वत्यौ **मनुषे** मनुष्यार्थं **दशस्ये** दानार्हे दातुं समर्थे । ‘ दाशृ दाने ’ इति धातोः ह्रस्वत्वं, ‘ छन्दसि च ’ इति यः । मनुष्यशब्दपर्यायो मनुश्शब्दस्सान्तः । इत्थं रोदसी **भूतं** अभूतां परिनिष्पन्ने । पुरुषव्यत्ययः । ‘ बहुलं छन्दस्यमाङ्योगेऽपि ’ इत्य-

**व्यष्टभ्नाद्रोदसी विष्णवेते । दाधर्थ पृथिवीमभितो मयूखैः । [7]किं तद्विष्णोर्बलमाहुः । का दीप्तिः किं परायणम् । एको यद्धारयद्देवः । रेजती रोदसी**

---

डभावः, 'हि च' इति निघाताभावः, छान्दसो वा लुङ् । मनुष्यार्थं ईदृश्यौ इमे भवतामिति **व्यष्टभ्नात्** विष्टभ्नाति द्वे **एते** । यद्वा—निष्ठायां लिङ्गवचनयोर्व्यत्ययः—ईदृश्यौ भूते संपन्ने रोदसी व्यष्टभ्नात् व्यष्टभ्नाः । छान्दसो लुङ् । विष्टभ्नासि । पुरुषव्यत्ययः, 'स्तन्भुस्तुन्भु' इति श्नात्प्रत्ययः, 'स्तम्भेः' इति षत्वम् । हे **विष्णो** व्यापक विष्णुस्थानीय सूर्य **दाधर्थ** धारयसि । छान्दसो लिट् । 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । **अभितः** अध उपरि च **पृथिवीं** भूमिं दिवं च **मयूखैः** शंकुस्थानीयैः रश्मिभिः अधोमुखैः इमां धारयासि पृथिवीं, ऊर्ध्वमुखैः अमूं धारयसि । पृथिवीशब्दो दिव्यपि वर्तते इत्युक्तम् । तस्मादयं सूर्यो मयूखैः लोकद्वयं धारयन् व्याप्नुवन् विष्णुवद्धारयतीति स्तुतिः ॥

[7]अथ तिस्र उपदधाति—किं तदिति ॥ द्वे अनुष्टुभौ । इतरा द्विपदा गायत्री । उक्तं विष्णुरूपेण सूर्यः स्तूयत इति । अथ तस्य **विष्णोः** विष्णुस्थानीयस्य सूर्यस्य **तत्** तादृशं **बलं** विश्वप्रतिष्ठाहेतुभूतं प्रवृत्तिसामर्थ्यं **किं आहुः** किन्निबन्धनमाहुः मन्त्रदृशः । बल प्रतिष्ठायाम् । अथ **का दीप्तिः** किन्निबन्धना तस्य दीप्तिः दीपनसामर्थ्यं प्रकाशकत्वम् । अथ **किं परायणं** एतत्कुर्वतोऽस्य परममाश्रयणं सहायभूतं भवति । अथ **एकः** एव **देवो रेजती** राजमाने अनुपक्षीणे **रोदसी** उभे **यत्** येन **धारयत्** तादृशं

उभे । [8]वाताद्विष्णोर्बलमाहुः । अक्षराद्दीप्तिरुच्यते । त्रिपदाद्धारयद्देवः । यद्विष्णोरेकमुत्तमम् ॥ २८ ॥

चास्य व्यापनसामर्थ्यं प्रकाशकत्वं किंपरायणं किंनिबन्धनम् । छान्दसो लुङ्, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । राजतेः छान्दसमेत्वम् ॥

[8]उत्तरम्—वातादिति ॥ सर्वप्राणि*प्रवृत्तिनिबन्धनं क्रियाशक्त्यात्मकं प्रधानं वातशब्देनोच्यते । यथोक्तं 'वाताद्वा अध्वर्युर्यज्ञं प्रयुङ्क्ते '† इति 'वाते वाते यज्ञः प्रतितिष्ठति '‡ इति । तस्मात् **वातात्** अस्य **विष्णोः** व्यापिनः सूर्यस्य **बलं** प्रवृत्तिसामर्थ्यं **आहुः** मन्त्रदृशः तद्वशीकारातिशयविशेषेण प्रकाशसामर्थ्यातिशयोऽस्येति । अथ **अक्षराद्दीप्तिरुच्यते** अस्य मन्त्रदृग्भिः । देशतः कालतश्च न क्षरतीत्यक्षरं ब्रह्म प्रधानपुरुषयोर्नियन्ता ईश्वरः । तत्प्रत्यासत्तिविशेषेण प्रकाशसामर्थ्यातिशयोऽस्येति । यथा 'तमेव भान्तमनुभाति सर्वं '§ इति । **त्रिपदाद्धारयद्देवः** इति । पञ्चविंशः पुरुषः पादः, परमात्मा त्रिपात् । यथा- 'त्रिपादूर्ध्व उदैत्पुरुषः '¶ इति । यः त्रिभिः पादैः अमृतं व्याप्नोति पादेन विश्वं** तदैक्यादेव देवः सूर्यो धारयति रोदसी । यथा—'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः ।'†† इति । अथ कीदृशस्त्रिपादित्यत आह—तद्विष्णोरेकमुत्तममिति । **यत् विष्णोः** विश्वव्यापिनः भगवतः **एकं** प्रधानं **उत्तमं** उद्गततमं स्वरूपं तादृशं त्रिपादस्य व्यापनसामर्थ्यं तदैक्यसमासादितव्यापनसामर्थ्यातिशयो धारयतीति । त्रीणि पदानि

*सर्वप्राणादि. †ब्रा. ३-३-९. ‡
§मु. २-२-११. ¶आ. ३-१२. **मूर्तं. ††उ. २-८.

[9]अ॒ग्नयो॑ वा॒यव॑श्चै॒व । ए॒तद॑स्य प॒राय॑णम् । [10]पृ॒च्छामि॒ त्वा॒ प॒रं मृ॒त्युम् । अ॒व॒मं म॑ध्य॒मं चं॒तुम् । लो॒कं च॒ पुण्य॑पापा॒नाम् । ए॒तत्पृ॑च्छामि॒ संप्र॑ति । [11]अ॒मु॒मा॑हुः प॒रं मृ॒त्युम् । प॒वमा॑नं तु॒ म॒ध्यम॒म् । अ॒-

पादा अस्येति त्रिपदः तस्मात् । यद्वा—त्रयः पादा अस्येति बहुव्रीहिः । 'संख्यासुपूर्वस्य' इति लोपः समासान्तः, पञ्चम्येकवचने 'पादः पत्' इति पद्भावः । 'सुपां सुलुक्' इति पञ्चम्या आदादेशः ॥

[9]**अग्नयो वायवश्चैव** इति ॥ **एतदस्य परायणं** एत एव परमसहायाः त्रिस्थानस्था ह्यग्निवायुसूर्याः परस्परोपकार्योपकारिभावेन लोकत्रयं धारयन्तीति । सावित्रादयः पञ्चाग्निविद्याः 'अग्नयो वायवश्च' इत्युच्यन्ते इत्येके ॥

[10]अथ मृत्युमतीश्चतस्र उपदधाति—पृच्छामि त्वेति ॥ तिस्रोऽनुष्टुभः । इतरा द्विपदा गायत्री । हे भगवन् ! त्वा त्वां **पृच्छामि परं मृत्युं** मारयितारं प्रजानां **अवमं** निकृष्टं च पृच्छामि **मध्यमं** नातिपरं नात्यवमं च पृच्छामि । **चतुं** चतुर्थं च पृच्छामि । चतुर्णां पूरणः चतुः । 'तस्य पूरणे डट्', तस्य व्यत्ययेनोकारः, थुगागमाभावः । अथ **संप्रति** इदानीं मृत्युप्रश्नादनन्तरं **पुण्यपापानां लोकं** सुकृतदुष्कृतानि यत्र स्थाने पुरुषं नयन्ति **एतत् च पृच्छामि** । एतदिति लिङ्गव्यत्ययः, क्रियाविशेषणं वा ॥

[11]अथोत्तरं—**अमुं** आदित्यं **परं मृत्युं आहुः** मन्त्रदृशः, जन्ममरणव्याध्यादिनिकृष्टकारणत्वात् । **पवमानं** वायुं **मध्यमं** मध्य-

ग्निरेवावमो मृत्युः । चन्द्रमाश्चतुरुच्यते ॥ २१ ॥
[12]अनाभोगाः परं मृत्युम् । पापास्संयन्ति सर्वदा ।
आभोगास्त्वेवं संयन्ति । यत्र पुण्यकृतो जनाः ।
[13]ततो मध्यममायन्ति । चतुमग्निं च संप्रति । [14]पृ-

---

स्थानं मृत्युं आहुः । अग्निरेव अवमो मृत्युः उच्यते । **चन्द्रमाः चतुः** चतुर्थो मृत्युः **उच्यते** ॥

[12]**अनाभोगाः** आभोगवर्जिताः क्षुद्रजन्तवः कृमिकीटादयः **पापाः** पापाभिभूताः **परं मृत्युं** आदित्यं **सर्वदा** असकृत् **संयन्ति** प्राप्नुवन्ति तद्रश्मिस्पर्शमात्रेण मृत्युं प्राप्नुवन्तः तं मृत्युं प्राप्नुवन्तीत्युच्यते । ते हि पापाः पापमात्रवन्तः **अनाभोगाः** आभोगवर्जिताः अहरहः जायन्ते म्रियन्ते चेति आभोग्यपुण्यसंपादनायोग्या भवन्ति । ते असकृदावर्तिनो जन्तवः परं मृत्युं संयन्ति । अथ **आभोगा** इति । **आभोगा** आभोगवन्तः । मत्वर्थीयोकारः । ते हि सुकृतबलेन परं मृत्युमतीत्य असकृदावर्तित्वं हित्वा तत् **एव** स्थानं **संयन्ति यत्र पुण्यकृतो जनाः** वर्तन्ते ॥

[13]**ततो मध्यमं** वायुं **आयन्ति** तेन प्रेर्यमाणा भवन्ति । ततः **चतुं** चन्द्रमसं जन्मकाले आयन्ति । ततः **अग्निं** पार्थिवं **संप्रति** सम्यक् जायमाना भवन्ति । एवमनेन क्रमेण वर्तन्ते आभोगिन इति ॥

[14]अथ यमवतीश्चतस्र उपदधाति—**पृच्छामि त्वा पापकृत इति** ॥ सर्वा अनुष्टुभः । हे **ब्रह्मन्** ! परिबृढश्रुत ! **त्वा** त्वां **पृच्छामि** ।

च्छामि त्वा पापकृतः । यत्र यातयते यमः । त्वं
नस्तद्ब्रह्मन्प्र ब्रूहि । यदि वेत्थासतो गृहान् ॥३०॥
15 कश्यपादुदितास्सूर्याः । पापान्निर्घ्नन्ति सर्वदा ।
रोदस्योरन्तर्देशेषु । तत्र न्यस्यन्ते वासवैः ।
16 तेऽशरीराः प्रपद्यन्ते । यथाऽपुण्यस्य कर्मणः ।

---

किमिति चेत्—**पापकृतः** प्राणिनो **यत्र** स्थाने **यातयते** क्लेशयति **यमः** तत्स्थानं पृच्छामि । तत् स्थानं **नः** अस्मभ्यं **प्रब्रूहि** यदि त्वं **असतः** पापिनो जन्तोः **गृहान्** स्थानानि **वेत्थ** जानासि इदं प्रब्रूहीति ॥

[15]अथोत्तरं—**कश्यपादुदिताः** लब्धज्योतिषः **सूर्याः पापान्** क्षुद्रजन्तून् **निर्घ्नन्ति** निष्कृष्य नाशयन्ति **सर्वदा** पुनःपुनः जातान् **रोदस्योः** द्यावापृथिव्योः **अन्तर्देशेषु** स्थलजलान्तरिक्षजाता ये रश्मिसंस्पर्शमात्रेण नश्यन्ति । अथ **तत्र** एव ते जन्तवः पुनरपि **न्यस्यन्ते** जायमानाः स्थाप्यन्ते **वासवैः** वसवो रश्मयः त एव वासवाः, स्वार्थिकोऽण् । स्वेदपाकादिकारिणो रश्मयः पुनरपि तत्प्रभावात् जन्तून् जनयान्ति ॥

[16]अथ **ते अशरीराः** विकृत*शरीरा वा प्रपद्यन्ते प्राप्नुवन्ति कर्मपाकं कीदृशं **यथा अपुण्यस्य** पापस्य आत्मीयस्य सदृशं तादृशं पाकं प्रपद्यन्ते । तदेव दर्शयति—**अपाणयः** केचिज्जायन्ते । **अपादाः** केचित्—पादस्य लोपः समासान्तः छान्दसः ।

---

*अविकृत.

**अपाण्यपादकेशासः । तत्र तेऽयोनिजा जनाः । [17]मृत्वा पुनर्मृत्युमापद्यन्ते । अद्यमानास्स्वकर्मभिः ॥ ३१ ॥ आशातिकाः क्रिमय इव । ततः पूयन्ते वासवैः । [18]अपैतं मृत्युं जयति । य एवं**

**अकेशाः** केचित् । 'आज्जसे रसुक्' समासनिर्देशः पाणि[णिसाहि]तादिसमुच्चयोऽपि यथा स्यादिति । यथा—केचित् पाणिरहिताः केचित् पादरहिताः केचित् केशरहिताः* केचित् सर्वरहिताः इति । एवं **तत्र** रोदस्योरन्तर्देशेषु **अयोनिजा जनाः** स्वेदादिप्रभवाजन्तवो जायन्ते ॥

[17]अथ **मृत्वा** अपि **पुनः** अपि **मृत्युमापद्यन्ते** अवशाः प्राप्नुवन्ति पुनःपुनः जननात् **स्वकर्मभिः** आत्मीयैः कर्मभिः पापलक्षणैः **अद्यमानाः** भक्ष्यमाणाः बलादवशतां नीयमानाः पुनःपुनः जायन्ते म्रियन्ते च । **आशातिकाः क्रिमयः** क्रिमिविशेषा **इव** आगत्य शातयन्ति नाशयन्तीत्याशातिकाः । 'शदेरगतौतः' इति तत्वम् । छान्दस इकारः । स्त्रीलिङ्गो वा संज्ञाशब्दः । आशातिकाः हि आगत्य शातनमात्रफलजीविनः तदानीमेव नश्यन्ति क्षुद्राः । केचिदाहुः—आशिते भवा आशातिकाः । अध्यात्मादित्वात् ठक् । छान्दसो वर्णविकारः । अथ ते जन्तवः **ततः** उत्तरकालं **पूयन्ते** शोध्यन्ते **वासवैः** एव क्षीणपापाः क्रियन्ते । यद्वा—क्लेशानिवृत्तिः पवनम् । ते आहतातपैः† वासवैः निवृत्तक्लेशाः क्रियन्ते जन्तव इति ॥

[18]उत्तरं ब्राह्मणं—**एतं** कृपणं **मृत्युं अपजयति य एवं**

*पाणिरहिताः केचित्पदकेशरहिताः केचित्पाणिकेशरहिताः. †आहतानातपैः.

वेद॑ । स खल्वै॒वं॑विद्ब्रा॒ह्मणः॑ । दी॒र्घश्रु॑त्त॒मो भ॑वति । कश्य॑प॒स्याति॑थि॒स्सिद्धग॑मन॒स्सिद्धाग॑मनः । तस्यै॒षा भ॑वति । [19]आ यस्मि॑न्थ्स॒प्त वा॑स॒वाः । रोह॑न्ति पू॒-

कर्मपाकक्रमं वेद जानाति । अथ 'आ यस्मिन्' इति वक्ष्यमाणाया: आख्यायिकाया: प्रथममेव निर्वचनं ब्राह्मणम्—स खल्विति ॥ **स खलु एवंवित्** कश्यपप्रभाववित् **ब्राह्मणः दीर्घश्रुत्तमो भवति** कश्यपेन दीर्घं चिरकालं श्रूयते अतिशयेनेति दीर्घश्रुत्तमः । कर्मणि क्विप् । कश्यपसकाशे चिरकालं ख्यातो भवति । यद्वा— दीर्घं शृणोत्यतिशयेनेति दीर्घश्रुत्तमः दीर्घायुरिति यावत् । स खल्वैवमिति छान्दसो विकारः । किंच—एवंविद्ब्राह्मणः **अतिथिः** भवति **कश्यपस्य** कश्यपेनापि पूज्यो भवति । यद्वा—सततगमनः सर्वत्राप्रतिहतगतिः भवति । अतेरिथिन्प्रत्ययः । यद्वा—तिथिकृता विशेषा अस्य न सन्तीत्यतिथिः मृत्युहीन इति यावत् । किञ्च—**सिद्धगमनः सिद्धागमनः** च, भवति सिद्धं पर्याप्तमङ्गलं * सर्वैश्वर्ययुक्तं गमनमागमनं च यस्य तादृशो भवति । गमने कर्मत्वं आगमने कर्तृत्वं द्रष्टव्यम् । अथ **तस्य** कश्यपस्य प्रतिपादिका **एषा** ऋक् **भवति** ॥

[19]आ यस्मिन्निति ॥ अनुष्टुबेषा । एतां च दक्षिणतो दर्भस्तम्बस्योपदधाति । व्याख्यातेयं 'इन्द्रं वः'† इत्यत्र । **यस्मिन्** कश्यपे **सप्त वासवाः** वसुमन्तस्सप्त सूर्याः, सूर्याणां वा सप्त रश्मयः आरोहन्ति उत्पद्यन्ते **पूर्व्या रुहः** जगतः पूर्वाङ्कुराः ।

*पर्याप्तफलं.

†सं. १-६-१२.

व्याँ रुहः ॥ ३२ ॥ ऋषिर् ह दीर्घश्रुत्तमः । इन्द्रस्य घर्मो अतिथिरिति । [20]कश्यपः पश्यको भवति । यत्सर्वं परिपश्यतीति सौक्ष्म्यात् । [21]अथाग्नेरष्टपुरुषस्य । तस्यैषा भवति । [22]अग्ने नयं सुपथा राये अस्मान् । विश्वानि देव वयुनानि विद्वान् ।

---

पूर्वा एव पूर्व्याः । तस्य **इन्द्रस्य** उदकस्य द्रावयितुः कश्यपस्य **दीर्घश्रुत्तमो** नाम ऋषिः **घर्मः** दीप्ततेजाः **अतिथिः** भवति । एवं महाप्रभावः कश्यप इति ॥

[20]अधुना कश्यपं पदनिर्वचनेन स्तौति ब्राह्मणं—**पश्यकः** असौ वर्णव्यत्ययेन **कश्यप** उच्यते । कश्यपत्वं तर्हि कथमिति चेत् आह—**यत् सर्वं परिपश्यतीति** सर्वतः प्रत्यक्षीकरोति **सौक्ष्म्यात्** तस्मात् पश्यकः वर्णव्यत्ययेन कश्यप इति । 'सखल्वैवं' इति ब्राह्मणशेषः प्रथममेवाम्नातो व्याख्यातश्च ॥

[21]**अथ अग्नेरष्टपुरुषस्य** उपधानक्रम उच्यते—अष्टौ पुरुषाः शरीरभूताः अस्येति अष्टपुरुषः । पूर्ववदष्टावस्थो वा । **तस्य** प्रतिपादिका **एषा** ऋक् **भवति** ॥

[22]अग्ने नयेति । त्रिष्टुप् ॥ व्याख्यातेयं 'उभा वाम्'* इत्यत्र । हे **अग्ने** ! **सुपथा** शोभनेन मार्गेण **अस्मान्** **नय** **राये** धनाय हे **देव** ! **विश्वानि** **वयुनानि** ज्ञानोपायानि **विद्वान्**

---

*सं. १-१-१४.

युयोध्यस्मज्जुहुराणमेनः । भूयिष्ठां ते नमउक्तिं विधेमेति ॥ ३३ ॥

समाहिता दशास्यै उत्तममुच्यते गृहान्थ्स्वकर्मभिः पूर्व्यां रुहं इति ॥ ८ ॥

[1]अग्निश्च जातवेदाश्च । सहोजा अजिराप्रभुः ।

---

युयोधि च अस्मत् अस्मत्तः जुहुराणं कुटिलस्वभावं एनः । ते तुभ्यं भूयिष्ठां नमउक्तिं विधेम इति ॥

इत्यारण्यके प्रथमे अष्टमोऽनुवाकः.

---

[1]अथाग्नेरष्टपुरुषस्य दिक्षु अवान्तरदिक्षु चोपदधाति—अग्निश्चेति॥ नामधेयान्येव मन्त्राः । एषां च प्रतिपादिका इयमध्यर्धर्क्क् । अयं च प्रयोगः 'अग्निश्च तया देवतया' इत्यादि । एवं सर्वत्र । अग्निः अग्रणीर्भवतीति । उत्पन्नमात्र एव जातानि वेदेति जातवेदाः । 'गतिकारकपूर्वस्यापि' इत्यसुन् । जातरश्मिर्वा । सहोजाः बलसहितः । अजिराप्रभुः अजेयश्च प्रभुश्च । जयतेः औणादिको रः, छान्दसो दीर्घः । यद्वा—अजनशीला गत्वरस्वभावा दीप्तयः अजिराः । अजतेः किरच् । तासां प्रभुः जगद्व्यापिकिरणः । वैश्वानरः विश्वेषां नराणां हितत्वेन सम्बन्धी । यद्वा—विश्वस्य नेता विश्वानरः, स एव वैश्वानरः । नृ नये, पचाद्यच् । नर्यापाश्च नर्याणि नेतव्यानि यागादीनि कर्माणि । यतोऽपि ऋहलोः ण्यत् बाध्यते । नरेषु वा भवानि

वैश्वानरो नर्यापाश्च । पङ्क्तिराधाश्च सप्तमः । विसर्पेवाष्टमोऽग्नीनाम् । एतेऽष्टौ वसवः क्षिता इति । [2]यथर्त्वेवाग्नेरर्चिर्वर्णविशेषाः । नीलार्चिश्च पीतकार्चिश्चेति । [3]अथ वायोरेकादशपुरुषस्यैकादशस्त्री-

नर्याणि । 'भवेश्छन्दसि' इति यत् । तेषां पाता । 'आतो मनिन्' इति विचि पूर्ववत् पूर्वपदस्य दीर्घत्वम् । यद्वा—नर्यानाप्नोतीति नर्यापाः 'गतिकारकयोरपि' इत्यसुन् । **पाङ्क्तिराधाः** पङ्क्तिः पञ्चसङ्ख्या तया राध्नोतीति । पूर्ववदसुन् । यथोक्तं 'पाङ्क्तोऽग्निः'* इति । गार्हपत्य आहवनीयो दक्षिणाग्निः सभ्यावसथ्यौ इति पञ्चभिः चितिभिः संराध्नोतीति वा । विविधं सर्पतीति **विसर्पी** कर्मफलानां प्रापयिता । 'सुप्यजातौ' इति णिनिः । संहितायां यणादेशो छान्दसो वर्णलोपः । अयमुक्तानां **अग्नीनां अष्टमः** । **एते** एव **अष्टौ वसवः क्षिताः** अवगताः मन्त्रदृग्भिः । क्षि निवासगत्योः, 'गत्यर्था बुद्ध्यर्थाः' इति । इत्येते अष्टावुपधेया इति इति शब्देन प्रतिपाद्यते ॥

[2]अथ ब्राह्मणम्—यथर्त्विति ॥ यो यस्य आत्मीयः ऋतुरिति यथर्तु । 'यथाऽसादृश्ये' इत्यव्ययीभावः । ऋतुभेदेन **अग्नेरर्चिर्वर्णविशेषाः** प्रादुर्भवन्ति; **नीलार्चिः** क्वचित् **पीतकार्चिः** क्वचिदिति । **एव**शब्दोऽवधारणे यथर्त्वेव, न सर्वकालं सर्वे वर्णविशेषाः अनियमेन भवन्तीति । यद्वा—यथर्तु अग्नेः वर्णविशेषा एव भवन्ति न त्वेको वर्णोऽनुस्यूतः सर्वर्तुष्विति ॥

[3]**अथ** अनन्तरं **वायोरेकादशपुरुषस्य एकादशस्त्रीकस्य** उप-

*आ. १–२५.

**कस्य । प्रभ्राजमाना व्यवदाताः ॥ ३४ ॥ याश्च वासुकिवैद्युताः । रजताः परुषाश्श्यामाः । कपिला अतिलोहिताः । ऊर्ध्वा अवपतन्ताश्च । वैद्युत इत्येकादश । नैनं वैद्युतो हिनस्ति । य एवं वेद ।**
[4]**स होवाच व्यासः पाराशर्यः । विद्युद्वधमेवाहं मृ-**

---

धानक्रम उच्यते—पूर्ववत् पुरुषा वेदितव्याः । स्त्रियस्तु वायोर्वैद्युत्यो नाम । विद्युत एवेति केचित् । नामधेयान्येव मन्त्राः । 'प्रभ्राजमानाः तया देवतया' इत्यादिरुपधानमन्त्रक्रमः । **प्रभ्राजमानाः** प्रकर्षेण विराजमनाः **व्यवदाताः** विशेषेणावदाताः शुद्धाः **या** इति लिङ्गव्यत्ययः । **वासुकिवैद्युताः** वासुकिवत् वर्णतो विद्योतमानाः **रजताः** रजतवर्णाः **परुषाः** रूक्षाः **श्यामाः** श्यामच्छायाः **कपिलाः** कपिलच्छायाः **अतिलोहिताः** अतिलोहितप्रभाः **ऊर्ध्वाः** ऊर्ध्ववृत्तयः **अवपतन्ताः** अधोवृत्तयः । पतेरौणादिको झच् । **वैद्युतः** विद्योतनशीलाः । वचनव्यत्ययः, उपसर्गस्य वा वर्णव्यत्ययः । **इति** एते एकादशवायुगणाः **एनं** एवंवेदितारं **वैद्युतो** वायुगणो विद्युद्भवो वा अग्निः **न हिनस्ति** न हन्ति ॥

[4]अथ कः पुनरस्य वैद्युतस्य वधस्य विशेष इत्याह—**स** खलु **पाराशर्यः** पराशरस्य पुत्रो व्यासः विपुलज्ञानः **उवाच ह** **विद्युद्वधमेव** विद्युत्संपाततो यो वधः मरणं तमेव **अहं मृत्युमैच्छं** इच्छामि, अन्याय्यत्वादस्य मरणस्य । अनेन हि मृताः पापिष्ठाः भवन्ति । तस्मादिदमेव मरणं अन्यान्यमरणानि । तस्मादिदमेक-

**त्युमैच्छमिति । न त्वकामꣳ हन्ति ॥ ३५ ॥ य एवं वेद । [5]अथ गन्धर्वगणाः । स्वान भ्राट् । अङ्घारिर्बम्भारिः । हस्तस्सुहस्तः । कृशानुर्विश्वावसुः । मूर्धन्वान्थ्सूर्यवर्चाः । कृतिरित्येकादश गन्धर्वगणाः । देवाश्च महादेवाः । रश्मयश्च देवा गर-**

मेव मरणं जन्तूनां मा भूत्, सन्त्येवान्यमरणानीत्येवमेव ममेच्छेत्युवाच भगवान् व्यासः । एवंवेदितारं पुरुषं **अकामं** कामरहितं **न तु** नैव **हन्ति** मृत्युः अन्याय्यो विद्युदादिमृत्युः न बाधत इत्यर्थः ॥

[5]**अथ गन्धर्वगणाः** उपधेया उच्यन्ते—स्वान भ्राडिति ॥ पूर्ववन्नामधेयानि मन्त्राः । 'स्वान तया देवतया' इत्यादिः उपधानक्रमः । स्वानेत्यविभक्तिनिर्देशः । 'सुपां सुलुक्' इति सोर्लुक् । शोभनाननः **स्वानः** । भ्राजतीति **भ्राट्** । 'भ्राजभास' इति क्विप् । यद्वा—स्वानश्च भ्राट्चेति समाहारद्वन्द्वः । अङ्घार्यादयः 'सोमं ते क्रीणामि'* इत्यत्र व्युत्पादिताः । अंहसामरिः **अङ्घारिः** । बम्भ्रम्यमाणशत्रुः **बम्भारिः** । हसनशीलः **हस्तः** । शोभनपाणिः **सुहस्तः** । कृशाननुगृह्णातीति **कृशानुः** । कृशाः सर्वेऽपि प्राणिनो यत्रेति वा । **विश्वावसुः** विश्वधनः । 'विश्वस्य वसुराटोः' इति दीर्घत्वम् । **मूर्धन्वान्** शोभनमूर्धा । प्राधान्यात् उच्छ्रितमूर्धत्वाद्वा । 'अनो नुट्' इति नुट् । **सूर्यवर्चाः** सूर्यसमानतेजाः । **कृतिः** कृती कृतकृत्यः । मत्वर्थीय इकारः । **इति** एते एकादश **गन्धर्वगणाः** गन्धर्वाणां

*सं. १-२-७.

**गिरः ॥ ३६ ॥ नैनं गरो हिनस्ति । य एवं वेद ।**
**6गौरी मिमाय सलिलानि तक्षती । एकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी । सहस्राक्षरा परमे व्योमन्निति । 7वाचो विशेषणम् ।**

---

गणाः । एते **देवा** देवनादिगुणयुक्ताः **महादेवाः** महादेवनाः **रश्मयो** रश्मिमन्तः । मत्वर्थीयो लुप्यते । **देवाः** द्योतयितारो लोकानाम् । **गरगिरः** गरमुदकं गिरन्ति पिबन्तीति गरगिरः । गिरतेः रप्किपौ । यद्वा—गरं महान्तं शब्दं गिरन्ति उच्चारयन्तीति गरगिरः । गृणातेः तावेव प्रत्ययौ । एवंवेदितारं **गरो** विषं **न हिनस्ति ॥**

6अथ 'गौरी मिमाय' इत्युपदधाति ॥ व्याख्यातेयं जगती 'उत नः प्रिया'* इत्यत्र । **गौरी** गौरा शुक्ला वा सरस्वती शब्दब्रह्मात्मिका सा **मिमाय** मिमीते परिच्छिनत्ति विश्वम् । **सलिलानि** सलिलविकाराणि भूतजातानि **तक्षती** तनूकुर्वती स्वव्याप्त्या विश्वमल्पं कुर्वती एकपद्यादिरूपेण वर्धमाना अनयैव परिपाट्या **सहस्राक्षरा बभूवुषी** भवन्ती **परमे व्योमन्** व्योम्नि विविधरक्षणके परमप्रकृतौ स्थिता एवं विश्वं† परिच्छिनत्तीति ॥

7इतीदं **वाचो विशेषणं** वाग्विशेष्यते उत्कर्षं वा भजते **येन** तद्वाचो विशेषणं; वाचस्स्तुतिरियं जगतीति यावत् । **अथ** अनन्तरं **निगदव्याख्याताः** सप्तोपधेया ये सन्तिताननुक्रमिष्यामः अनुक्रमेण ब्रूमः । निगद्यमानेन मन्त्रस्वरूपेणैव व्याख्याता इत्येके ।

---

*आ. २-४-६, †स्थित्वा एवं विश्वं स्थितैव विश्वं.

**अथ निगदव्याख्याताः ।ताननुक्रमिष्यामः । [8]वराहवस्स्वतपसः ॥३७॥ विद्युन्मय*सो धूपयः । श्वापयो गृहमेधाश्चेत्येते । ये चेमेऽशिमिविद्वि-**

---

अन्य आहुः—शब्देन व्याख्याताः विशेषेणाभिमुख्येन च ख्याताः लोके ख्यातिं गताः पर्जन्याख्या वर्षोदीरणाः ये सप्त वायवः इति ते च अध्यर्धया गाथया प्रतिपाद्यन्त इति ॥

[8]वराहव इति ॥ अत्रापि नामधेयान्येव मन्त्राः । 'वराहवस्तया देवतया' इत्यादिरुपधानक्रमः । **वराहवः** वरमुदकं आह्वायतीति । ह्वयतेराङ्पूर्वात् क्विपि संप्रसारणे छान्दसो गुणः । यद्वा—मितद्र्वादित्वात् डुप्रत्यये छान्दसे वकारलोपे 'जसि च' इति गुणः । जुहोतेर्वा दानकर्मणः तेनैव डुश्छान्दसः, पूर्वपदस्यात्वम् । अन्य आहुः—वार् जलं, तस्याह्वातारो वराहवः, छान्दसं ह्रस्वत्वमिति । **स्वतपसः** स्वाधीनतपोविशेषलब्धमहिमानः । यद्वा—स्वयमेव तपन्तीति स्वतपसः, 'त्रयस्तपन्ति' इति दर्शनात् वायवोऽपि तपन्तीति । **विद्युन्मयसः** विद्युतो निर्मिमते† उत्पादयन्तीति । 'गतिकारकयोरपि' इत्यसुन् । यद्वा—विद्युद्भिः दयितास्थानीयाभिः मयः सुखं येषाम् । यद्वा—विद्युन्मयाः । 'आज्जसेरसुक्', छान्दसं ह्रस्वत्वम् । **धूपयः** धूपनशीलाः । औणादिक इकारप्रत्ययः । यद्वा—धूपवन्तो धूपयः । मत्वर्थीय इकारः । **श्वापयः** आशुसर्वव्यापिनः । आशुशब्दस्य अक्षरयोः स्थानविनिमयः । आद्यक्षरलोपो वा । पूर्ववदिकारप्रत्ययः । **गृहमेधाः** गृहेषु मेधार्हाः यजनार्हाः गृहेषु यजनीयाधिष्ठातृकाः‡

---

*न्मह. †विद्युतः निर्मलतेजा. ‡यजनीयहविष्कामुकाः.

षः । पर्जन्यास्सप्त पृथिवीमभि वर्षन्ति । वृष्टिभिरिति । एतयैव विभक्तिविंपरीताः । सप्तभिर्वातैरुदीरिताः । अमूँल्लोकानभि वर्षन्ति । तेषामेषा भवति । [9]समानमेतदुदकम् ॥ ३८ ॥ उच्चैत्यं-

---

इत्येके । इत्येते पर्जन्या वेदितव्याः । किञ्च—ये चेमेऽशिमिविद्विषः ते च । इत्येत इति ब्राह्मणं उपात्तांस्तावद्दर्शयति । शिमिः कर्म तद्ये विद्विषन्ति ते शिमिविद्विषः । तद्विपरीता अशिमिविद्विषः कृष्यादिकर्मानुगुणप्रवृत्तयः । यद्वा—अशिमयो निष्कर्माणः निरीहाः तेषां विद्वेष्टारः । एवमेते **सप्त पर्जन्याः पृथिवीं वृष्टिभिः अभिवर्षन्ति** वर्षजलैः आभिमुख्येन सिञ्चन्ति । 'अभिवर्षन्ति वृष्टिभिः' इति पादः । **एत एव** पर्जन्याः **विभक्तिविपरीताः अमून् लोकान्** ऊर्ध्वलोकान् **अभिवर्षन्ति** । प्रायश एतयैवेति पाठः । तत्र पाक्षिकत्वात् यलोपाभावः । वर्णव्यत्ययेन परस्यैकारः । विभज्यते वर्षप्रवृत्तिरनयेति विभक्तिः ऊर्ध्वत्वादिलक्षणो धर्मः, तया विपरीताः अधोवृत्तयः पृथिवीमभिवर्षन्ति ऊर्ध्ववृत्तयः ऊर्ध्वलोकानिति । विभक्तिवैपरीत्ये हेतुमाह—**सप्तभिर्वातैरुदीरिताः** ऊर्ध्वं नुन्नाः विभक्तिविपरीता भवन्तीति । **तेषामित्यादि** । सप्तभिरित्येतेषां पर्जन्यानां **तेषां** प्रतिपादिका **एषा** ऋक् **भवति** ॥

[9]**समानमिति** ॥ एतां* वृष्टिमतीमष्टमीमुपदधाति—इयं चानुष्टुप् । **समानं** एकमेव **एतदुदकं** वृष्टिलक्षणं **उदेति च** ऊर्ध्वं

---

*एषां.

**व चाहंभिः । भूमिं पर्जन्या जिन्वन्ति । दिवं जिन्वन्त्यग्नय इति । [10]यदक्षरं भूतकृतम् । विश्वे देवा उपासते । महर्षिमस्य गोप्तारम् । जमदग्निमकुर्वत । जमदग्निराप्यायते । छन्दोभिश्चतुरुत्तरैः ।**

---

गच्छन्ति **अवैति** च अधस्तात् गच्छति च । **अहभिः** अहोविशेषैः कैश्चिदहोभिरुदेति कैश्चिदवैति । रुत्वाभावः छान्दसः । 'चवायोगे प्रथमा' इत्याख्यातस्य निघाताभावः, अवशब्दस्य व्यत्ययेनादिस्वरितत्वम् । अथोच्चावचत्वे हेतुमाह—यदा **भूमिं पर्जन्या जिन्वन्ति** प्रीणयन्ति प्रीणयितुमिच्छन्ति तदा अवैति यदा **दिवं अग्नयो जिन्वन्ति** तदा उदेतीति । जिवि प्रीणने, इदित्त्वान्नुम् ॥

[10]अथ तिस्र उपदधाति—यदक्षरमित्याद्याः ॥ त्रिपदा गायत्र्यः । **यदक्षरं** न क्षरति देशतः कालतश्चेति अक्षरं विश्वात्मकं **भूतकृतं** भूतानां कर्तृ सर्वाणि भूतानि स्वस्मिन्नाविर्भावयन्तम् । लिङ्गव्यत्ययः । **विश्वे**ऽपि **देवाः** देवनशीलाः तदंशाभिमानिनः **उपासते** उपेत्यासते शङ्कुनेव प्रणवेन संक्षिप्य अनुभवन्ति । अस्येत्यन्वादेशोऽनुदात्तः । **अस्य** अक्षरस्य **गोप्तारं** निगूह्यानुभवितारं **महर्षिं** महादर्शनं **जमदग्निमकुर्वत** देवाः **जमदग्निं** व्याप्त्युन्मुखदीप्तिं **अकुर्वत** । ततोऽसौ सर्वव्यापी परमात्मलक्षणः सर्वप्रवृत्त्यौन्मुख्यं प्रतिपद्यते । ततः स आत्मा जमदग्नीकृतः प्रजाताग्निस्थानीयः **छन्दोभिः** गायत्र्यादिभिः **चतुरुत्तरैः** चतुरक्षरोत्तरैः **आप्यायते** यागादिषु तैस्स्तूयमानो वर्धते, तस्यैव प्रणवस्य विकारभूताभिः छन्दस्सहिताभिः स्तुतिभिः स्तूयमानो भवतीति

**राज्ञस्सोमंस्य तृप्तासंः ॥ ३१ ॥ ब्रह्मणा वीर्यावता । शिवा नंः प्रदिशो दिशंः । [11]तच्छंयोरावृंणीमहे । गातुं यज्ञायं । गातुं यज्ञपंतये । दैवीं स्व-**

यावत् । तथा सति तस्यैवाक्षरस्य कर्मभिरिदमाराधनं भवतीति । एवमनेन प्रकारेण कर्माणि कुर्वाणाः **राज्ञस्सोमस्य तृप्तासः** सोमस्य पानेन सौहित्यं भजमानाः । 'पूरणगुण' इति समासप्रतिषेधेन ज्ञापिता षष्ठी । 'आज्जसेरसुक्'। **ब्रह्मणा** परिबृढेन च कर्मणा ज्योतिष्टोमादिना **वीर्यावता** शक्तिमता इत्थंभूताः **शिवाः** शान्तोपद्रवाः नः अस्माकं भवन्तु । **प्रदिशश्च** दिशश्च प्रधानदिशश्च कोणदिशश्च तत्स्थाः प्रजा इत्यर्थः ॥

[11]अथैकामुपदधाति—तच्छंयोरिति ॥ शक्वर्येषा । व्याख्यातेयं हौत्रे* । शं शमनं रोगादीनामागतानां योः यवनं पृथक्करणं आगामिनां रोगादीनां येनैतद्देवं भवति **तत्** तस्मादेवाक्षरात् **आवृणीमहे** आभिमुख्येन प्रार्थयामहे **गातुं** गतिं अन्नं वा **यज्ञाय** यज्ञार्थं तथा **यज्ञपतये** यजमानार्थं च **गातुं** आवृणीमहे । **नः** अस्माकं **दैवी** देवसम्बन्धिनी **स्वस्तिः** अविनाशः **अस्तु** । तथा अस्मदीयेभ्यः **मानुषेभ्यः** पुत्रादिभ्यः सर्वाभ्यो वा प्रजाभ्यः **स्वस्तिः** अस्तु । **ऊर्ध्वं जिगातु** उद्गच्छतु उद्भूतं भवतु; किं **भेषजं** प्रजानां अविनाशहेतुभूतं भेषजं तदेवाक्षराख्यमैश्वरं तेज आविरस्तु । इणो गाङादेशः, छान्दसः शपः श्लुः । गाङ एव वा व्यत्ययेन परस्मैपदम् । सर्वत्र 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् । किञ्च—**नः** अस्मदीयाय **द्विपदे चतुष्पदे** च

*ब्रा. ३-५-११.

स्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे । [12]सोमपा३ असोमपा३ इति निगदव्याख्याताः ॥ १० ॥

व्यवदाता हन्ति गरगिरस्तपस उदकं तृप्ताश्चतुष्पद एकं च ॥ ९ ॥

[1]सहस्रवृदियं भूमिः । परं व्योम सहस्रवृत् । अ-

---

शं सुखं अस्तु । द्वौ पादावस्येति 'बहुव्रीहौ' 'संख्यासुपूर्वस्य' इति लोपः । 'पादः पत्' इति पद्भावः । 'द्वित्रिभ्यां पाद्न्' इत्युत्तरपदाद्युदात्तत्वम् ॥

[12]एवं एभिः चतुर्भिः मन्त्रैः **सोमपा असोमपाश्चोक्ताः** क्रमेण । 'अनन्त्यस्यापि' इत्याख्याने उभयत्र प्लुतः । सामर्थ्याच्च 'किं सोमपाः किमसोमपाः अत्रोच्यन्ते' इति प्रश्नोऽत्रोन्नेयः । **इति निगदव्याख्याताः** उक्ताः । 'अथ निगदव्याख्याताः' इति प्रक्रान्ताः इदानीमुपसंह्रियन्ते ॥

इत्यारण्यके प्रथमे नवमोऽनुवाकः.

---

[1]अष्टौ संयानीरुपदधाति—सहस्रवृदिति ॥ द्वे अनुष्टुभौ । त-तस्त्रिस्त्रिष्टुभः । चतस्रोऽनुष्टुभः । अन्त्ये विकल्पार्थे द्वे वा जगत्यौ षट्पदे । **सहस्रवृत्** सहस्रवृत्तिः अनन्तक्रिया, सहस्रस्य वारयित्री वा, सहस्रेण वा वरणीया अनेकोपयोग्यत्वात्* । ईदृशी **इयं भूमिः परं व्योम** प्रकृष्टं व्योम द्युलोकाख्यं नाकपृष्ठादिशब्द-

---

*......त्वात् युधि.

**श्विना भुज्ज्यू नासत्या । विश्वस्य जगतस्पती । [२]जाया भूमिः पतिर्व्योम । मिथुनं ता अतुर्यथुः । पुत्त्रो**

---

वाच्यं तदपि **सहस्रवृत्** एवमीदृशे भूमिपरमव्योमनी **अश्विना** अश्विनौ व्यापिनौ । एते अश्विनावेव इति स्तुतिः, तयोरपि अनन्तक्रियाकुशलत्वात् । ' सुपां सुलुक् ' इत्याकारः । **भुज्ज्यू** पालयितारौ जगताम् । भुजेरौणादिकः क्युः । **नासत्या** नासत्यौ । नासिकाभ्यामुत्पन्नौ । नासाशब्दात् भवार्थे त्यप् । यद्वा—असत्यरहितौ । ' न भ्राण्णपात् ' इति लोपाभावो निपात्यते । यद्वा—सत्सु साधू सत्यौ तद्विपरीतावसत्यौ न तादृशौ नासत्यौ । **विश्वस्य जगतो** जङ्गमस्य स्थावरस्य **पती** पालयितारौ । ' षष्ठ्याः पतिपुत्र ' इति सत्वम् ॥

[२]एवं ईदृशा विश्वरूपेण स्तुते द्यावापृथिव्यौ रक्षितृत्वप्रतिपादनार्थम् । इदानीं विश्वोत्पादकत्वं प्रतिपादयितुं दम्पतित्वेन स्तूयेते—जाया भूमिरिति ॥ **जाया भूमिः** जायते अस्यां विश्वमिति जाया । जनेरौणादिके युकि जाभावः । **पतिः** भर्ता । **व्योम** विविधमवतीति व्योम । **ता** तौ युवां भूमिव्योमात्मकौ जायापती **मिथुनं** संयोगं सृष्टिव्यापारात्मकं **अतुर्यथुः** गच्छथः जगदभिवृद्ध्यर्थम् । तुरी गत्यादिषु, दैवादिकः । छान्दसो लुङ्, व्यत्ययेन तमादेशापवादः अथुसादेशः, परस्मैपदं च । मिथ उपकार्योपकारकभावेन वर्तनं मिथुनीभावः । तच्छब्दाद्द्विवचनस्य पूर्ववदाकारः, ईषाक्षादित्वात् सवर्णदीर्घाभावः । यद्वा—द्विवचनान्तस्यैवायादेशे ' लोपश्शाकल्यस्य ' इति लोपपक्षे रूपम् । ' पूर्वत्रासिद्धम् ' इत्यसिद्धत्वात् सवर्णदीर्घत्वाभावः । तथा वर्तमान-

**बृहस्पती रुद्रः । सरमा इति स्त्रीपुमम् । [3]शुक्रं वा-मन्यद्यजतं वामन्यत् । विषुरूपे अहनी द्यौरिव स्थः ।**

यो: युवयोः उत्सङ्गवर्ती **पुत्रो बृहस्पतिः** तावदेकः बृहतीनां विद्यानां पालयिता । 'तद्बृहतोः' इति सुट् । यद्वा—बृहतां देवानां परिबृढानां पाता पतिः । पुत् दुःखं नरकाख्यं तस्मात्त्रायत इति पुत्रः । पुनातीति वा पुत्रः येन ऋणान्मुच्यते पिता । अयमेको नस्त्राता प्रजानाम् । अथ द्वितीयो **रुद्रः** युवयोरुत्सङ्गवर्ती दुःखात्त्राता प्रजापतिः यः पूर्वं युवयोः अरोदीत् । यथोक्तम्—'सोऽरोदीत् प्रजापतिः । स कस्मा आज्ञे '* इति । अग्निर्वा रोदयिता रुद्रः । अथ तृतीया **सरमा** इति दुःखात्त्रात्री सरमा सरणशीला । इन्द्र इत्येके, 'स इन्द्रस्सलावृकी रूपं कृत्वा '† इति दर्शनात् । परिक्रमणमेव सरणमिति वेदिरित्यन्ये । 'एतयैवेन्द्रः सलावृक्या सह '‡ इति दर्शनात् । इति एवं **स्त्रीपुमं** स्त्री च पुमांसौ च युवयोस्त्रयः पुत्रस्थानीया उत्पन्ना इति । समाहारद्वन्द्वे आकारोन्त्यादेशः । संस्त्यानपवनहेतवः त्रय एते प्रजानामिति ॥

[3]इदानीमहोरात्रेण स्तूयेते—**अहनी** अहोरात्रात्मिके द्यावापृथिव्यौ । साहचर्यात् रात्रिरप्यहश्शब्देनोच्यते । यद्वा—अहश्च रात्रिश्च अहनी । 'नपुंसकमनपुंसकेन ' इति विरूपयोरपि प्रवर्तते । **वां** युवयोः **शुक्रं** शुक्लमेकं रूपं **यजतं** लोहितमेकं रूपम् । यद्वा—शुक्रं अयज्ञियं यजतं याज्ञियम् तस्मादित्थं **विषुरूपे** नानारूपे युवां **द्यौरिव** आदित्य इव **स्थः** सर्वेषा-

*ब्रा. २-२-९. †सं. ६-२-४. ‡आ. १-६.

॥४१॥ विश्वा हि माया अवथस्स्वधावन्तौ । भद्रा वां पूषणाविह रातिरस्तु । [4]वासात्यौ चित्रौ जगतो निधानौ । द्यावाभूमी चरथस्सꣳ सखायौ । तावश्विना रासभाश्वा हवं मे । शुभस्पती आगतꣳ सूर्यया सह । [5]त्युग्रो ह भुज्युमश्विनोदमेघे । रयिं न

मनुग्रहकरौ भवथः । किञ्च—विश्वाः मायाः मतीः प्रज्ञाः अवथः रक्षथः हे स्वधावन्तौ ! अन्नवन्तौ ! हे पूषणौ ! पोषयितारौ ! युवयोः भद्रा भजनीया रातिः दानं इह अस्मासु अस्तु ॥

[4]इदानीं सखिद्वयात्मना स्तूयेते—वासात्यौ वासे एकस्मिन् भवौ । वासशब्दात् छान्दसस्त्यप्, पूर्वस्य दीर्घत्वम् । यद्वा—वसातिमर्हतः वसातिप्रदानमर्हतः । छान्दसो ञः, पूर्ववद्दीर्घत्वम् । चित्रौ चायनीयौ जगतः अस्य निधानौ निधिस्थानीयौ सखायौ समानख्यानौ भूत्वा हे द्यावाभूमी ! युवां सञ्चरथः सखायाविव सह अविश्लिष्टावेव सदा चरथः तौ युवां अश्विना साहित्येनाश्विसदृशौ रासभाश्वा गर्दभसवर्णाश्वौ 'रासभावश्विनोरश्वौ' इति वचनात् । हे शुभस्पती ! शुभस्य कर्मणः पातारौ । अपदात्परस्यापि पूर्ववन्निघातः । मे मम हवं यज्ञं आगतं आगच्छतम् । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । सूर्यया उषसा सह प्रातरेवागन्तव्यमिति यावत् । 'सूर्याद्देवतायां चाप्' ॥

[5]त्युग्र इति ॥ त्युग्रः अत्युग्र आदिलोपः । यथार्थे हशब्दः । यथा कश्चिदत्युग्रो लुब्धात्मा ममृवान् मृतोपि रयिं धनं

कश्चिन्ममृवाँ२ अवाहाः । तमूहथुर्नौभिरात्मन्वतीभिः । अन्तरिक्षप्रुद्भिरपोदकाभिः ॥ ४२ ॥ [6]तिस्रः क्षपस्त्रिरहाऽतिव्रजद्भिः । नासत्या भुज्युमूहथुः पत-

**अवाहाः** वहति न व्ययमिच्छति । नहतेः छान्दसे लङि पुरुषव्यत्ययः । छान्दसं दीर्घद्वयम् । ममृवानिति रुत्वानुनासिकावुक्तौ । तद्वत् युवामपि हे **अश्विना**! **उदमेघे** उदकसहितमेघे अवस्थितं **भुज्युं** पालकं **ऊहथुः** वहथः । छान्दसो लिट् । **नौभिः** नौस्थानीयैरुपायैः नयनसाधनैः **आत्मन्वतीभिः** आत्मीयाभिः । यद्वा—प्राणवतीभिः बलवतीभिः । अनो नुट् । **अन्तरिक्षप्रुद्भिः** अन्तरिक्षे प्लवमानाभिः **अपोदकाभिः** अपगतोदकाभिः अच्छिद्रिताभिः ईदृशीभिः नौभिः तार्यं तदुदकं वहथः न कदाचिदपि त्यजथ इति ॥

[6]तिस्र इति ॥ **तिस्रः** **क्षपः** क्षपा रात्रिः । प्रातिपदिकान्त्यलोपो वा, विभक्त्यन्तस्य ह्रस्वत्वं वा । **त्रिरहा** त्रीण्यहानि । 'सुपां सुलुक्' इति शेः स्वादेशः । उत्तरत्र 'शेश्छन्दसि' इति लोपः । **अतिव्रजद्भिः** अतीत्य गच्छद्भिः एतावन्तं कालं अतीत्य व्याप्य स्थितैः लघिष्ठैः* **पतङ्गैः** रश्मिभिः रज्जुस्थानीयैः आनीय **भुज्युं** पालकं उदकं **ऊहथुः** प्रापयथः हे **नासत्या**! । पूर्ववल्लिट् । क्वेत्यत आह—**समुद्रस्य** अन्तारिक्षस्य **आर्द्रस्य** उदकाप्लुतस्य **पारे** तीरे **धन्वन्** निरुदके प्रापयथः आकाशपर्यन्तानप्युदकाप्लुतान् कुरुथः । यद्वा—समुद्रस्याम्बुराशेः

*द्राघिष्ठैः.

ह्रैः । समुद्रस्य धन्वन्नार्द्रस्य पारे । त्रिभी रथैश्शत-
पद्भिष्षडश्वैः । [7]सवितारं वितन्वन्तम् । अनुबध्ना-
ति शाम्बरः । आपपूष्षम्बरश्चैव । सवितारेप-
सोऽभवत् । [8]त्यꣳ सुतृप्तं विदित्वैव । बहुसोमगि-

---

अम्बुना क्लिन्नस्य निरुदके पारे तीरस्थानीये भूमण्डले सर्वत्र प्रापयथः । **त्रिभिः रथैः** रंहणैः उत्थानविशेषैः **शतपद्भिः** अनन्तपादैः अनन्तगतिभिः **षडश्वैः** षड्प्रकारव्यापनैः एवमेभिराक्रम्येति ॥

[7]सवितारमिति ॥ **सवितारं** सर्वस्य प्रेरयितारं आदित्यं **वितन्वन्तं** वृष्ट्यर्थं मयूखान् विस्तारयन्तं **अनुबध्नाति** अनूरूपमाश्रयति गुणभावेन भजते **शाम्बरः** मेघः शम्बरमुदकं तस्यायं वोढृत्वेन शाम्बरः । अथ तदनुबन्धप्रभावादेव **आपपूः** अपामात्मनि पूरयिता अद्भिर्वा पूर्णः । अप्शब्दात् स्वार्थिकोऽण् । पूर्यतेः क्विप् । **षम्बरः** शम्बरः शम्बरवान् मेघः । अर्शादित्वात् अच् । छान्दसं सकारस्य षत्वम् । ततः पूर्वा च स्वरभक्तिः विसर्जनीयाभावश्च । **सविता** प्रसविता **अरेपसः** वृष्टिक्रियायाः अपापायाः **अभवत्** भवति । अरेपसो वा जलस्य सविता प्रेरयिता भवति । यद्वा—अरेपसोऽकृपणस्य पुष्टस्य लोकस्य सविता उत्पादयिता भवति ॥

[8]वृष्टिक्रममधुना दर्शयति—त्यमिति ॥ सं तमिमं मेघं **सुतृप्तं** उदकपूर्णं **बहुसोमगिरं** बह्वचः सौम्या गिरः स्तनितानि यस्य तादृशम् । यद्वा—बहूदकोद्गारयोग्यं **विदित्वा** ज्ञात्वा । **एवकारो**ऽवधारणे । ज्ञानानन्तरमेव **वशी** नियन्तुमीश्वरः **तुग्रः** आ-

**रं वंशी ॥४३॥ अन्वेति तुग्रो᳚ऽवाक्रियां तम् । आयसूयान्थ्सोमतृप्सुषु । [9]स सङ्क्रामस्तमोद्यो᳚ऽत्योतः ।**

---

दित्यः । तुरिति रश्मिनाम । तद्वान् विततरश्मिर्भूत्वा **तं अन्वेति** अनुबध्नाति कीदृशं **अवाक्रियां** वृष्टिविमुखम् । छान्दसं दीर्घत्वम् । यद्वा—वक्रियं कुटिलं वृष्टिविमुखम् । स्वार्थिको यत् । अष्टाक्षरश्च पादः सम्पद्यते । विकारान्तरं छान्दसम् । **आयसूयान्** । आङ् बलवदर्थे । बलवान् यत आयसूः । औणादिक ऊन्प्रत्ययः । तद्वान् आयसूयान् । वर्णव्यत्ययेन मकारस्य यकारः । कस्मिन्निमित्ते **सोमतृप्सुषु** ये सोमेन उदकेन तृप्यन्ति प्राणिनः ये वा सोमेन पीतेन तृप्यन्ति यजमानाः तन्निमित्तं महान्तं यत्नं कुर्वन् अवक्रियं मेघं रश्मिभिरवष्टभ्य रज्जुस्थानीयैः पीडयित्वा वर्षति । यद्वा—आयसूयान् सोमतृप्सुषु असूयामकुर्वन् अनुगृह्णानोऽनुबध्नातीति । आ इति क्षेपे असूयाभावं द्योतयति; तत्र पाक्षिकत्वाद्यलोपाभावः । 'अतो गुणे' पररूपत्वं बाधित्वा शतुरकारेण सह सवर्णदीर्घत्वम् । तृप्यतेः क्विबन्तात् द्वे सप्तम्यौ । भवति हि द्विविकरणतावत् द्विविभक्तिता । यद्वा—सोमाधीनतृप्तयः सोमतृप्सवः । औणादिकः क्सुप्रत्ययः । तेषु सोमतृप्सुषु ॥

[9]स इति ॥ **सः** तथा वर्षयन्नादित्यः **सङ्क्रामः** सङ्क्तरश्मिः ग्रसनशीला रश्मयो ग्रामाः **तमोद्यः** तमसामत्ता । अदेः कर्तरि यत् । यद्वा—तमसां खण्डयिता । द्यतेः ड्यः । **अत्योतः** अतीवोतः विश्वव्यापी । यद्वा—अत्यैरश्वैरूतः धृतः अत्योतः । अवतिर्धारणे । **वाचोगाः** शब्दयन्तः पशून् तत् उदकं **पिपाति** पाययतीति अन्तर्भावितण्यर्थः । 'बहुलं छन्दसि' इति

**वाचोगाः पिपाति तत्। स तद्गोभिस्स्तवाऽत्येत्यन्ये। रक्षसाऽनन्विताश्च ये। [10]अन्वेति परिवृत्त्याऽस्तः। एवमेतौ स्थो अश्विना। ते एते द्युःपृथिव्योः। अहरहर्गर्भं दधाथे ॥ ४४ ॥ [11]तयोरेतौ वत्साव-**

---

शापश्श्रुः, अभ्यासस्य चेत्वम्। **स** च तथा पाययन् **तद्गोभिः** तेषां पीतोदकानां गोभिः शब्दैः तदित्यसमस्तमेव। 'सुपां सुलुक्' इति षष्ठीबहुवचनस्य लुक्। अनित्यो वा समासान्तः। कीदृशैः **स्तवा** स्तवरूपैः। 'सुपां सुलुक्' इति तृतीयाबहुवचनस्याकारः। एवं रूपैश्शब्दैः सह **अत्येति** तं मेघमतीत्य गच्छति। वर्षान्ते उदकतृप्तेन लोकेन स्तूयत इति यावत्। किञ्च—ये च **अन्ये रक्षसा** पापेन क्षरणहेतुना **अनन्विताः** दिव्या जनाः कृतज्ञाः तेषां च गोभिः स्तूयमानोत्येति ॥

[10]अन्वेतीति ॥ सः मेघः **अस्तः** आदित्येन त्यक्तः पुनरपि वर्षार्थं **परिवृत्त्या** तमेव **अन्वेति** अनुगच्छति अनुबध्नातीत्यर्थः। 'अनुबध्नाति शाम्बरः' इत्यादि पुनरावर्तते। **एवं** हे **अश्विना! एतौ** युवां ते **एते** द्यावापृथिव्यौ **स्थः**। यद्वा—हे अश्विना! अश्विशब्दवाच्यौ द्यावापृथिव्यौ एतौ युवां एवं **ते एते** स्थः उक्तप्रकारवत्यौ स्थः। अश्वित्वापेक्षमेताविति पुल्लिङ्गत्वम्। किञ्च तौ युवां **द्युःपृथिव्योः अहरहः गर्भं दधाथे** स्थापयेते हे अश्विनौ! द्यावापृथिव्यभिमानिनौ। द्युशब्द उकारान्तोप्यस्ति, तस्य छान्दसस्सकारोपजनः ॥

[11]अतः परं ब्राह्मणम्—तयोरिति ॥ **तयोः** द्युपृथिव्योः **एतौ वत्सौ** वत्सस्थानीये अहोरात्रे तत्रोत्पन्नत्वात्। **पृथिव्या**

होरात्रे । पृथिव्या अहः । दिवो रात्रिः । ता अविसृष्टौ । दम्पती एव भवतः । तयोरेतौ वत्सौ । अग्निश्चादित्यश्च । रात्रेर्वत्सः । श्वेत आदित्यः । अह्नोऽग्निः ॥ ४५ ॥ ताम्रो अरुणः । ता अविसृष्टौ । दम्पती एव भवतः । तयोरेतौ वत्सौ । वृत्रश्च वैद्युतश्च । अग्नेर्वृत्रः । वैद्युत आदित्यस्य । ता अविसृष्टौ । दम्पती एव भवतः । तयोरेतौ वत्सौ ॥ ४६ ॥ उष्मा च नीहारश्च । वृत्रस्योष्मा । वैद्युत-

---

अह्नः वत्सः **दिवो रात्रिः** वत्सः । अथ **ता** अहोरात्रात्मानौ **अविसृष्टौ** अन्योन्यसंश्लिष्टौ अत एव **दम्पती भवतः** उत्पादकतया वर्तेते । तावित्यौकारस्यावादेशे कृते वकारस्य च लोपे कृते 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वात् सवर्णदीर्घत्वाभावः । अथ **तयोः** अहोरात्रयोः **एतौ वत्सौ अग्निश्च आदित्यश्च रात्रेर्वत्सः श्वेतः** वर्णः **आदित्यः अह्नो** वत्सः **अग्निः ताम्रो** रक्तः **अरुणः** अरुणकेशः । अथ **ता** अग्न्यादित्यौ **अविसृष्टौ** । गतमन्यत् । **तयोः** अग्न्यादित्ययोः **वत्सौ** वृत्रवैद्युतयोः **वत्सौ** धूमातपौ । गतमन्यत् । **तयोः** वृत्रवैद्युतयोः **वत्सौ** । **उष्मा** बाष्पः । छान्दसं ह्रस्वत्वम् । **नीहारः** हिमः । **तौ** तु ऊष्मनीहारौ तावेव वृत्रवैद्युतावेव **प्रतिपद्येते** न पुनरविसृष्टौ दम्पती भूत्वा उत्पादकतया वर्तेते । यद्वा—तौ ऊष्मनीहारौ तावेव प्रतिपद्येते स्वात्मन्येव विलयं गच्छतः इति । **सेयं रात्रिः गर्भिणी** गर्भवती । अतस्तेन गर्भस्थेन **पुत्रेण** आदित्येन **संवसति** सहवसति रात्र्यन्ते जनिष्यते । **तस्या** रात्रेर्गर्भं बिभ्रत्या

**स्यं नीहारः । तौ तावेव प्रतिपद्येते । सेयꣳ रात्री गर्भिणी पुत्रेण संवसति । तस्या वा एतदुल्बणम् । यद्रात्रौ रश्मयः । यथा गोर्गर्भिण्यां उल्बणम् । एवमेतस्यां उल्बणम् । प्रजयिष्णुः प्रजया च पशुभिश्च भवति । य एवं वेद । एतमुद्यन्तमपियन्तं चेति । आदित्यः पुण्यस्य वत्सः । अथ पवित्राङ्गिरसः ॥ ४७ ॥**

**स्थोऽपोदकाभिर्वशी दधाथे अग्निस्तयोरेतौ**
**वत्सौ भवति चत्वारि च ॥ १० ॥**

---

**एतदुल्बणं** उल्बं गर्भाधारं ये रात्रौ रश्मयः ते अन्तर्वसतो गर्भस्य उल्बस्थानीया वेदितव्याः; गोरिव गर्भिण्या अस्या अपि रात्रेरेवमुल्बणं विद्यत इति । एवं वेदिता **प्रजयिष्णुः** प्रजनने साधुकारी **प्रजया च पशुभिश्च** सहितो भवति । यद्वा—प्रजया च पशुभिश्च प्रजयिष्णुर्भवति प्रजावान् भवितुं समर्थो भवति । 'अलंकृञ्' इत्यादिना इष्णुच्प्रत्ययः । किञ्च—एवं वेदिता **एतं** आदित्यं उद्यन्तं उद्गच्छन्तं **अपियन्तं** अस्तं गच्छन्तं च एति ऐक्येन प्राप्नोति । तदेवाह—आदित्य इति । स्वयमप्यादित्य एव भूत्वा वर्तते इति । किञ्च—**पुण्यस्य वत्सः** वत्सवत्प्रियो भवति । यद्वा—आदित्यवत् पुण्यस्य वत्सो भवति वत्सस्थानीयः । **अथ पवित्राङ्गिरसो** नाम उपधेयाः सन्ति । ता वक्ष्यन्ते । पवित्राः पवमानाः अङ्गिरसः आसां **द्रष्टारः** पवित्राङ्गिरसः ॥

इत्यारण्यके प्रथमे दशमोनुवाकः.

[1]पवित्रवन्तः परि वाजमासते। पितैषां प्रत्नो अभिरक्षति व्रतम् । महस्समुद्रं वरुणस्तिरोदधे । धीरा इच्छेकुर्धरुणेष्वारभम् । [2]पवित्रं ते विततं ब्रह्मणस्पते। प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्त-

---

[1]अथ चतस्र आङ्गिरसीरुपदधाति—पवित्रवन्त इति ॥ सर्वत्र सोमस्स्तूयते । तिस्रस्त्रिष्टुभः एकाऽनुष्टुप् । **पवित्रवन्तः** दशापवित्रवन्तः ऋत्विग्यजमानाः **वाजं** अन्नं सोमलक्षणं **पर्यासते** समन्तत उपासते । **प्रत्नः** पुराणः **पिता** पाता ब्रह्मा **एषां** इदं कर्म **व्रतं** **अभिरक्षति** आभिमुख्येन रक्षति पवित्रवन्तः पर्युपासते चाभिरक्षति च । पितेति चार्थस्य विवक्षितत्वात् 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । सार्वधातुकानुदात्तत्वे धातुस्वरः । एवं सर्वकर्मनिवृत्त्या **महः** महत् **समुद्रं** अन्तरिक्षं **वरुणः** **तिरोदधे** जलदैः प्रच्छादयति । तथा च सति **धीराः** धीमन्तः **धरुणेषु** अग्निशरणेषु **आरभं** कर्माण्यारब्धुं **शेकुः** शक्नुवन्ति । 'शकि णमुल्कमुलौ' इति कमुल् । इदिति पादपूरणे ॥

[2]पवित्रं त इति ॥ हे **ब्रह्मणस्पते**! अन्नस्य पालयितः! सोम! **ते** तव **पवित्रं** पवनसाधनमिदं **विततं** विस्तारितं दशापवित्रम्। तस्मात्त्वमनेन पवनेन **प्रभुः** भूत्वा **गात्राणि** यागसाधनभूतान्यङ्गानि **पर्येषि** परिप्राप्नुहि **विश्वतः** सर्वतः सर्वैः प्रकारैः प्रभुः। कस्मादेवमुच्यत इत्याह—यो हि **अतप्ततनूः** अनीश्वराङ्गः । तप ऐश्वर्ये । **आमः** अपक्कः **तत्** यागफलसाधनत्वं **नाश्नुते** न प्राप्नोति । अपि तु **शृतासः** शृताः पक्का एव **तत्** **समाशत**

तनूर्न तदामो अंश्नुते । शृतास इद्वहन्तस्तथ्समाशा-
त । [3]ब्रह्मा देवानाम् । [4]असतस्सद्ये ततक्षुः ॥ ४८ ॥
ऋषयस्सप्तात्रिश्च यत् । सर्वेऽत्रयो अगस्त्यश्च ।

---

समश्नुते । शपो लुक् । कीदृशाः वहन्तः कार्यनिर्वहणक्षमाः । 'शृतं पाके' इति निपात्यते । 'आज्जसेरसुक्' ॥

[3]ब्रह्मा देवानामिति ॥ प्रतीकग्रहणमृचः । व्याख्याता चेयं त्रिष्टुप् 'त्वमग्ने बृहद्वयः'* इत्यत्र । देवादीनां मध्ये ब्रह्मादिरूपोऽयं सोम इति स्तूयते । किञ्च—अन्यदपि यत्पवित्रं प्रोक्तं तद-त्येति अतिलङ्घ्य वर्तते । अयं सोमः रेभन् लोकेषु प्रथमान इति ॥

[4]असत इति ॥ असत् अव्यक्तं द्वितीयभावविकारस्य स-त्त्वादसत् । यथा—'असद्वा इदमग्र आसीत् । ततो वै सद-जायत'† इति प्रधानमुच्यते । तस्मात् सत् व्यक्तं ततक्षुः स-म्याङ्गिर्वर्तयामासुः । के पुनस्ते—ये ऋषयः सप्त अगस्त्यान्ताः अत्रिश्च प्रथमः । पृथग्ग्रहणं प्राधान्यख्यापनार्थम् । एते होतृ-कान्ताः‡ विश्वं सृष्टवन्तः यागमहिम्नैव । यत् यस्मादेवं तस्मात् सर्वे अपि यज्वानः चेतारः अत्रयः अत्र्याद्यास्सप्त स च अ-गस्त्यो योऽष्टमः । पृथग्ग्रहणं प्राधान्यख्यापनार्थम् । सर्वेऽप्येते प्राणिनां शंकृतः सुखहेतवः दिवि नक्षत्रैः सह अवसन् वस-न्ति; यागफलभाजां हि नक्षत्रभावः । यथोक्तं—'यो वा इह यजते । अमुं स लोकं नक्षते । तन्नक्षत्राणां नक्षत्रत्वम्'§ इति त-स्मात्तैस्सह वसतामपि यागसिद्धिभूतनक्षत्रलक्षणज्योतिषश्च लाभः साहचर्येण प्रदर्शित इति तादृशयागसाधनभूतस्य सोमस्य स्तुतिः ॥

---

*सं. ३-४-११. †उ. २-७. ‡गोत्रकथिता. §ब्रा. १-५-२.

**नक्षत्रैश्शंकृतोऽवसन्न् । [5]अथ सवितुश्श्यावाश्वस्याव-र्तिकामस्य । [6]अमी य ऋक्षा निहितास उच्चा । नक्तं ददृश्रे कुहचिद्दिवेयुः । अदब्धानि वरुणस्य व्रतानि ।**

---

[5]अथ उत्तरं ब्राह्मणम् ॥ **अथ** अनन्तरं **सवितुः** सर्वस्य प्रेरयितुः अनुज्ञातुर्वा देवस्य विश्वात्मनो देवतायाः इष्टकानामुपधान-कालः । **श्यावाश्वस्य** नाम्नः **अवर्तिकामस्य** विरक्तिकामस्य उप-रतप्रायस्य ऋषेर्भवति सविता देवता । अवर्तिकामः श्यावाश्वः ऋषिरित्यर्थः ॥

[6]अमी य ऋक्षा इति सप्त मूर्धन्युपदधाति ॥ आद्यन्ते त्रिष्टुभौ । द्वितियोपान्त्ये गायत्र्यौ । मध्ये तिस्रोऽनुष्टुभः । ये **अमी ऋ-क्षाः** गतिमन्ति ज्योतींषि **उच्चा** उच्चैः उपरिप्रदेशे । पूर्ववदाकारः । **निहितासः** निहिताः तेनैव विश्वात्मना स्थापिताः । आज्जसे-रसुक् । ते अमी **नक्तं** रात्रौ **ददृश्रे** दृश्यन्ते । छान्दसो लिट् । 'इरयोरे' । **दिवा** अह्नि एते **कुहचित्** तिरोधायके वस्तुनि **ईयुः** प्रविशन्ति अदर्शनं गच्छन्ति । दिवाशब्दे वका-रोपजनः (?) छान्दसः । 'वा ह च छन्दसि' इति किमो हा-देशः । 'कुति होः' इति क्वादेशः । यस्मादेवं तस्मात् अस्य **वरुणस्य** वारकस्य यो विश्वं वृणुते विश्वात्मना तिष्ठति विश्वं स्वात्मना वारयंस्तिष्ठति तस्य सवितुः देवस्य **व्रतानि** कर्मा-णि तेजांसि वा **अदब्धानि** केनाचिदप्यनुपहिंसितानि दुरतिक्र-माणि । दुर्ज्ञानानीति वा; कथमेष करोतीति न ज्ञायते, कथं वा ज्योतींष्यपि छादयन्नेष गच्छति । नक्तं ह्येतानि गगने अ-न्तरेणैव प्रकाशं प्रकाशन्ते । तदिदमुक्तं ददृश्र इति ।

**विचाकशंश्चन्द्रमा नक्षंत्रमेति । [7]तत्संवितुर्वरेण्यम् । भर्गो देवस्यं धीमहि ॥४१॥ धियो यो नंः प्रचोदयात् । [8]तत्संवितुर्वृणीमहे । वयं देवस्य भोजनम् । श्रेष्ठꣳ**

इदानीमेवंविधस्तेजःप्रकर्षश्चन्द्रमसो नास्तीति प्रतिपादयति—**विचाकशत्** विविधं प्रकर्षेण च प्रकाशयन्नेष हि **चन्द्रमा नक्षत्रं** नक्षत्रजातं **एति** उपगच्छति । यद्वा—नक्षत्राणि विचाकशत् विहाय गच्छति । काशेर्यङ्लुगन्ताच्छतृप्रत्ययः । काशेर्वा ह्रस्वत्वम् ॥

[7]तत्सवितुरिति ॥ व्याख्यातं 'सं पश्यामि'* इत्यत्र । **सवितुः** देवस्य प्रेरयितुः **तत्** तादृशं अनन्तरोक्तस्वभावम् । तदेवाह—**वरेण्यं** वारकस्वभावं मुक्तवत्[1] सर्वातिशायिप्रकर्षयोगात् सर्वैर्वरणीयं **भर्गः** तेजः आदित्याख्यं **धीमहि** हृदयेषु धारयामः **यो नः** अस्माकं भजमानानां **धियः** प्रज्ञाः सर्वाच्छादकोद्घाटनीयाः **प्रचोदयात्** प्रचोदयति प्रेरयति अनुजानाति । तदीयं तेजोऽज्ञाननिवृत्त्यर्थं भजाम इति ॥

[8]तत्सवितुरिति ॥ **तत्** तादृशं **सवितुः देवस्य** तेजः **वयं वृणीमहे** प्रपद्यामहे । कीदृशं **भोजनं** भुक्तिसाधनम् । यद्वा—**वृणीमहे** याचामहे किं भुक्तिं च । **श्रेष्ठं** प्रशस्यतमं **सर्वधातमं** अतिशयेन सर्वस्य धातृ । पुनश्च विशेष्यते—**भगस्य** भजनीयस्य ऐश्वर्यादेः **तुरं** शीघ्रप्रापकम् । तुर त्वरणसम्भ्रमणे। इगुपधलक्षणः कः । **धीमहि** तदर्थं सदा ध्यायामः । ध्यायतेः संप्रसारणादिव्यत्ययेन ॥

*सं १-५-६. [1]उक्तवत्.

**सर्वधातमम् । तुरं भर्गस्य धीमहि । [9]अपागूहत सविता तृभीन् । सर्वान्दिवो अन्धसः । नक्तं तान्यभवन्दृशे । अस्थ्यस्ना*सम्भविष्यामः । [10]नाम ना-**

[9]अपागूहतेति ॥ 'तृभीन् । सर्वान्दिवो अन्धसः' इति द्वितीयः पादः । ननु रात्रावप्ययं देवो विततैः सहस्रमयूखैः त्रैलोक्यं विद्योतयति, तत्कथं ज्योतिरन्तराणि रात्रौ प्रकाशन्ते; तत्रेदमुच्यते—**अपागूहत** अपगूहयति अपकृष्य क्वचित् गुप्तं स्थापयति यत्र गच्छति तत्रत्यांश्च वयं न पश्यामः । **सविता** प्रेरणकुशलः **तृभीन्** रश्मीन् **सर्वान् दिवः** अन्तरिक्षात् **अन्धसः** अन्नसाधनोदकहेतून् रश्मीन् । यद्वा—ज्योतिषामान्ध्यकृतः । 'तत्करोति' इति ण्यन्तात् असुन् । तस्मात् **नक्तं** रात्रौ तानि ज्योतींषि **दृशे** दर्शनयोग्यानि भवन्ति छादकरश्मिपटलापगमात् । ननु मूर्तेन छादनं भवति, न च दिवा तादृशं किञ्चिन्मूर्तमुपलभामहे येन ज्योतींषि छाद्येरन् । तस्मात् दिवा नष्टान्येव रात्रौ पुनरन्यान्येवोत्पद्यन्त इति युक्तं; तत्कथमुक्तं छादनमात्रमेव दिवेत्येतत्पर्यनुयोगावसरे दृष्टान्तमाह—अस्थीति । अस्त्येव सूक्ष्मं किञ्चिदावारकं मारीचं ज्योतिषां, येन प्रबलप्रकाशान्यपि ज्योतींष्यपि नोपलभ्यन्ते । तस्माद्यथा वयं शरीरेषु **अस्थि** प्रादेशिकं **अस्ना** असृजा व्यापकेन **संभविष्यामः** संभावयामः निगूहयामः एवमिदमपि द्रष्टव्यं, असृक्स्थानीयेन केनचिदेतानि छाद्यन्ते नैव नष्टानीति । पद्दन्नादिना असन्भावः । छान्दसो लट् ॥

[10]नाम नामेति ॥ इदानीं विश्वात्मा देवः स्वेनाभेदं वि-

*अस्थ्यस्थ्ना.

मैव नाम मे ॥५०॥ नपुꣳसकं पुमाꣳ स्त्र्यस्मि । स्थावरोऽस्म्यथ जङ्गमः । यजेऽयक्षि यष्टाहे च । [11]मया भूतान्ययक्षत । पशवो मम भूतानि । अनू-

श्चोपाधीनां ब्रवीति । तृतीयो नामशब्दः प्रसिद्धो निपात एव नित्त्वादन्तोदात्तः । इतरौ मनिन्प्रत्ययान्तौ आद्युदात्तौ । मे मम नाम नमनं नतिहेतुः नानात्वं नामैव आख्यामात्रमेव न तु वास्तवं किंचित् । एवं नामैव तत्; एवमिदं निश्चितमित्यर्थः । एकस्वभावस्यैव नानोपाधिनिबन्धनानि नामानि प्रवर्तन्ते । तस्मादहमेव तत्तन्नामा तत्तत्कारी तत्तद्रूपश्च भवामि । यथा नपुंसकं अस्मि पुमान् अस्मि स्त्र्यस्मि स्थावरोऽस्मि जङ्गमः अस्मि । अथ यजमानो भूत्वा यजे अहं अयक्षि अहं यष्टाहे अहमिति । 'ह एति' इति हकारः । एत उपाश्रयः पारमार्थिका इति केचित् । तथा सति 'नामैव' इत्यवधारणायोगात् तेऽपि ईश्वरेन्द्रजालिकाविष्कृतानीत्यन्ये ॥

[11]मया भूतानीति ॥ मया एव स्रुक्स्रुवादिसाधनभूतेन वर्तमानेन भूतानि भौतिका अयक्षत यजन्ते । यद्वा—भूतानि पृथिव्यादीनि मया अयक्षत मयैव सङ्गतानि मय्यासक्तानि, तत्कार्याण्यहमेव करोमीत्यर्थः । पशवो द्रष्टारः । सर्वाण्यपि भूतानि पृथिव्यादीनि मनुष्यादीनि वा ममैव पशवः द्रष्टारः मामेव पश्यन्ति मय्यासक्तत्वात् मामेवोपजीवन्तीति । तांश्चाहं मामेव पश्यतः पशून् कृपया पामीति भावः । तत्र हेतुमाह—अहं एव हि विभुः विभुत्वात् व्यापकत्वात् विविधभवनशीलत्वाद्वा । तेषां अनूबन्ध्यः विभुत्वान्मामेव ते पशवोऽनुबध्नन्ति अजहतो भजन्ते । अहमपि तेषां यथाऽभिमतविविधफलविभावनया विभुर्भवामीति 'विप्र-

**बन्ध्योऽस्म्यहं विभुः। [12]स्त्रियस्सतीः। ता उ मे पुꣳस आहुः। पश्यदक्षण्वान्न विचेतदन्धः। कविर्यः पुत्रस्स इमा चिकेत ॥ ५१ ॥ यस्ता विजा-**

संभ्योड्वसंज्ञायाम्' इति डुप्रत्ययः। 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ॥

[12]**स्त्रिय** इति ॥ आहुरन्तः प्रथमः पादः। इदानीं स्वविभूतिज्ञानस्य प्राशस्त्यं अतद्विदां च निकर्षं दर्शयति—**स्त्रियः** एव अज्ञा एव **सतीः ता उ** एव **मे** मम प्रसादेन मद्विभूतिज्ञाने सति **पुंस आहुः** पावनस्वभावानेवाचक्षते मन्त्रदृशोऽपि, नाहमेव। किञ्च—इदमपि श्रूयतां—मत्प्रसादाभावे **अक्षण्वान्** दर्शनसामर्थ्यवान् **पश्यत्** पश्यन्नपि **अन्ध** एव सन् **न विचेतत्** न विचेताति न किञ्चिदपि जानाति तमज्ञमेवाहुः। चेततेः पञ्चमो लकारः। छान्दसो वा लङोऽडभावः। पश्यत् व्यत्ययेन नपुंसकत्वम्। पश्यन्नप्यन्ध एव न विजानातीति। अक्षिमानक्षण्वान् 'छन्दस्यपि दृश्यते' इत्यनङ्। 'ह्रस्वनुड्भ्यां' इति मतुप उदात्तत्वम्। यद्वा—पश्यतु अक्षण्वान् तथाऽप्यन्ध एव न विजानातीति। लेटि इकारलोपः। यदि चक्षुष्मानप्यन्धो भवति कस्तर्हि वेदिता भवितुमर्हतीत्यत आह—**कविः** मेधावी अस्खलितज्ञानः **पुत्रः** पुन्नाम्नो नरकात् मत्प्रसादेन प्राणिनः त्रातुं क्षमः **यः** एवंविधः **स** एव **इमा** इमानि भवनानि मच्चरितानि **चिकेत** जानाति। कित ज्ञाने। छान्दसो लिट्। अथ इदमपि श्रोतव्यं—**यस्ता** तानीमानि मच्चरितानि **विजानात्** विजानाति मत्प्रसादेन तानि ज्ञातुं प्रभवति **स पितुः** अपि **पिता** अ-

नाथ्सं वि॒तुः पि॒ताऽसंत् । [13]अ॒न्धो म॒णिम॑विन्दत् । तम॑नङ्गु॒लि॒रावंयत् । अ॒ग्रीवः प्र॒त्यमुञ्चत् । तम॑जि॒ह्वा अ॒सश्चंत । [14]ऊ॒र्ध्वमू॑लम॒वाक्छा॒खम् । वृ॒क्षं यो वे॑द सं॒प्रति॑ । न स जा॒तु जनः॑श्रद्द॒ध्यात् । मृ॒-

सत् भवेत् पित्राऽपि पूज्यो वन्दनीयश्च भवति । छान्दसः पकारस्य वकारः । स इत्यस्य व्यत्ययेन स्वरितत्वम् । यद्वा—सवितुर्जनयितुरपि पिता भवेत् । इदानीं स इत्याध्याहार्यः । अस्तेर्लेटि शपो लुक् । 'लेटोऽडाटौ' इत्यडागमः ॥

[13]अथ पञ्च पादयोरुपदधाति—अन्ध इति ॥ सर्वा अनुष्टुभः । इदानीं कथमयं हस्तस्थोऽपि देवः संसारदशायां यथावद्दृश्यत इत्यत आह—**अन्धः** अविद्यमानदर्शनशक्तिः कश्चित् इमं **मणिं** मननीयं विषयं महाभोगं **अविन्दत्** लभते उपलब्धवान् पश्यति । तस्मादयमनेन अयथावद्दृष्टः किं करोत्विति । अयं च परस्ताद्वक्ष्यते । इदानीमान्ध्यस्योपलक्षणत्वात् । सर्वप्रकारानुभवसामर्थ्याभावं प्रतिपादयितुमाह—**तं** मणिं अयं **अनङ्गुलिः** विशिष्टाङ्गुलिरहितः **आवयत्** तस्मिन्नङ्गुलिविशेषे ओतं करोतीति । तथा **अग्रीवः** सन् तं मणिं **प्रत्यमुञ्चत्** ग्रीवायामासञ्जयति । तथा **तं** मणिमयं **अजिह्वा** एव **असश्चत** शब्दयति लब्धोऽयं मणिरिति । सर्वं चेदमनुपपन्नं तस्माददर्शनापराधेन न देवः संसारिभिरनुभूयत इति ॥

[14]इदानीं तेनान्ध्येन पुरुषस्य द्रष्टृत्वा*हानिरित्याह—ऊर्ध्वमूलमिति ॥ इदमनेन प्रतिपाद्यते—विपर्यस्तस्वभावशरीराख्ययन्त्रानुप्रवि-

*दृष्टान्तत्व; दृष्टत्व.

**त्युर्मा मारयादिति॑ः । [15]हसितꣳ रुदितं गीतम् ॥ ५२ ॥ वीणां पणवलासितम् । मृतं जीवं च यत्**

ष्टोऽयं जन्तुः महद्धि*लसितेन अविच्छिन्नाविपर्यस्तासत्प्रायाचिच्छाक्तिरज्ञवत् भवति यावदितो महदवष्टम्भलक्षणात् बन्धनात् संसारान्मुक्तो भवतीति । **ऊर्ध्वमूलं** ऊर्ध्वं निर्गच्छन्मूलस्थानीयकेशश्मश्रुकं **अवाक्छाखं** अवाकुलम्बमानशाखास्थानीयहस्तचरणादिकम् । यद्वा—ताद्दगङ्गुलिकम् । **वृक्षं** एवं विरूपत्वात् व्रश्चनीयं शरीरं **यो वेद** य एवं विपर्यस्तसान्निवेशं सर्वविपर्यासहेतुं यो जानाति **स जनो** मृत्युः **मा मारयात्** मारयेदिति सम्प्रत्येव **श्रद्दध्यात्** श्रद्धां कर्तुमर्हति **न तु जातु** कालान्तरे अद्यैव मरणमस्त्विति सञ्जातबीभत्सः तदानीमेव निश्चिनोतीति । ईद्दशमिदं शरीर**मिति:** यो वेद स जनो न कदाचिदपि मृत्युः मारयेदिति श्रद्धां करोति; मृत्योर्न बिभेतीति यावत् । यद्वा—ब्रह्मविदस्स्तुतिरियं—ऊर्ध्वमूलं ऊर्ध्वाऽव्यक्तं अवाक् व्यक्तं विश्वाख्यं वृक्षं दिविष्ठं यो वेद तस्य मृत्योर्भयं नास्तीति । अन्यस्तु मृत्युसकाशं गच्छतीति भावः । लेव्याडागमः । इतिकरणस्य विसर्जनीयोपजनः छान्दसः ॥

[15]हसितमिति ॥ तदिदं हसितादिकं शरीरस्य बीभत्स्यत्वे अङ्गानि साधनानि विद्धि । यद्वा—बीभत्साहेतोरूर्ध्वमूलत्वादिज्ञानस्य हसितादीन्यङ्गानीति । एभिरपि तत्र बीभत्सा जायत इति **हसितं** आस्यविकारः प्रकाशितदशनः । **रुदितं** चक्षुर्विकारः आविर्भूताश्रुजलः । **गीतं** सर्वाङ्गविकारः प्रलापविशेषः ।

*जन्तुः अहं वि.

**त्किञ्चित् । अङ्गानि स्नेव विद्धि तत् । [16]अतृष्यन्स्तृष्यद्ध्यायत् । अस्माज्जाताऽमे मिथू चरन्न् । पु-**

---

**वीणा** सप्ततन्त्र्यादिका यत्र षड्जादयो भिन्नश्रुतयः स्वरा मूर्छनाविशेषेषु तन्त्रीभिः प्रकाश्यन्ते । **पणवलासितं** पणवो मृदङ्गः तल्लासितं तेनक्रीडितं तद्वादनात्मिका क्रीडा । **मृतं** त्यक्तप्राणं शरीरस्थं नखादि । **जीवं** प्राणवत् । यच्चान्यदपि **यत्किंचित्** स्तनप्रजननादिकं **तदपि सर्वं अङ्गानि विद्धि** हे साधो ! स्न इति पादपूरणे; छान्दसो मकारस्य नकारः । एवकारोऽवधारणार्थः । एतान्यप्यङ्गान्येव बीभत्साजनन इति । एमन्नादित्वात् पररूपत्वम् ॥

[16]अतृष्यन्निति ॥ उक्तमन्धो मणिमविन्ददिति; तमन्ध[1] मिदानीमाविष्करोति । इदमनेन प्रतिपाद्यते—अयं भूतादिः आदर्शवदतिनिर्मलः विश्वान्यपि भुवनानि प्रतिबिम्बवृत्त्या निजोदरस्थानि करोति; तेन चाविवेकग्राहिपुरुषस्तत्स्वभावमिवापन्नः तमेवानुधावति; यत्तेन कृतं तदात्मीयं मन्यते । तथा चास्य स्वाभाविकी दृक्छक्तिरपगतेति स्वात्मानमपि न जानाति दूरे देवमिति । तत्र चाविवेकनिबन्धनं प्रधानस्य चेतनत्वं पुरुषस्य कर्तृत्वमादर्शयति । ततश्चान्योन्याध्यासनिबन्धनः संसारः प्रभवति यावद्देवो न विघटयिष्यति । यथाऽऽहुः—

**तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम् ।**
**गुणकर्तृत्वेऽपि तथा कर्तेव भवत्युदासीनः ॥* इति ॥**

---

[1]तदर्थ.

*सांख्यसप्ततौ.

त्रो निर्ऋत्यां वैदेहः । अचेतां यश्च चेतनः ।
17स तं मणिमविन्दत् । सोऽनङ्गुलिरावयत् । सोऽ-

---

तमिममन्योन्याध्यासं दर्शयति—अतृष्यन्निति । **अतृष्यन्** तृष्यन्ति कांक्षन्ति **कानिचित्**. **तृष्यत्** तृष्यति कांक्षति अन्यः कश्चित् **ध्यायत्** ध्यायति च अविच्छिन्नां बुद्धिं जनयति च । अत्र प्रथमः छान्दसो लुङ्, इतरौ पञ्चमौ लकारौ । प्रथमस्यापदात्परत्वात् निघाताभावः । द्वितीयस्य तिङः परत्वात्, तृतीयस्य तु व्यत्ययेन निघातः । अथ कानि पुनस्तानि कश्च पुनः सः येषां इत्थं मिथस्तृष्णेत्याह—अस्मादिति । **अस्मात्** भूतादेर्यानि **जाता** जातानि भूतानि अमीभिश्च **मिथू** सह यश्चरति भूतानि च स च परस्पराकांक्षया वर्तते इति । अदश्शब्दात्परस्य भिस एकारः छान्दसः । आद्युदात्तत्वं च । मिथश्शब्दपर्यायो मिथूशब्दः, तस्य छान्दसं दीर्घत्वम् । इदानीं तस्योत्पत्तिं दर्शयति—पुत्रो निरृत्या इति । निररणात् निरृतिः यतो विश्वं निर्गच्छति सा प्रकृतिरस्य जननी, अयं तस्याः **निरृत्याः पुत्रः** पुत्रस्थानीयः ततः प्रभवत्वात् । विदेहः देहरहितः पञ्चविंशोऽस्य पिता तस्यापत्यमयं **वैदेहः** योऽयं **अचेताः** चिच्छक्तिरहितः जड एव **चेतनो** भवति ॥

17सः अन्धः **तं** मणिं विषयान् अविन्दत् विन्दति पुरुषसंबन्धात् स्वात्मनि आदर्शयति विषयान् कबळीकरोति । **स** एव हि **अनङ्गुळिः** एवाङ्गुळौ मणिं **आवयत्** आरचयति अङ्गुलिमप्यादर्शयति अघटमानघटनापटुत्वात् । तथा **स** एव **अग्रीव** एव सन् **प्रत्यमुञ्चत्** प्रतिमुञ्चति मणिं असत्यामेव ग्रीवायां तत्कार्यं दर्श-

**ग्रीवः प्रत्यमुञ्चत् ॥ ५३ ॥ सोऽजिह्वो असश्चत । [18]नैतमृषिं विदित्वा नगरं प्रविशेत् । यदि प्रविशेत् । मिथौ चरित्वा प्रविशेत् । तत्सम्भवस्य व्रतम् । [19]आ तमग्ने रथं तिष्ठ । एकाश्वमेकयोजनम् । एकचक्रमेकधुरम् । वातध्राजिगतिं वि-**

यति । स एव असत्यामेव जिह्वायां तत्कार्याणि करोति । तस्मादेवमन्धोपहृतसम्यङ्मतिः पुरुषो देवप्रसादमन्तरेण न श्रेयः प्राप्नोतीति वरेण्यं ऐश्वरं तेजस्सदा ध्येयमिति ॥

[18]अतः परं ब्राह्मणम्—**एतमृषिं** ऋष्यर्थं **विदित्वा नगरं न प्रविशेत्** कृतकृत्यत्वात् । अपि तु विविक्तसेवी भवितुमर्हतीति । अथ **यदि प्रविशेत्** कार्यपरवशः कथं चित्प्रवेशं कार्यं मन्वीत तदा **मिथौ** सहचारिणि अन्तेवासिनि **चरित्वा** संचारयित्वा सन्त*मसंबाधस्थले संस्थाप्य† अन्यैस्सह **प्रविशेत्** । तत् एतत् **संभवस्य** संभवनाम्नः ऋषेः **व्रतं** आचारः स इत्थमाचरति । यद्वा—तदेवत्सम्भवस्य व्रतं नियमस्वरूपं नान्यो मार्गस्सम्भवतीति ॥

[19]अथ तिस्र आग्नेयीरुपदधाति—आ तमग्ने इति ॥ द्वे अनुष्टुभौ एका त्रिष्टुप् । हे **अग्ने! तं रथं आतिष्ठ** आरोह । अथ तमिति विवक्षितं विशिष्टलक्षणं रथं दर्शयति—**एकाश्वं** एकप्रकाराश्वं एकप्रकारव्यापिनं वा **एकयोजनं** एकयोगं न पुनःपुनर्योजनीयं **एकचक्रं** एकप्रकारदीप्तिं कदाचिदप्यपजयाभावात् । चक दीप्तौ । **एकधुरं** सर्वकालमेकप्रकारनिर्वहणं **वातध्राजिगतिं** वाततुल्यवेगगमनं हे **विभो**! व्यापनसमर्थ! ॥

*सत. †चरित्वा वञ्चयित्वा तं बहिरवस्थाप्य.

भो । [20]न रिष्यति न व्यथते ॥ ५४ ॥ नास्याक्षो यातु सज्जति । यच्छ्वेतान्रोहिताꣳश्चाग्नेः । रथे युक्त्वाऽधि तिष्ठति । [21]एकया च दशभिश्च स्वभूते । द्वाभ्यामिष्टये विꣳशत्या च । तिसृभिश्च

---

[20]**न रिष्यति** यो रथो न कदाचिदपि न रिष्यति न नश्यति **न व्यथते** न चलति न च **अस्य यातुः** गच्छतः **अक्षः सज्जति** न क्वचिदपि विहन्यते । यातु सज्जतीत्येकः सकारो वृत्त्यनुरोधाल्लुप्यते । अष्टाक्षरे पादे लघुवृत्तित्वात् पञ्चमस्य । यद्वा—यातु जातु, वर्णव्यत्ययेन जकारस्य यकारः । अथ को विशेष इत्याह—यदिति । **श्वेतान् रोहितांश्चाश्वान् रथे युक्त्वा यत्** यस्मात् **अग्नेरधितिष्ठति** इति तस्मादयं रथो न रिष्यतीति । अग्नेरिति वर्णव्यत्ययेन इकारस्य एकारः । यद्वा—अग्नेरिति विसर्जनीयोपजनः छान्दसः । अधितिष्ठतीति च मध्यमस्थाने पुरुषव्यत्ययः ॥

[21]एकयेति ॥ हे **वायो**! त्वमग्नेः सहायकमाचरन् **एकया च** नियुताऽश्वेन कदाचित् **इष्टये** इष्टचर्थं **वहसे** अग्नेः अग्रे धावसि **स्वभूते** स्वभूतया आत्मीयया । वचनविभक्त्योर्व्यत्ययः । कदाचित् **दशभिः** स्वभूताभिः वहसे । यद्वा—स्वभूते आत्मीये देशे अग्नेरग्रे वहसे । कदाचित् **द्वाभ्यां** वहसे । कदाचित् **विंशत्या** कदाचित् **तिसृभिः** कदाचित् **त्रिंशता** च वहसे । एवं त्वं याभिः **नियुद्भिः** वहसे **ताः** सर्वा अपि **इह** काले कर्मसमाप्तौ **विमुञ्च**

**वहसे त्रिंशता च । नियुद्भिर्वायविह तां विमुञ्च ॥ ५५ ॥**

**ततंक्षुर्धीमहि नाम मे चिकेत गीतं प्रत्यमुञ्चद्व्यथते सप्त चं ॥ ११ ॥**

**[1]आतनुष्व प्रतनुष्व । उद्धमाधम सन्धम । आदित्ये चन्द्रवर्णानाम् । गर्भमाधेहि यः पुमान् ।**

---

रथात् । यद्वा—इह स्वभूते अस्मिन्कर्मणि आत्मीये कृते ता विमुञ्च । वायोरश्वा नियुतः ॥

इत्यारण्यके प्रथमे एकादशोऽनुवाकः.

---

[1]अथ आतनुष्वेति चतस्र उपदधाति । पञ्चमीं यजमान उपधत्ते । द्वे अनुष्टुभौ, एका गायत्री, ततो द्वे बृहत्यौ । बृहती द्वादशाक्षरा इतरेचाष्टाक्षरा इति ॥ इन्द्रस्तूयते—**आतनुष्व** समन्तादात्मानं विस्तारय **प्रतनुष्व** प्रकर्षेणात्मानं विस्तारय क्रतुषु समन्तात् प्रकर्षेण च विस्तारिततेजा भवेति यावत् । ततस्तथा[1] विजृम्भिततेजास्त्वं **उद्धम** उच्छ्रिततर[2]मात्मानं शब्दय; उच्चैः ख्यातो भवेति यावत् । **आधम** आनुकूल्येनात्मानं शब्दय । **सन्धम** सम्यग्यागनिर्वृत्त्या जगत्सु प्रसिद्धो भव । ततस्त्वं **चन्द्रवर्णानां** हिरण्यवर्णानामपां **आदित्ये गर्भमाधेहि** स्थापय । कं गर्भं **यः पुमान्** अग्निमित्यर्थः । यद्वा—आदित्ये गर्भमाधेहि कः यः पुमान् यस्त्वं साधून् पालयिता प्रजननशक्तिमान् ॥

---

[1]ततश्च. [2]उच्छ्रततर.

**[2]इतस्सिक्तꣳ सूर्यगतम् । चन्द्रमसे रसं कृधि । वारादं जनयाऽग्रेऽग्निम् । य एको रुद्र उच्यते । [3]असंख्यातास्सहस्राणि । स्मर्यते न च दृश्यते ॥**

---

[2]इतस्सिक्तमिति ॥ **इतः** कर्मणः **सिक्तं** रेतस्थानीयं **सूर्यगतं** आदित्ये प्राप्तं कर्मफलं हविर्वा तत् **चन्द्रमसे** चन्द्रार्थं तदाकाराभि[1]वृद्ध्यर्थं **रसं कृधि** कुरु । **अग्रे** प्रथममेव **वारादं** तं **अग्निं जनय** । ततस्ततो निस्सृतो रसः प्रजननस्थानीयः चन्द्रमसमाप्याययत्विति । वाराणामभिमतफलानां दाता वारादः । यद्वा वरणीयदेहो वारादः । यद्वा—वारां सलिलानां आदाता वारादः । ईदृशमग्निं जनय । पुनश्चाग्नेर्वैशिष्ट्यमाह—य इति । **यः** अग्निः **एकः** एव **रुद्र उच्यते** रुद्रात्मना तत्रतत्र स्तूयते 'रुद्रो वा एष यदग्निः '* इत्यादौ । न ह्यग्नेरन्यः कश्चिद्रुद्रत्वेन स्तूयते । यद्वा—एकः प्रधानः अद्वितीयः तादृशरुद्रात्मकतया योऽग्निस्स्तूयते तं जनयेति ॥

[3]इदानीं रुद्रस्स्तूयते—**असंख्याताः** असंख्यातानि **सहस्राणि** देवानां सन्ति । लिङ्गव्यत्ययः, सकारोपजनो वा । तेषु न कश्चिदग्निरिव रुद्रत्वेन स्तूयते । यद्वा—असंख्यातसहस्रप्रमाणानां देवानां मध्ये रुद्र एव ह्येक इति स्तूयते । 'एक एव रुद्रो न द्वितीयाय तस्थे '† इति । किञ्च—असंख्यातसहस्रप्रमाणानां देवानां मध्ये यो रुद्रः सर्वदा **स्मर्यते** एव 'अस्ति कश्चिज्जगत्प्रभुः' इति, **न** कदाचिदपि **दृश्यते** 'अयं सः' इति न चक्षुषा गृह्यते तादृशरुद्रात्मतया यो रुद्रस्स्तूयत इति । तदाह—

---

*सं. ५-४-३. †सं. १-८-६. [1]तदाकादि.

५६ ॥ एवमेतं निबोधत । [4]आ मन्द्रैरिन्द्र हरिभिः । याहि मयूररोमभिः । मा त्वा केचिन्न्येमु*रिन्न पाशिनः । दधन्वेव ता इहि । [5]मा मन्द्रैरि-

एवमेतं निबोधत एतमग्निं एवमेतद्रूपतुल्यं निबोधत अवगच्छतेति तादृशोऽग्निस्त्वया जनयितव्य इति ॥

[4]पुनरिन्द्रस्तुतिः—आमन्द्रैरिति ॥ हे इन्द्र! मन्द्रैः महनीयैः मदनशीलैर्वा हरिभिः अश्वैः मयूररोमभिः मयूरसदृशरोमभिः हरितवर्णैर्वा आयाहि आगच्छ । आयान्तं च त्वा त्वां केचिदपि जनाः पाशिनः ताडयितारो[1] मा न्येमुः न्यग्भावयेमुः । अन्तर्भावितण्यर्थो नमतिर्न्यग्भावनायां वर्तते । अत्र न्येमुरिति यकारोपजनः छान्दसः । यद्वा—निपूर्वाद्यमेर्लिटि नियेमुरिति वक्तव्ये उपसर्गान्त्यलोपश्छान्दसः । नियमनमात्मसात्कारणम् । मा नेति द्वयोः प्रतिषेधशब्दयोरुपादानेनादरं द्योतयति । इदित्यवधारणे । यद्वा—विशब्दस्यादिलोपः । विं पक्षिणमिव पाशिनः पक्षिग्राहिणः । तथैव च बह्वृचा अधीयते । यद्वा—हरिभिरायान्तं त्वां केचिदपि जनाः मा न्येमुः न च पाशिनः पाशिनोऽश्वानां यन्तारः ते च त्वां नन्येमुः विलम्बितगमनं माकार्षुः । ततश्च सुखागमनदीप्तस्त्वं[2] दधन्वेव दातेव सर्वाभिमतानि दातुमिवोद्युक्तः ता अस्मद्यज्ञभुव इहि गच्छ । धनधान्ये वनिपि छान्दसं द्विर्वचनम्, अन्तोदात्तत्वं च । छान्दसस्य लिटः क्वसुः । अन्त्यलोपः छान्दसः ॥

[5]मा मन्द्रैरिति ॥ मा मां अहम् । विभक्तिव्यत्ययः, अन्त्यलोपश्च ।

*न्नियेः [1]पाशिनः अश्वानां यन्तारः. [2]सुखागमन आप्तस्त्वं.

न्द्र हरिभिः । यामि मयूररोमभिः । मा मा केचिन्न्ये*मुरिन्न पाशिनः । निधन्वेव ताँ२ इमि । [6]अणुभिश्च महद्भिश्च ॥ ५७ ॥ निघृष्वैरसमायुतैः । कालैर् हरित्वमापन्नैः । इन्द्रायाहि सहस्र-

हे **इन्द्र**! अहं त्वत्प्रसादेन **मन्द्रैः** **मयूररोमभिः** **हरिभिः** **यामि** यानि पुण्यान् लोकान् । यद्वा—कर्मोत्तरकालं त्वया सह अहमपि मन्द्रैरिन्द्रहरिभिः मयूररोमभिः यामि यानि । यद्वा—एतैः मन्द्रैः मयूररोमभिः हरिभिः अमा सह अहमपि यामीति । अमाशब्दस्यादिलोपः छान्दसः । **मा** मां च यान्तं **केचिद**पि **पाशिनो** **मा** मैव **न्येमुः** । ततो **निधन्वेव** निधानवानिव लब्धनिधिरिव त्वया सह तान् लोकान् **इमि** एमि अयानि । 'दीर्घादटि समानपदे' इति रुत्वं, 'आतोटि नित्यम्' । वर्णव्यत्ययेन एमि इत्येकारस्य इकारः । निपूर्वाद्धनतेर्वनिपि निधन्वान् । छान्दसमन्तोदात्तत्वम् । क्कसुनि वा द्विर्वचनाभावः । निधानशब्दाद्वा मत्वर्थीये वनिपि ह्रस्वत्वमन्त्यलोपश्च ॥

[6]अथ द्वे उपदधाति—अणुभिश्चेति द्वे अप्यनुष्टुभौ ॥ **अणुभिः** सूक्ष्मैः **महद्भिः** स्थूलैः **च** **निघृष्वैः** नितरां दीप्तैः **असमायुतैः** असङ्गतैः **कालैः** कालवर्णैः कालहेतुभिर्वा **हरित्वं** हरितत्वं हरिद्भावं वा **आपन्नैः** हरिन्नामभिर्वाजिभिरिति यावत् । हे **इन्द्र**! **आयाहि** आभिमुख्येन अस्मत्सकाशं प्राप्नुहि **सहस्रयुक्** अक्षिसहस्रयुक्तः रश्मिसहस्रयुक्तो वा । यद्वा—सह सरन्ति गच्छन्तीति सहस्राः अनुचराः तैर्युक्त आयाहि ॥

*निये.

युक् । [7]अग्निर्विभ्राष्टिवसनः । वायुश्श्वेतसिकद्रु-
कः । संवत्सरो विषूवर्णैः । नित्यास्तेऽनुचरास्त-
व । [8]सुब्रह्मण्योꣳ सुब्रह्मण्योꣳ सुब्रह्मण्योम् । इ-
न्द्रागच्छ हरिव आगच्छ मेधातिथेः । मेष वृषण-

[7]के पुनस्ते अनुचरा इत्याह—अग्निः एकः विभ्राष्टिवसनः विभ्राजमानवासाः । वायुः अन्यः श्वेतसिकद्रुकः श्वेतानां सिकतानां द्रोग्धा । पृषोदरादिः । संवत्सरः अपरः विषूवर्णैः नानाभूतैः वर्णैः युक्तः । ते त्रयः तव नित्या ध्रुवा अनुचराः न चलाः न कदाचिदपि तव सकाशं विमुञ्चन्तीतीमे ध्रुवाः एभिः युक्त आयाहीति ॥

[8]अथ सुब्रह्मण्यामेकामुपदधाति—सुब्रह्मण्योमिति ॥ निगदोयम् । ओमित्याह्वानार्थः । हे इत्यर्थः । शोभनं ब्रह्म सुब्रह्म वेदः, तस्मै हितम् । 'ओमाङोश्च' इति पररूपत्वम् । आदरातिशयार्थमस्य त्रिर्वचनम् । 'दूराद्धूते च' इति त्रयाणां प्लुतष्टेः, तृतीयस्यार्धचतस्रो मात्रा इत्येके । वाक्यं सर्वमेकश्रुतिं, अन्ते त्वेकमक्षरमुदात्तम् । हे इन्द्र ईश्वर! । यद्वा—दाना[1]दिगुणोपेत! आगच्छ अस्मद्यज्ञं हे हरिवः! हरिभिरश्वैः रश्मिभिर्वा तद्वन्! । 'छन्दसीवनिपौ' इति वनिप् । 'मतुवसोः' इति रुत्वम् । हरिभिस्सहागन्तव्यमिति सूचनार्था क्रियापदावृत्तिः । हे मेधातिथेः मेधो यज्ञः तत्रातिथिः पूज्यः, मेधानां बुद्धीनां वाऽतिथिः मेधातिथिरग्निः तस्य मेष! स्पर्धक! । मिष स्पर्धायां । यद्वा—मिषु सेचने मेषः सेक्ता उत्पादयिता ।

[1]इरादाना.

**श्वस्य मेने ॥ ५८ ॥ गौरावस्कन्दिन्नहल्यायै जा-**

पचाद्यच् । मेधातिथेरित्यन्ते उदात्तदर्शनात् वाक्यसमाप्तिः कृता । **वृषणश्वस्य मेने** ! वर्षणशीला वृषणाः तादृशा अश्वा व्यापका वा रश्मयो यस्य स वृषणश्वोऽग्निः । 'वृषण्वस्वश्वयोरुपसंख्यानम्' इति भत्वम् । तस्य मेने ! दीप्ते ! दीप्तिहेतो ! । यद्वा—मेनिश्शरीरं वृषणश्वस्य शरीरभूत ! । **गौरावस्कन्दिन्** गौरवर्णोऽग्निः गौरः तस्यावस्कन्दयितः ! त्वदधीना ह्यग्नेर्दाहशक्तिरिति । स्कन्दिर् गति-शोषणयोः । यद्वा—गौरमाग्निं अवस्कन्द्य आक्रम्य तद्भावेन स्थित ! । **अहल्यायै जार** ! अहल्या वाक् समन्तात् लिख्यत इति । हल विलेखने । तस्या जारयितः ! परिणामकारिन् !। यद्वा—वागपि जीर्यते त्वत्स्तुतौ, गुणानामानन्त्यात् असमर्था भवतीति तस्मात्तस्याः जरयितः ! । यद्वा—वाचा स्तोतव्य ! । जी-र्यतेः स्तुतिकर्मणः कर्मणि घञ् । **कौशिकब्राह्मण** कुशिः कोशः द्वयोः कुश्योः भवः कौशिकः । यथोक्तम्—'अथ यत्सुवर्णरजताभ्यां कुशीभ्यां परिगृहीत आसीत् । साऽस्य कौशि-कता'* इति । अग्निरुच्यते तस्य ब्राह्मण ! ब्राह्मणवत्प्रिय ! । यद्वा—अग्नेर्ब्राह्मणवन्निर्वचनग्रन्थवत् व्यापक ! । **गौतमब्रुवाण** ! गा-मुदकं तमयते छादयते गर्भे सत्त्वेन गोतमः । गोमत्तमो वा गौतमः अतिशयेन तेजस्वी अग्निः तं ब्रुवाण । 'तत्प्रियतया त-मेव ब्रूत इति तद्ब्रुवाणः' इति नैरुक्ताः । ऐतिहासिकास्त्वाहुः—पूर्वं कस्मिंश्चित्कारणे मेधातिथ्यादिसकाशेष्विन्द्र आजगाम । तदानीं तत्प्रोत्साहनार्थं तत्संकीर्तनेन तदागमनं प्राथ्यर्त इति । तथा-हि—मेधातिथिं ऋषिं मेषात्मना समाजगाम । वृषणश्वमुनिं मेना-

*ब्रा. १-५-१०.

**र । कौशिकब्राह्मण गौतमंब्रुवाण । [9]अरुणाश्वा इहागताः । वसवः पृथिविक्षितः । अष्टौ दिग्वासंसोऽग्नयः । अग्निश्च जातवेदाश्चेत्येते । [10]ताम्राश्वास्ताम्ररथाः । ताम्रवर्णास्तथाऽसिताः । द-**

रूपोऽभ्यैत्* । गौतमदारानवस्कन्दिभावेन अभ्यभवत् । गौतमदारावस्कन्दी गौरावस्कन्दी; आद्यन्तयोः वर्णयोः ग्रहणम् । अवस्कन्दी सेक्ता । अहल्या गौतमपत्नी तानेव गौतमदारान्नामतोपि दर्शयति । तां जारो भूत्वा अभ्यधर्षयत् । जारः चोरपतिः । कौशिकमृषिं ब्राह्मणरूपेणाभ्यगच्छत् । गौतममृषिं ब्रुवाणो भूत्वा उत्तेजितवान् । ब्रुवाणस्तोतेति ॥

[9]अथ अरुणाश्वा इति द्वे अनुष्टुभौ उपदधाति ॥ **अरुणाश्वाः** अरुणोऽनूरुः तद्वर्णा अश्वा एषां तादृशा इहास्मिन्कर्मणि **आगताः पृथिविक्षितः** भूमिवासिनो ये **अष्टौ वसवः** ते **अष्टौ दिग्वाससोग्नयः** अवगन्तव्याः । दिशो वसत इति दिग्वाससः, दिशो वासांसि येषां दिशां वा वासयितारः । के पुनस्त इत्याह— **अग्निश्च जातवेदाश्चेति** । य एतस्मिन्मन्त्रेऽनुक्रान्ताः **एते** ते वेदितव्याः । उक्तं हि तत्र मन्त्रान्ते ‘एतेऽष्टौ वसवः क्षिताः’† इत्येवम् । तस्यैव व्याख्यानरूपोयं मन्त्र इति ॥

[10]ताम्राश्वा इति ॥ **ताम्राश्वाः** ताम्रवर्णाश्वाः तथा **ताम्ररथाः** ताम्रवर्णरथाः स्वयं च **ताम्रवर्णाः तथा असिताः** किंचिदपि सितत्वं येषां नास्ति तादृशाः अतिरक्ता इत्यर्थः ।

*रूपेणाह्वयत्. †आ. १-९.

**ण्डहस्ताः खादु*द्दतः । इतो रुद्राः परां गताः ॥ ५९ ॥ [11]उक्तꣳ स्थानं प्रमाणं च पुर इत । [12]बृह-स्पतिश्च सविता च । विश्वरूपैरिहागताम् । रथे-**

दण्डहस्ताः दण्ड[1]पाणयः खाद्दतः सदा भक्षयद्दन्ताः । 'छन्दसि च' इति दद्भावः । रुद्राः रोदयितारः प्रजानाम् । एवंरूप-त्वादेव ते इतः स्थानात् पृथिव्याख्यात् परां दिवं गताः । पूर्वं पृथिविक्षितः इदानीं दिवं गता इति रोदयितॄणां अन्यत्र गमनात् अतः परं अस्मिन् स्थाने न केन चिद्रोदितव्यमिति भावः । एते श्रमणा नामाग्नयो वेदितव्याः ॥

[11]अतः परं ब्राह्मणम् । उक्तं एतेषां स्थानं प्रमाणं च उपपत्तिश्च पुर इत इतः पूर्वस्मिन्ननुवाके 'नक्षत्रैश्शंकृतोऽवसन्' इत्यत्र नक्षत्रस्थानं पुण्यकृतां स्थानमिति 'यो वा इह यजते । अमुं स लोकं नक्षते । तन्नक्षत्राणां नक्षत्रत्वम्'† इति नक्षत्रैस्सह तस्मिन् स्थाने वासस्य यष्टृत्वं प्रमाणं[2] चोक्तमिति । इत इत्यस्यान्त्य-लोपः छान्दसः । केचिदाहुः—पूर्वमन्त्रशेषोऽयं यजूरूपो मन्त्र इति । अयमर्थः—ये यूयं इतःपरां गताः गच्छत तेषां युष्माकं स्थानमुक्तं प्रसिद्धं यत्र च युष्माभिर्गन्तव्यं तत्र च या पूर्युष्मदी-या तस्याश्च प्रमाणमुक्तं प्रसिद्धमेव । तत्रैव शीघ्रमित गच्छत तत्रैव सुखं वस्तव्यं काले चास्मिन्यज्ञेऽप्यागन्तव्यमिति ॥

[12]अथैकामनुष्टुभमुपदधाति—बृहस्पतिश्चेति ॥ **बृहस्पतिश्च सविता च** द्वावेतौ **विश्वरूपैः** नानारूपैः अश्वैः रश्मिभिर्वा इह अस्मिन् स्थाने **आगतां** आगच्छतां इतः पराङ्गताः वसवः; एतौ तु

*दग्द. [1]गदा. †ब्रा. १-५-२. [2]ब्राह्मणं.

**नोद॒कव॒र्त्मना । अ॒प्सुषा॒ इति॒ तद्द्व॒योः । [13]उ॒क्तो वेषो॒ वासा॑ꣳसि च । का॒लाव॒यवा॒नामि॒तः प्रती॒च्या* । वा॒सात्या॒ इत्या॒श्विनोः । को॒ऽन्तरि॑क्षे शब्दं॑ करो॒तीति॑ । वा॒सिष्ठो रौहि॒णो मी॒मा॒ꣳसां च॑क्रे ।**

तत्स्थानात् इहागतां इहैव जगदनुग्रहार्थं वर्तितुम् । 'मन्त्रे घस' इति च्लेर्लुक् । लङ्येव वा शपो लुक् । रथेन रंहणस्थानेन **उदकवर्त्मना** उदकप्राप्तिहेतुना आगताम् । **अप्सुषा** अपां सनितारौ संभक्तारौ अतोत्रागतां इति । अपां सनितारौ अप्सुषौ । 'जनसनखन' इति विट्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । विभक्तिव्यत्ययेन सप्तमी, तस्याः 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । इतिशब्दो मन्त्रसमाप्त्यर्थः । तस्मिन्नावादेशो वकारस्य लोपः । **तद्द्वयो**रित्यादि ब्राह्मणम् । पूर्वमन्त्रशेषो वा । तयोः बृहस्पतिसवित्रोः किं उक्तं स्थानं प्रमाणं चेत्येव तदेव स्थानं एतयोः द्वयोरपि इति वेदितव्यम् ॥

[13]उक्त इत्यादि ब्राह्मणमेव ॥ **कालावयवानां** ऋतूनां **इतः प्रतीच्या** इतोऽवधेः प्रतीच्येष्वनुवाकेषु 'साकंजानां'† इत्यादिषु । 'सुपां सुलुक्' इत्याकारः । यद्वा—यत्र वस्वादीनां उक्तं स्थानं प्रमाणं च 'पवित्रवन्तः'‡ इत्यत्र इतोऽप्यनुवाकात् प्रतीच्येषु अनुवाकेषु 'साकंजानां'† इत्यादिषु 'उक्तो वेषो वासांसि च' 'ऋतुर् ऋतुना नुद्यमानः'† इत्यादिना । प्रतिकूला अवाचीना गतिः प्रतीची तत्र भवा अनुवाकाः प्रतीच्याः । 'ऋत्विक्' इत्यादिना क्विनि 'दिगादिभ्यो यत्', अकारनकारयोर्लोपे 'चौ' इति पूर्वस्य दीर्घत्वम् । अथ **वासात्या**

*च्या. †आ. १-३. ‡आ. १-११.

**तस्यैषा भवति । वाश्रेव विद्युदिति । [14]ब्रह्मण उदरणमसि । ब्रह्मण उदीरणमसि । ब्रह्मण आस्तरणमसि । ब्रह्मण उपस्तरणमसि ॥ ६० ॥**

**इरयेते च मेने परां गताश्चके षट् ॥१२॥**

**( अपक्रामत गर्भिण्यः )**

इति 'वासात्यौ चित्रौ'* इत्यारभ्य प्रकरणे **अश्विनोः** किं उक्तो वेषो **वसांसि** च । अथ **को** नाम **अन्तरिक्षे शब्दं करोतीति** गर्जनं करोतीति **वासिष्ठो** वसिष्ठगोत्रजन्मा **रौहिणो** रोहिणस्यापत्यं **मीमांसां चक्रे** विचारितवान् । 'कास्प्रत्ययादाम्' इत्याम्प्रत्ययः । रोरिणशब्दात् ऋष्यण् । यद्वा—वसिष्ठस्य पुत्रो रोहिण्यां जातः । स्त्रीभ्यो ढक् बाध्यते । तथा **तस्य** प्रतिवचनरूपा **एषा** ऋक् **भवति वाश्रेव विद्युदिति** । व्याख्यातेयं 'अग्निना रयिमश्नवत्'† इत्यत्र । **वाश्रा** वाशनशीला गौरिव विद्युन्मिमाति निमिमीते ध्वनिं माता वत्समिव सिषक्ति सिञ्चति वृष्टिम् । यदा एषां मरुतां अनुमते वृष्टिरसर्जि सृज्यते तदा विद्युत् शब्दं करोतीति विद्युत्वान् पर्जन्य इत्यर्थ इति ॥

[14]अथ चतस्रो ब्रह्मसदन उपदधाति—ब्रह्मण उदरणमसीति चतुर्भिः यजुर्भिः ॥ **ब्रह्मणो** हिरण्यगर्भस्य ब्रह्मण एव वा **उदरणं** उदक्तत्त्व‡हेतुरसि हे इष्टके ! **ब्रह्मण उदीरणं** उदीर्णत्वहेतुरसि । अथ **ब्रह्मण आस्तरणं** आसनमसि । अथ **ब्रह्मण उपस्तरणं** परिस्तरणमसीति इष्टकानां स्तुतिः ॥

इत्यारण्यके प्रथमे द्वादशोनुवाकः.

---

*आ. १-१०. †सं. ३-१-११. ‡उदात्तत्व. उदारत्व.

[1]अ॒ष्टयो॑नीम॒ष्टपु॑त्त्राम् । अ॒ष्टप॑त्नीमि॒मां म॒हीम् । अ॒हं वे॑द॒ न मे॑ मृ॒त्युः । न चाऽमृ॒त्युर॒घाऽऽह॑रत् । [2]अ॒ष्टयो॒न्य॑ष्टपु॑त्त्रम् । अ॒ष्टप॑दि॒दम॒न्तरि॑क्षम् । अ॒हं वे॑द॒ न मे॑ मृ॒त्युः । न चाऽमृ॒त्युर॒घाऽऽह॑रत् । [3]अ॒ष्टयो॑नीम॒ष्टपु॑त्त्राम् । अ॒ष्टप॑त्नीम॒मूं दिव॑म् ॥ ६१ ॥ अ॒हं वे॑द॒ न मे॑ मृ॒त्युः । न चाऽमृ॒त्युर॒घाऽऽह॑रत् । [4]सु॒त्त्रामा॑-

---

[1-3]अथ दिक्षु अवान्तरदिक्षु चाष्टौ उपदधाति—अष्टयोनीमिति ॥ तिस्रोऽनुष्टुभः । तिस्रस्त्रिष्टुभः । द्वे अनुष्टुभौ । **अष्टयोनीं** अष्टौ प्रकृत्यादयो योनयः कारणानि यस्यास्सा अष्टयोनी । छान्दसो दीर्घः वर्णव्यत्ययेन वा दीर्घत्वम् । **अष्टपुत्रां** अष्टौ वक्ष्यमाणमित्रादयः पुत्रा यस्याः तादृशीम् । **अष्टपत्नीं** अष्टौ पतयः पातारः इन्द्रादयो यस्याः तादृशीम् । 'विभाषा सपूर्वस्य' इति ङीन्नकारौ । **इमां** एवंगुणां **महीं** महतीं महाप्रभावां **अहं वेद** जानामि । अहमिति मन्त्रद्रष्टृत्वं दर्शयति । तस्मात् **मे** एवं विदुषः **न मृत्युः** ज्ञानसामर्थ्यादमृतत्वमेव मुक्त एव भविष्यामीति । किञ्च—**अमृत्युः** अपमृत्युश्च **अघा** अघानि दुःखानि **मे नाहरत्** नाहरति । यद्वा—अघा अघात्मा अपमृत्युः मां नाहरति ज्ञानप्रभावेन अपमृत्युं च तरामीति । **अघ**शब्दात् 'शेश्छन्दसि' इति लोपः 'सुपां सुलुक्' इत्याकारः । पक्षान्तरे वेदेत्यस्य 'चादिलोपे विभाषा' इति निघाताभावः । अनयैव उत्तरे व्याख्याते । अष्टपदिति । छान्दसोन्त्यलोपः ॥

[4-5]सुत्रामाणं महीमूषु इति प्रतीकग्रहणं 'सुत्रामाणं पृथि-

**णं [5]म॒हीमू॒ षु । [6]अदि॑ति॒र्द्यौरदि॑तिर॒न्तरि॑क्षम् । अ॒दि॑ति॒र्मा॒ता स पि॒ता स पु॒त्रः । विश्वे॑ दे॒वा अदि॑ति॒ः पञ्च॒जना॑ः । अदि॑ति॒र्जा॒तमदि॑ति॒र्जनि॑त्वम् । [7]अ॒-**

वीं ' इत्यस्या ' महीमू षु मातरं ' इत्यस्याश्च । व्याख्याते चैते 'वैश्वानरो नः '* इत्यत्र । सुष्ठु त्रात्रीं पृथिवीं द्योतनशीलां अपापां सुसुखामखण्डितां सुष्ठु प्रकर्षेण च प्रजानां नेत्रीं दैवीं देवानां सम्बन्धिनीं नावं सर्वदुःखोत्तरणहेतुं स्वरित्रां शोभनारणां अनागसं अप्रमादां अस्रवन्तीं अच्छिद्राम् ईदृशीं स्वस्तये अविनाशाय आरुहेमेति । अथेतरा—महीं महतीं मातरं निर्मात्रीं शोभनकर्मणां ऋतस्य सत्यस्य पालयित्रीं अवसे रक्षणाय सुष्ठु आह्वयामः तुविक्षत्रां प्रवृद्धबलां अजरन्तीं अक्षयां उरूचीं महद्भिरनुगतां सुसुखां अखण्डितां सुष्ठु प्रणेत्रीमिति ॥

[6]अदितिर्द्यौरिति ॥ **अदितिः** अदीना पृथिवी देवमाता वा सैव **द्यौः** द्योतनशीलो नाकः । सैव **अन्तरिक्षं** अन्तरा ईक्ष्यमाणं व्योम । सैव **माता** निर्मात्री जगतः । सैव **पिता** पात्री । सैव **पुत्रः** दुःखत्रात्री । सैव **विश्वे** अपि **देवाः** । सैव **पञ्चजनाः** चत्वारो वर्णाः निषादपञ्चमाः तेऽप्यदितिः । सैव **जातं** जननं प्रजानां उत्पत्तिः । सैव **जनित्वं** जन्मादिकारणं तत्रैव सर्वमुत्पद्यत इति । औणादिक इकप्रत्ययः । एवं विश्वात्मत्वेन अदितिस्स्तूयते ॥

[7]अष्टौ पुत्रास इति ॥ अष्टपुत्रत्वं पृथिव्या उक्तं; तदिदानीं व्याचष्टे—**अष्टौ पुत्रासः** अदितेः बभूवुः **ये तन्वः परि** उपरि-

*सं. १-५-११.

ष्टौ पुत्रासो अदितेः । ये जातास्तन्वः परि । देवाँ२ उपप्रैत्सप्तभिः ॥ ६२ ॥ परा मार्ताण्डमास्यत् ।
[8]सप्तभिः पुत्रैरदितिः । उपप्रैत्पूर्व्यं युगम् । प्रजा-

---

जाताः देहजाः पुत्रा इत्युक्तं भवति । 'जसादिषु वा वचनं प्राङ्णौ चङ्युपधायाः' इति 'घेर्ङिति' इति गुणाभावः । तेषां मध्ये **सप्तभिः** पुत्रैः सह **देवान् उपप्रैत्** देवानां समीपं गतवती । पूर्ववद्रुत्वानुनासिकौ । **मार्ताण्डं** मार्ताण्डस्वभावं तु **परास्यत्** त्यक्तवती यस्मिन् जाते अण्डं मृतमभवत् स मार्ताण्डः पुत्रः । यथोक्तम्—

**मृतोऽण्डो जायते यस्मात् मार्ताण्डस्स उदाहृतः ।**

इति । तं परास्य अन्यैस्सह देवसकाशं गताऽदितिरिति ॥

[8]सप्तभिरिति ॥ पुत्रविशेषत्यागोपादानकारणकथनार्थोऽयं मन्त्रः । इयं **अदितिः सप्तभिः पुत्रैः** उत्पाद्यमानैरुपलक्षिता **पूर्व्यं युगं उपप्रैत्** सप्तानामुत्पत्तिकाल एव हीत्यर्थः । जननमरणयोर्यत्पूर्वं तस्मै हितं तत्र वा साधु **पूर्व्यं** प्रजाभिवृद्धिकारणं युगं योगः मिथुनीभावलक्षणः । युगळाधिकरणत्वाद्वा युगम् । तादृग्युगं उपप्रैत् उपगतवती यस्मात् तस्मात् प्रजायै प्रजाभिवृद्धये अभवत् । तस्मात् **मृत्यवे** मृत्युनिवृत्त्यर्थं **मार्ताण्डं पराभरत्** त्यक्तवती । तस्याण्डमृतिहेतुत्वेन प्रजाभिवृद्धिहेतुत्वाभावात् । न हि तदुपादानकाले पूर्व्यं युगं उपप्रैत् । तस्मात्तस्य कुलक्षयहेतुत्वात् तं परास्य पूर्व्ययुगप्रभवानादाय[1] देवस्थानं गतवती । मशकेभ्यो धूम इतिवत् चतुर्थ्या मृत्यु-

---

[1]प्रभावादेव.

यै मृत्यवे तत् । परा मार्ताण्डमाभरदितिः । [9]ताननुक्रमिष्यामः । मित्रश्च वरुणश्च । धाता चार्यमा च । अꣳशश्च भगश्च । इन्द्रश्च विवस्वाꣳश्चेत्येते । [10]हिरण्यगर्भो [11]हꣳसश्शुचिषत् । [12]ब्रह्म जज्ञानं

निवृत्त्यर्थतोच्यते । (सामर्थ्यात् मृत्युनिवृत्तौ मृत्युशब्दः) । यद्वा—अण्डस्य मृत्यवे सञ्जातं मार्ताण्डं अप्रजातिहेतुं मन्यमाना पराभरत् । भरणं निवृत्तिः पराभरणं पुनस्त्याग एव । इतिशब्दो मन्त्राणां परिसमाप्तिं द्योतयति ॥

[9]अतः परं ब्राह्मणं—तानिति ॥ तान् इदानीं अदितेः पुत्रान् अनुक्रमिष्यामः अनुक्रमेण कीर्तयामः । मित्रश्चेत्यादि । एते मित्रादिनामानोऽष्टौ पुत्राः । एतैर्नामभिः दिक्षु अवान्तरदिक्षु चाष्टावुपदधाति । नामधेयान्येव मन्त्राः । 'मित्रस्तया देवतया' इत्यादिः प्रयोगक्रमः ॥

[10]अथ हिरण्यपुरुषमुपदधाति—हिरण्यगर्भ इति ॥ प्रतीकग्रहणमिदं 'हिरण्यगर्भस्समवर्तताग्रे*' इत्यस्यास्त्रिष्टुभः । व्याख्याता चेयं 'ऊर्ध्वा अस्य'* इत्यत्र । हिरण्यगर्भ एव अग्रे समवर्तत नान्यत् किञ्चित् । स च जातमात्र एव सर्वस्य भूतजातस्य एकः प्रधानः पतिरासीत् । स दाधार अधारयत् पृथुतरं नाकलोकं द्यां अन्तरिक्षं इमां च पृथिवीं कस्मै प्रधानाय कशब्दवाच्याय देवाय हविषा परिचरणं कुर्म इति ॥

[11]अथ पुरस्ताद्रुक्ममुपदधाति—हंसश्शुचिषदिति जगत्या ॥ इदं

*सं. ४-१-८.

[13]तदित्पदमिति । [14]गर्भः प्राजापत्यः । अथ पुरुष-

च प्रतीकग्रहणम् । इयं च व्याख्याता 'इन्द्रस्य वज्रोसि' इत्यत्र* । हंस आत्मा भूत्वा शुचिषु देशेषु सीदति । वसुः वासयिता सविता भूत्वा अन्तरिक्षे सीदति । होता भूत्वा वेद्यां सीदति । अतिथिर्भूत्वा गृहेषु सीदति । नृषु सीदति हंसात्मा भूत्वा । वरे रविमण्डले सीदति सवित्रात्मा । ऋते यज्ञे सीदति होत्रात्मा । व्योमनि विविधरक्षणे सीदति अतिथ्यात्मना । अब्जाः अद्भ्यो जातो हंसः 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति'† इति । गोजाः रश्मिभ्यो जातस्सविता । ऋतात् सत्यात् जातः ऋतजाः होता । अद्रिः अजराज्जातः अतिथिः । ऋतं सर्वगतं सत्यं वा । बृहत् ब्रह्म । यदीदृशं वस्तु तत्त्वमसि इति रुक्मस्तुतिः ॥

[12]अथ पुष्करपर्णस्योपरिष्टात् पश्चिमे प्रदेशे रुक्ममुपदधाति—ब्रह्म जज्ञानमिति ॥ प्रतीकग्रहणं ब्रह्मजज्ञानमिति त्रिष्टुभः । व्याख्याता चेयं 'अभ्यस्थाद्विश्वाः'‡ इत्यत्र । ब्रह्म परिबृढं जज्ञानं जायमानमेव प्रथमं पुरस्तात् पूर्वस्यां दिशि वेनः वेनाख्यः वेनः कान्तः आदित्यः सुरुचः सुरोचनान् रश्मीन् लोकान्वा व्यावः विवृणोति । अस्य लोकस्य सीमतः सीमङ्कचः आरभ्य वृणोति सर्वमर्यादाः प्रवर्तयति बुध्निया अन्तरिक्षप्रभवा अपि विष्ठाः विविधं स्थिताः उपमाः उपमीयते परिच्छिद्यते याभिस्ताः विवृणोति । किञ्च—सतः प्राणतः असतश्च अप्राणतश्च योनिं विवः विवृणोतीति ॥

[13]अथैकामुपदधाति—तदित्पदमिति ॥ इदमपि प्रतीकग्रहणं

*सं. १-८-१५. †छा. ५-९-१. ‡सं. ४-२-८.

स्सप्तपुरुषः ॥६३॥ (यथास्थानं गर्भिण्यः)

अमूं दिवꣳ सप्तभिरेते चत्वारिं च ॥१३॥

[1]योसौ तपन्नुदेति। स सर्वेषां भूतानां प्राणा-

'तदित्पदं न विचिकेत '* इत्यस्यास्त्रिपदायाः त्रिष्टुभः । व्याख्याता चेयं ' उदस्तांप्सीत् ' इत्यत्र*। नूनं तत्पदं अक्षरं ओङ्कारं स्वर्गद्वारात्मकं न विचिकेत न विजानाति विद्वान् सर्वमन्यद्वेत्ति इदमेकमेव न वेद। यत् यतः मृतः पुनः जीवान् जीवयोनीरप्येति प्राप्नोति। सः अविद्वान् जीवो गर्भोपमस्तस्मात् मृतत्वात् जीवतु अमृतो हि पुनः जीवभावं न प्रतिपद्यते । यद्वा—गर्भोपमो यदविद्वान् जीवो मृत एव जीवात् जीवन् मृत इत्यर्थ इति ॥

[14]अथ ब्राह्मणं—गर्भः प्राजापत्यः प्रजापतेरयं गर्भः । इदं समुदायनाम प्राजपत्यो गर्भ इति । अथ अनन्तरं पुरुष उच्यते कीदृशः स पुरुषः सप्तपुरुषः सप्त पुरुषरूपाः किंकरस्थानीयानक्षत्रादयो यस्य तादृशः ॥

इत्यारण्यके प्रथमे त्रयोदशोनुवाकः.

---

[1]' योसौ तपन्नुदेति ' इत्यायुष्कामः सततमादित्यमुपतिष्ठते। उपधाने नास्ति विनियोगः । योऽसौ देवः तपन्नुदेति सर्वेषां भूतानां प्राणिनां प्राणानादय सदैव प्राणापहारेण उदेति।

*ब्रा. ३-७-१०.

नादायोदेति । मा मे प्रजाया मा पशूनाम् । मा मम प्राणानादायोदगाः । [2]असौ योऽस्तमेति । स सर्वेषां भूतानां प्राणानादायास्तमेति । मा मे प्रजाया मा पशूनाम् । मा मम प्राणानादाया-स्तंगाः । [3]असौ य आपूर्यति । स सर्वेषां भूता-नां प्राणैरापूर्यति ॥ ६४ ॥ मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरापूरिष्ठाः । [4]असौ योऽ-पक्षीयति । स सर्वेषां भूतानां प्राणैरपक्षीयति ।

---

यदाऽयमुदेति तदानीमेकदिवसोऽयं प्राणिनामायुर्भवतीति* । एवं परोक्षवदुक्त्वा प्रत्यक्षवदाह—मा मे इति । यद्वा—एवं हि लोके प्रसिद्धं योसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादयोदेतीति; अतोऽहं भीतो ब्रवीमि—हे देव ! मे मम **प्रजायाः पशूनां मम** च **प्रा-णानादाय मोदगाः** त्वत्प्रसादेन त्वदुदयकृतायुर्हानिरस्माकं माभू दि-ति । माङ्योगेप्यडागः ॥

[2]**असौ योऽस्तं** अदर्शनं एति । स इत्यादि समानम् ॥

[3]**असौ य आपूर्यति** आपूर्यतेरश्मिभिः **क्रमेण** पूर्वाह्णे । स इत्यादि गतम् । यथायथा देवो रश्मिभिः पूर्यते तथा प्राणिनः आयुषा हीयन्ते । तस्मात् तदीयैः प्राणैराहृतैरिव अयमापूर्यते । तस्मात् अस्मत्प्राणापहारेण **माऽऽपूरिष्ठाः** मा पूर्तिङ्गमः ॥

[4]**असौ योऽपक्षीयति** अपक्षीयते । स इत्यादि तुल्यम् ।

---

*मायुर्गच्छतीति

मा मे प्रजाया मा पशूनाम् । मा मम प्राणै-रपक्षेष्ठाः । [5]अमूनि नक्षत्राणि । सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरप प्रसृपत मोत्सृपत ॥ ६५ ॥ [6]इमे मासाश्चार्धमासाश्च । सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरप प्रसृपत मोत्सृपत । [7]इम ऋतवः । सर्वेषां भूतानां प्राणैरप प्रसर्पन्ति चोत्सर्पन्ति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरप प्रसृपत मोत्सृपत । [8]अयꣳ संवत्सरः । सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति च ॥ ६६ ॥ मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरप प्रसृप मोत्सृप । [9]इदमहः । सर्वेषां भूतानां प्राणैरप प्रसर्पति चोत्सर्पति च । मा मे प्रजाया मा पशूनाम् । मा मम प्राणैरप प्रसृप मोत्सृप । [10]इयꣳ

---

यथायथाऽयमपराह्णे रश्मिभिरपक्षीयते तथातथा हि प्राणिनां आयु-रपक्षीयत इति ॥

[5–10]अमूनि नक्षत्राणि सर्वेषां भूतानां प्राणैः आह्रियमाणैः अपप्रसर्पन्ति अपगच्छन्ति उत्सर्पन्ति च अहन्यपसर्पन्ति रात्रौ

रात्रिः । सर्वेषां भूतानां प्राणैरपं प्रसर्पति चोत्सं-र्पति च । मा मे प्रजाया मा पशूनाम् । मा म-मं प्राणैरपं प्रसृप मोत्सृप । [11]ओं भूर्भुवस्स्वः । [12]एतद्वो मिथुनं मा नो मिथुनꣳ रीढ्वम् ॥ ६७ ॥

प्राणैरापूर्यति मोत्सृपत चोत्सर्पति
च मोत्सृप द्वे चं ॥ १४ ॥

योसौ षोडशामूनि द्वादशायं चतुर्दश ॥

उदेत्यस्तमेत्यापूर्यत्यपक्षीयत्यमूनि नक्षत्राणी-

---

उत्सर्पन्ति च । तत्र 'योसौ तपन्नुदेति' इत्यादौ सर्वत्राहरुप-क्रमत्वात् अपसर्पणस्य प्राथम्यम् । सृपेर्लोडित्त्रादञ् । एतेन मा-सा अर्धमासाः ऋतवः संवत्सरः अहः रात्रिश्च व्याख्याताः । एवं नक्षत्राणां कालावयवानां च मासादीनां आदित्याधीनात्मलाभ-त्वात् ताद्रूप्येणादित्यस्यैव स्तुतिः ॥

[11]ओमादिभिश्च परमात्मनामधेयैः तदभेदेनादित्य एवोच्यते ॥

[12]एतद्व इति ॥ हे नक्षत्रादयः सत्तपुरुषस्थानीयाः! एतत् उक्तप्रकारं वः युष्माकं मिथुनं आदित्येन सहोपकार्योपकारक-तालक्षणसंबन्धं यथेदमनुपहिंसितं वर्तते[1] एवं नः अस्माकमपि मिथुनं स्त्रीपुंसलक्षणं मा रीढ्वं मा हिंसिष्ट पुत्रदारादिवियोगं मा कार्ष्ट इति यावत् । रीडो रिषेर्वा रूपसम्पत्तिरनुसन्धेया ।

---

[1]युष्माकं मिथुनं परस्परसंश्लेषणं स्वामिकर्मणि.

**मे मासां इम ऋतवो॓ऽयꣳ संवत्सर इदमहंरियꣳ रात्रिर्दशी ॥**

**[1]अथादित्यस्याष्टपुंरुषस्य। [2]वसूनामादित्यानाꣳ**

---

अस्य च कालपुरुषस्य स्वभावः रूपं प्रवृत्तिः क्रमश्च 'स्मृतिः प्रत्यक्षमैतिह्यम्'* इत्यत्र दर्शितम् । इह तु तस्य सप्तपुरुषत्वं तेषां च स्वरूपमुच्यते इति ॥

इत्यारण्यके प्रथमे चतुर्दशोनुवाकः.

---

[1]अथ **आदित्यस्य अष्टपुरुषस्य** उपधानक्रम उच्यते—अष्टौ पुरुषाः पुरुषवर्गा यस्य सोऽष्टपुरुषः। ते च पुरुषवर्गादयः 'साकंजानां'† इत्यादिष्वनुवाकेषु प्रदर्शिताः । तेषां सर्वेषां आदित्यस्य सेनानीस्थानीयानां आदित्यपारार्थ्यात् आदित्यात्मकतयाऽत्र स्तुतिः क्रियते ॥

[2—10]तत्र 'वसूनां' इत्यादयोऽष्टौ मन्त्राः । एभिः दिक्षु अवान्तरादिक्षु च यजमान उपधत्ते । आदित्यानामित्यादिकं सर्वमन्त्राणां समानम् । 'ओं भूर्भुवस्स्वः। रश्मयो वो मिथुनं मा नो मिथुनं रीढ्वं' इति च सर्वत्रान्ते यजमान उपतिष्ठते । अयमर्थः—**वसूनां** वसुनाम्ना जगतो वासयितृणां **आदित्यानां** आदित्यात्मनाम् । तत्कार्यकरणात्ताच्छब्द्यम् । यथा पुत्रकार्यकरणादपुत्रः पुत्र उच्यते। यद्वा—रसादानादिना प्राधान्यात् आदित्यस्सविता तत्रत्यानां तत्कार्यकारित्वेन तस्मिन् वर्तमानानां वसूनां **स्थाने** यस्मिन् तिष्ठति तस्मिन् तेजोलक्षणे स्थाने तिष्ठन्

---

*आ. १-२. †आ. १-३.

स्थाने स्वतेजसा भानि । [3]रुद्राणामादित्यानाꣳ स्थाने स्वतेजसा भानि । [4]आदित्यानामादित्यानाꣳ स्थाने स्वतेजसा भानि । [5]सताꣳ सत्यानाम् । आदित्यानाꣳ स्थाने स्वतेजसा भानि । [6]अभिधून्वतामभिघ्नताम् । वातवतां मरुताम् । आदित्यानाꣳ स्थाने स्वतेजसा भानि । [7]ऋभूणामादित्यानाꣳ स्थाने स्वतेजसा भानि । [8]विश्वेषां देवानाम् । आ-

अहं स्वतेजसा आत्मीयेन तेजसा भानि तादृशेन तेजसा तेजस्वी भूयासमिति यावत् । ओमित्यादि गतम् । एते च 'वसन्तो वसुभिस्सह'* इत्यत्र द्रष्टव्याः । एवं रुद्रादिषु योज्यम् । तत्र 'शुक्लवासा रुद्रगणः'* इत्यत्र रुद्रा द्रष्टव्याः । 'विश्वरूपाणि वासांसि। आदित्यानां निबोधत'* इत्यत्र आदित्यगणो द्रष्टव्यः । 'सतस्तद्देवलक्षणं'† इत्यत्र सतां वर्गो द्रष्टव्यः । 'इहेह वस्स्वतपसः'‡ इति शिशिराख्यायिकायां मरुतां आमन्त्रणात् हेमन्तशिशिरयोरेकदेवतत्वाच्च 'सतां सत्यानां' इति वक्ष्यमाणानां मरुतामेव गण इति केचित् । सन्नामानोऽन्य इत्यन्ये । 'अभिधून्वतां' इत्यत्र अभिधून्वदादिलक्षणानां मरुतां ग्रहणं वेदितव्यम् । 'ऋभूणां तन्निबोधत'‡ इत्यत्र ऋभवो द्रष्टव्याः । अत्रोपधानक्रमानुरोधात् वसन्तग्रीष्मवर्षाणां देवताः क्रमेण निर्दिष्टाः वसुरुद्रादित्याः । शरद्धेमन्तशिशिराणां तु याः देवताः अभिधून्वदादिलक्षणा मरुतः सन्नामानश्च[1] ते व्युत्क्रमेण निर्दिष्टाः सदाद्यृभुन्ताः त्रिकद्वये-

*आ. १-३. †आ. १-६. ‡आ. १-४. [1]तन्नामानश्च.

दित्यानाꣳ स्थाने स्वतेजसा भानि । [9]संवथ्सरस्य सवितुः । आदित्यस्य स्थाने स्वतेजसा भानि । [10]ओं भूर्भुवस्स्वः । रश्मयो वो मिथुनं मा नो मिथुनꣳ रीढ्वम् ॥ ६८ ॥

ऋभूणामादित्यानाꣳ स्थाने स्वतेजसा भानि षट् ॥ १५ ॥

[1]आरोगस्य स्थाने स्वतेजसा भानि । [2]भ्राजस्य

---

नाभिमुख्येनोपधेयत्वादिति वेदितव्यम् । 'विश्वे देवा विप्रहरन्ति'* इत्यत्र विश्वे देवाः द्रष्टव्याः । 'स खलु संवत्सर एतैस्सेनानीभिस्सह'† इत्यत्र संवत्सरो द्रष्टव्यः । योऽयमुक्तप्रकारेण सविता सर्वस्य प्रेरक आदित्यात्मा रश्मय इति एवं तेजस्विनो युष्माकं रश्मयो मिथुनं साहायकं आचरन्ति तदधीनस्वभावत्वाद्रवादीनाम्‡ ॥

इत्यारण्यके प्रथमे पञ्चदशोनुवाकः.

---

[1—8] 'आरोगो भ्राजः'§ इत्यत्र आरोगादीनि नामानि उक्तानि । तत्र यदा 'आरोगस्तया देवतया' इत्यादिना अध्वर्युरारोगादीन् उपदधाति तदा क्रमेण यजमानः 'आरोगस्य स्थाने' इत्यादिना तांतामुपधाय सर्वान्ते 'ओं भूर्भुवस्स्वः । आपो वो

---

*आ. १-५. †आ. १-६. ‡त्वाद्रश्मीनाम्. §आ. १-७.

स्थाने स्वतेजसा भानि । [3]पटरस्य स्थाने स्वतेज-सा भानि । [4]पतङ्गस्य स्थाने स्वतेजसा भानि । [5]स्वर्णरस्य स्थाने स्वतेजसा भानि । [6]ज्योतिषीमत-स्य स्थाने स्वतेजसा भानि । [7]विभासस्य स्थाने स्वतेजसा भानि । [8]कश्यपस्य स्थाने स्वतेजसा भा-नि । ओं भूर्भुवस्स्वः । आपो वो मिथुनं मा नो मिथुनꣳ रीढ्वम् ॥ ६१ ॥

आरोगस्य दश ॥ १६ ॥

[1]अथ वायोरेकादशपुरुषस्यैकादशस्त्रीकस्य । प्र-भ्राजमानानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । व्यवदातानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि ।

---

मिथुनं मा नो मिथुनं रीढ्वं ' इत्युपतिष्ठते । वः युष्माकं विश्व-सृष्टौ **आपो मिथुनं** सहायभावमाचरन्तीति । आरोगादयो व्याख्याताः* ॥

इत्यारण्यके प्रथमे षोडशोनुवाकः.

---

[1]अथ **वायोरेकादशपुरुषस्य** प्रभ्राजमानाद्येकादशपुरुषवर्गयुक्तस्य तथा **एकादशस्त्रीकस्य** प्रभ्राजमान्याद्येकादशस्त्रीवर्गयुक्तस्य उपधा-नमन्त्रा उच्यन्ते । ' प्रभ्राजमानस्तथा देवतया ' इत्यादिना अ-

---

*आ. १-७.

वासुकिवैद्युतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । रजतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । परुषाणाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । श्यामानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । कपिलानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । अतिलोहितानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । ऊर्ध्वानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि ॥७०॥ अवपतन्तानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । वैद्युतानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भानि । प्रभ्राजमानीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । व्यवदातीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । वासुकिवैद्युतीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । रजतानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । परुषाणाꣳ रुद्राणीनाꣳ स्थाने

ध्वर्युः प्रभ्राजमानादिभिः नामभिः उपदधाति । तत्क्रमेण यजमानः 'प्रभ्राजमानानां' इत्यादिना उपस्थाय सर्वान्ते 'ओं भूर्भुवस्स्वः । रूपाणि वः' इत्युपतिष्ठते । प्रभ्राजमानत्वादिरूपविशेषाधीनप्रभवत्वादेषाम् । एते च व्याख्याताः* । अत्रैषां मरुतां रुद्रतनुत्वात् रुद्रतादात्म्यप्रतिपादनार्थं 'रुद्राणां' इत्युक्तम् । एतत्स्त्रीणां च रुद्रा-

*आ. १-९.

स्वतेजसा भानि । श्यामानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । कपिलानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । अतिलोहितीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । ऊर्ध्वानाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । अवपतन्तीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । वैद्युतीनाꣳ रुद्राणीनाꣳ स्थाने स्वतेजसा भानि । ओं भूर्भुवस्स्वः । रूपाणि वो मिथुनं मा नो मिथुनꣳ रीढ्वम् ॥ ७१॥

ऊर्ध्वानाꣳ रुद्राणाꣳ स्थाने स्वतेजसा भा-
न्यतिलोहितीनाꣳ रुद्राणीनाꣳ स्थाने
स्वतेजसा भानि पञ्च च ॥ १७ ॥

[1]अथाग्नेरष्टपुरुषस्य । अग्नेः पूर्वदिश्यस्य स्था-

---

ण्या तादात्म्यप्रतिपादनार्थं स्त्रीमन्त्रेषु रुद्राणीग्रहणम् । यद्वा—रुद्रत्वे उपचरिते तेषां स्त्रियो रुद्राण्यो भवन्ति । तत्र गौणादपि 'इन्द्रवरुण' इति स्त्रीप्रत्ययः, आनुगागमश्च । प्रभ्राजमानादिभ्यः पुंयोगवृत्तिभ्यः 'पुंयोगादाख्यायाम्' इति ङीप् । रजतादिभ्यो गुणवृत्तिभ्यष्टावेव ॥

इत्यारण्यके प्रथमे सप्तदशोनुवाकः.

---

[1]अथाग्नेरष्टपुरुषस्य 'अग्निश्च जातवेदाश्च '* इत्यष्टपुरुषवत्

*आ. १-९.

ने स्वतेजसा भानि । जातवेदस उपदिश्यस्य स्थाने स्वतेजसा भानि । सहोजसो दक्षिणदिश्यस्य स्थाने स्वतेजसा भानि । अजिराप्रभव उपदिश्यस्य स्थाने स्वतेजसा भानि । वैश्वानरस्यापरदिश्यस्य स्थाने स्वतेजसा भानि । नर्यापस उपदिश्यस्य स्थाने स्वतेजसा भानि । पङ्क्तिराधस उदग्दिश्यस्य स्थाने स्वतेजसा भानि । विसर्पिण उपदिश्यस्य स्थाने स्वतेजसा भानि । ओं भूर्भुवस्स्वः । दिशो वो मिथुनं मा नो मिथुनꣳ रीढ्वम् ॥ ७२ ॥

स्वरेकं च ॥ १८ ॥

---

उपधानमन्त्रा उच्यन्ते । यदा 'अग्निश्च तया देवतया' इत्यादिना अग्न्यादिभिः नामभिः अध्वर्युरुपदधाति तदा 'अग्नेः पूर्वदिश्यस्य स्थाने' इत्यादिना क्रमेण यजमान उपधायान्ते 'ओं भूर्भुवस्स्वः । दिशो वः' इत्युपतिष्ठते, दिग्विशेषावस्थितत्वादेषाम् । पूर्वस्यां दिशि भवः पूर्वदिश्यः । 'दिगादिभ्यो यत्' तदन्तादपि प्रवर्तते । उपदिक् कोणदिक् । **सहोजस** इति । एमन्नादित्वात् पररूपत्वम् । **अजिराप्रभव** इति । अजिराप्रभोरित्यर्थः । 'ङसिङसोश्च' इति पूर्वरूपत्वं व्यत्ययेन न प्रवर्तते ॥

इत्यारण्यके प्रथमे अष्टादशोनुवाकः.

---

एतद्रूद्रमय आपो रूपाणि दिशः पञ्च ॥

[1]दक्षिणपूर्वस्यां दिशि विसर्पी नरकः । तस्मान्नः परिपाहि । [2]दक्षिणापरस्यां दिश्यविसर्पी नरकः । तस्मान्नः परिपाहि । [3]उत्तरपूर्वस्यां दिशि विषादी नरकः । तस्मान्नः परिपाहि । [4]उत्तरापरस्यां दिश्यविषादी नरकः । तस्मान्नः परिपाहि ।

---

[1—4]अथ नरकत्रा उपदधाति—दक्षिणपूर्वस्यामिति ॥ दक्षिणस्याः पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा । 'दिङ्नामान्यन्तराले' इति समासः, 'विभाषा दिक्समासे' इति सर्वनामसंज्ञा । तस्यां ह्यवस्थितो विसर्पीनाम नरकः यत्रत्या जन्तवो वेदनातिशयेन विविधं सर्पन्ति इतश्चेतश्च परिभ्रमन्ति । विसर्पयतीति विसर्पी, विपूर्वात् सृपेः ण्यन्तात् 'सुप्यजातौ' इति णिनिः । **तस्मात् नः** अस्मान् **परिपाहि** सर्वतो रक्ष हे इष्टके ! । तद्विपरीतः **अविसर्पी** यत्रत्या जन्तवो विसर्पितुमपि न क्षमन्ते । गतमन्यत् । **विषादी** विविधं सादयतीति यत्रत्या जन्तवो विविधं विषादवन्तो भवन्ति किमर्थमस्माभिरीदृक् दुष्कृतं कृतमिति । पूर्ववत् ण्यन्तात् णिनिः । तद्विपरीतः **अविषादी** यत्रत्या जन्तवः विषत्तुमपि न क्षमन्ते । गतमन्यत् ॥

[5—6]अथ दक्षिणतो दर्भस्तम्बस्य 'आयास्मिन् सप्त वासवाः । इन्द्रियाणि शतक्रतो' इत्येते उपदधाति । प्रथमाऽनुष्टुप् 'क्वेदं' इत्यत्र व्याख्याता* । द्वितीया गायत्री 'इन्द्रं वः' इत्यत्र व्याख्याता† । हे शतक्रतो ! यानि तव इन्द्रियाणि वीर्याणि पञ्चसु

---

*आ. १-८. †सं. १-६-१२.

[5]आ यस्मिन्त्सप्त वासवा [6]इन्द्रियाणि शतक्रतवित्येते ॥ ७३ ॥

दक्षिणपूर्वस्यां नवं ॥ १९ ॥

[1]इन्द्रघोषा वो वसुभिः पुरस्तादुपदधताम् । [2]मनोजवसो वः पितृभिर्दक्षिणत उपदधताम् । [3]प्रचेता वो रुद्रैः पश्चादुपदधताम् । [4]विश्वकर्मा व आदित्यैरुत्तरत उपदधताम् । [5]त्वष्टा वो रूपैरुपरिष्टादुपदधताम् । [6]संज्ञानं वः पश्चादिति । [7]सावित्र*स्सर्वोऽग्निः पृथिव्याम् । [8]वायुरन्तरिक्षे । [9]सूर्यो दिवि । [10]चन्द्रमा दिक्षु । [11]नक्षत्राणि स्वलोके । [12]एवा ह्येव । [13]ए-

जनेषु व्यवस्थितानि देवादिषु ब्राह्मणादिषु वा हे इन्द्र! तानि तव स्वभूतानि अहमावृणे आभिमुख्येन प्रार्थये इति ॥

इत्यारण्यके प्रथमे एकोनविंशोनुवाकः.

---

1—6अथ अबीष्टका यथा लिङ्गमुपदधाति । तत्र 'इन्द्रघोषा वः' इत्यादयष्षट् । हे आपः ! **वः** युष्मान् इन्द्रघोषनामानो **वसुभिस्सह** इन्द्रघोषाश्च वसवश्च **पुरस्तात्** पूर्वस्यां दिशि **उपदधताम्** । गतमन्यत् । **संज्ञानं** समीचीनं ज्ञानं **वः पश्चात्** उपदधतां इत्यन्तो मन्त्रगणः ॥

7—11अथ 'सावित्रस्सर्वः' इत्यादयः पञ्च । **सावित्रः** सवितृ-

*आदित्य.

वा ह्यग्ने । [14]एवा हि वायो । [15]एवा हीन्द्र । [16]एवा हि पूषन्न् । [17]एवा हि देवाः ॥ ७४ ॥

दिक्षु सप्त च ॥ २० ॥

[1]आपमापामपस्सर्वाः । अस्मादस्मादितोऽमुतः । अग्निर्वायुश्च सूर्यश्च । सह संचस्करर्धिया । [2]वाय्व-

---

देवत्यः सर्वः अग्निः यो नाम कश्चित् काठके विहितः स पृथिव्यां उपधत्तामिति । गतमपरम् ॥

[12—17]अथ 'एवा ह्येव' इत्यादयष्षट् । हे एव! हे अयनशील! आदित्य! । एतेर्वप्रत्ययः । त्वं एवा हि ये एतव्याः त इमा एवाः ते सर्वे त्वमसि । तद्धेतुत्वात्ताच्छब्द्यम् । यद्वा—अयनसमर्थोसि तस्मादेहीति शेषः । वप्रत्ययान्तात् 'सुपां सुलुक्' इत्याकारः । ब्राह्मणं च भवति 'अञ्जलिना पुरस्तादुपादधात् । एवा ह्येवेति । तत आदित्य उदतिष्ठत् । सा प्राची दिक्'* इति । अत्र केचित् 'एवादीनामन्तः' इति द्वितीयस्यैवशब्दस्य अन्तोदात्तत्वमिच्छन्ति । तदयुक्तं; निपातस्यान्तोदात्तत्वविधानात् । तस्मादाष्टमिकं सर्वानुदात्तत्वमेव 'एवा ह्यग्ने' इत्यादौ अग्न्यादिपदानामिवेति वेदितव्यम् । एवा हि देवाः इत्यत्रापि जस आकारः ॥

इत्यारण्यके प्रथमे विंशोनुवाकः.

---

[1—7]आपमापामित्यादयः तिस्रः । सर्वाश्चैताः प्रथमानुवाके

---

*आ. १-२३.

श्वां रश्मिपतयः । मरीच्यात्मानो अद्रुहः । देवीर्भुवनसूवरीः । पुत्रवत्त्वायं मे सुत । [3]महानाम्नीर्महामानाः । महसो महसस्स्वः ॥ ७५ ॥ देवीः पर्जन्यसूवरीः । पुत्रवत्त्वायं मे सुत । [4]अपाश्न्युष्णिमपा रक्षः । अपाश्न्युष्णिमपा रघम् । अपाग्रामप चावर्तिम् । अप देवीरितो हित । [5]वज्रं देवीरजीताꣳश्च । भुवनं देवसूवरीः । आदित्यानदितिं देवीम् । योनिनोर्ध्वमुदीषत ॥ ७६ ॥ [6]भद्रं कर्णेभिश्शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः । [7]स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु । [8]केतवो अरुणासश्च । ऋषयो वा-

---

व्याख्याताः । पुनराम्नानमुपधानार्थम् । अपाश्न्युष्णिमिति द्वे । भद्रं कर्णेभिरिति द्वे ॥

[8]केतवो अरुणासश्चेत्येका ॥ अयं च बृहतीविशेषः । केत्वादयः ऋषिविशेषसङ्घाः । ते **समाहितासः** समाहिताः **असहस्रधायसं** सहस्रस्यानेकस्य धात्री सहस्रधायाः तद्विपरीतां बहूनां रक्षणापर्याप्तामिमां अस्मदीयां प्रतिष्ठां **शतधा** शतस्यानेकस्य धात्री यथा शतं धारयति तादृशीं ताम् । 'आतोऽनुपसर्गे कः' इति कान्तात् 'सुपां सुलुक्' इत्याट् प्रत्ययः । यद्वा—शतधां

तरशनाः । प्रतिष्ठाꣳ शतधां हि । समाहितासोऽसह-
स्रधायसम् । [9]शिवा नश्शन्तमा भवन्तु । दिव्या आ-
प ओषधयः । [10]सुमृडीका सरस्वति । मा ते व्योम
संदृशि ॥ ७७ ॥

स्वंरुदीर्षत वातरशनाष्षट्च ॥ २१ ॥

[1]योऽपां पुष्पं वेद । पुष्पवान्प्रजावान्पशुमान्भ-
वति । चन्द्रमा वा अपां पुष्पम् । पुष्पवान्प्रजावा-

---

अनेकप्रकारवतीं प्रतिष्ठां किं? विधात्विति सम्बध्यते । पूर्वस्या-मृचि श्रुतं दधात्वित्येतदिह बहुवचनान्ततया विपरिणम्यते । यद्वा—शतस्य सहस्रस्य च धात्रीं प्रतिष्ठां दधातु । पूर्वपदान्तस्य छान्दसमुदात्तत्वम् । उत्तरपदस्य वा आदावकारोपजनः । 'शतशश्चैव सहस्रशश्च प्रतितिष्ठति'* इति ब्राह्मणम् ॥

[9--10]शिवा नश्शन्तमा भवन्त्विति द्वे द्विपदे गायत्र्यौ ॥

इत्यारण्यके प्रथमे एकविंशोनुवाकः.

---

[1]अतः परमविष्टकानां ब्राह्मणम् । तदर्थमापस्स्तूयन्ते—योऽपामिति ॥ रसात्मकत्वात् चन्द्रमाः **अपां पुष्पम्** । यद्वा—लतानां कुसुमवत् जगदाह्लादिनी अपां परिणतिश्चन्द्रमाः । एवं वेदिता पुष्पादिसमृद्धो भवति । पुनर्वचनं विशिष्टप्रतिपादनार्थं; न चन्द्र-

---

*आ. १-२४.

न्पशुमान्भवति। य एवं वेद। [2]योऽपामायतनं वेद। आयतनवान्भवति । अग्निर्वा अपामायतनम् । आयतनवान्भवति । योऽग्नेरायतनं वेद ॥ ७८ ॥ आयतनवान्भवति। आपो वा अग्नेरायतनम्। आयतनवान्भवति। य एवं वेद। [3]योऽपामायतनं वेद। आयतनवान्भवति । वायुर्वा अपामायतनम्। आयतनवान्भवति । यो वायोरायतनं वेद। आयतन-

---

ज्ञानमात्रात् पुष्पादिमत्ता अपि तु अपां पुष्पतया यो वेद इति प्रतिपादनार्थम् । एवं सर्वत्र ॥

[2]एवमिदानीमपामग्न्यादीनां च परस्पराधार्याधारभावेन जगत्प्रतिष्ठाकारणत्वं प्रतिपादयति—**आयतनं** स्थानं कारणम् । तच्च यथासम्भवं यथाकथंचित् कल्प्यम् । ज्ञानमात्रं फलाय भवति श्रुतिसामर्थ्यात् । अपां कारणमग्निः 'अग्नेरापः'* इति दर्शनात् । यद्वा—आहुत्याद्यात्मिकानामपां आदित्यात्मा अग्निः स्थानं 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते '† इति । अग्नेश्चापः कारणं सूक्ष्मा आपः सर्वं लोकं धारयन्तीति । यद्वा—अग्नेरापस्स्थानं और्वादीनामप्सु दर्शनात्, पर्जन्यात्मना आदित्यावस्थानाच्च । एवं वेदिता शोभनायतनः शोभनकारणो वा भवति ॥

[3]**वायुरपां** कारणं स्रवणहेतुत्वात् । **आपः** च **वायोः** कारणं अप्कारणकत्वात् सर्वस्य ॥

---

*तै. उ. २-१. †मनु. १.

वान्भवति ॥ ७९ ॥ आपो वै वायोरायतनम् । आ-
यतनवान्भवति । य एवं वेद । [4]योऽपामायतनं वेद।
आयतनवान्भवति। असौ वै तपन्नपामायतनम् ।
आयतनवान्भवति ।योऽमुष्य तपत आयतनं वेद।
आयतनवान्भवति । आपो वा अमुष्य तपत आय-
तनम् ॥ ८० ॥ आयतनवान्भवति । य एवं वेद ।
[5]योऽपामायतनं वेद । आयतनवान्भवति । चन्द्र-
मा वा अपामायतनम् । आयतनवान्भवति । यश्च-
न्द्रमस आयतनं वेद । आयतनवान्भवति । आपो
वै चन्द्रमस आयतनम् । आयतनवान्भवति॥८१
य एवं वेद। [6]योऽपामायतनं वेद । आयतनवान्भ-
वति । नक्षत्राणि वा अपामायतनम् । आयतनवा-
न्भवति । यो नक्षत्राणामायतनं वेद । आयतनवा-

[4]असौ तपन् आदित्यः अपां कारणं 'आदित्याज्जायते वृष्टिः'* इति । आदित्यस्य चापः कारणं तासां सर्वयोनित्वात् ॥

[5]चन्द्रमा वा अपामायतनं स्थानं तस्यामृतभागत्वात् । चन्द्रमसः च आपो योनयः तद्विकारत्वात् ॥

[6]नक्षत्राण्यपामायतनं कारणं चन्द्रादियोगवशेन वर्षहेतुत्वात् । नक्षत्राणां च आपः कारणं ताभिर्विना तेषामवस्थानाभावात् ॥

*मनु. १.

न्भवति । आपो वै नक्षत्राणामायतनम् । आयतन-
वान्भवति । य एवं वेद ॥ ८२ ॥ [7]योऽपामायतनं
वेद । आयतनवान्भवति । पर्जन्यो वा अपामाय-
तनम् । आयतनवान्भवति । यः पर्जन्यस्यायतनं
वेद । आयतनवान्भवति । आपो वै पर्जन्यस्याय-
तनम् । आयतनवान्भवति । य एवं वेद । [8]योऽपा-
मायतनं वेद ॥ ८३ ॥ आयतनवान्भवति । संव-
त्सरो वा अपामायतनम् । आयतनवान्भवति ।
यस्संवत्सरस्यायतनं वेद । आयतनवान्भवति ।
आपो वै संवत्सरस्यायतनम् । आयतनवान्भवति ।
य एवं वेद । [9]योऽप्सु नावं प्रतिष्ठितां वेद । प्रत्येव
तिष्ठति ॥ ८४ ॥ इमे वै लोका अप्सु प्रतिष्ठिताः ।

---

[7]पर्जन्योऽपां कारणं वृष्टिहेतुत्वात् । पर्जन्यस्यापः कारणं तदधीनस्थितित्वात्तस्य ॥

[8]संवत्सरोऽपां स्थानं कारणं च । संवत्सरस्यापः कारणं अपां कालात्मना परिणामात् ॥

[9]योऽप्स्वित्यादि ॥ अप्सु कार्यत्वेन प्रतिष्ठितां नावं नेतव्यामीश्वरेण प्रेरणीयां वेद । नयतेरौणादिको डौप्रत्ययः । लोका अप्कारणाः कर्णधारस्थानीयेनेश्वरेण नेतव्याश्च । तस्मात्ते नौशब्देनोच्यन्त इति । तत् इदमर्थरूपमभिलक्ष्य एषा ऋक् पुनरुक्ता ॥

**तदेषाऽभ्यनूक्ता । [10]अपाꣳ रसमुदयꣳसन् । सूर्ये शु-क्रꣳ समाभृतम् । अपाꣳ रसस्य यो रसः । तं वो गृ-ह्णाम्युत्तममिति । [11]इमे वै लोका अपाꣳ रसः । तेऽ-मुष्मिन्नादित्ये समाभृताः । [12]जानुदघ्नीमुत्तरवेदीं खात्वा । अपां पूरयित्वा गुल्फदघ्नम् ॥ ८५ ॥ पु-**

---

[10]अपां रसमित्यनुष्टुबेषा ॥ **सूर्ये समाभृतं** कार्यत्वेन समाश्रितं **शुक्रं** निर्दोषं दीप्तिमन्तं वा **रसं** त्रैलोक्यात्मकं **उदयंसन्** उद्यच्छन्ते पूर्वोक्ता अग्न्यादयः । सूर्याधीनात्मलाभं त्रैलोक्यमपां रसभूतं अग्न्यादयो धारयन्ति । तस्यापि **अपां रसस्य** त्रैलो-क्यस्य **यो रसः** उत्तमः सारः त्रैलोक्यसारभूतः **तं वः** युष्माकं स्वभूतं सोमं **गृह्णामि** हे आपः ! । इत्यन्तो मन्त्रः ॥

[11]इदानीं आख्यायिकार्थं व्याचष्टे—**इमे लोकाः अपां रस** इत्युच्यन्ते । ते च **अमुष्मिन्नादित्ये समाभृताः** वर्षादि[1]द्वारेण तदधीनात्मलाभत्वात् । तस्मात् 'इमे वै लोका अप्सु प्रतिष्ठिताः' इत्येतमर्थं इयमृगभिवदतीति । एवमपां समस्तकारणत्वप्रतिपादने-नाबीष्टकानामेव वैशिष्ट्यं प्रतिपादितम् । तस्मादेवम्भूता अबीष्टका उपधेया इति विधिरनुमीयते ॥

[12]इदानीं आसां उपधानप्रयोगमाह—जानुदघ्नीमिति ॥ शौल्बेन विमानेन सावित्रवद्रथचक्रं परिलिख्य तत्र **जानुदघ्नीं** जानुप्रमाणां **उत्तरवेदीं खात्वा गुल्फदघ्नं अपां** अद्भिः **पूरयित्वा** । 'पूरण-गुण' इति समासप्रतिषेधात् पूरणार्थैर्योगे षष्ठ्यनुमीयते । ततः

---

[1]वर्षयितृ.

ष्करपर्णैः पुष्करदण्डैः पुष्करैश्चं सꣳस्तीर्य । तस्मिन्विहायसे । अग्निं प्रणीयोपसमाधाय । ब्रह्मवादिनो वदन्ति । कस्मात्प्रणीतेऽयमग्निश्चीयते । साप्प्रणीतेऽयमप्सु ह्ययं चीयते । असौ भुवनेऽप्यनाहिताग्निरेताः । तमभित एता अबीष्टका उपदधा-

---

**पुष्करपर्णैः** पद्मपलाशैः **पुष्करदण्डैश्च** पृथग्भूतैः **पुष्करैः** अपृथग्भूतमूलाङ्कुरपर्णैः ताः **संस्तीर्य** संछाद्य इतरा इष्टका उपधाय पुनश्च पुष्करपर्णादिभिः प्रच्छाद्य एवं पञ्चचितीकं चित्वा **तस्मिन्विहायसे** मञ्चवत् स्थापिते **अग्निं प्रणीय** कर्मानुगुणमग्निप्रणयनं कृत्वा । अथ 'तमभित एता अबीष्टकाः' इत्यनन्तरकरणीयं अबीष्टकोपधानं वक्ष्यन् मध्ये ब्रह्मवादिपर्यनुयोगमवतारयति अग्न्यन्तरेभ्योऽस्य वैलक्षण्यं दर्शयितुं—**ब्रह्मवादिनो**ऽत्र पर्यनुयोगमाहुः । **कस्मात्** सत्यात् कारणात् **अयं** आरुणकेतुकः **अग्निः प्रणीते** अग्नौ पुनरपि **चीयते** अबीष्टकानां प्रणयनोत्तरकालं उपधानात् । अग्न्यन्तरे हि सर्वचितेऽग्नौ[1] पश्चादग्निः प्रणीयते । तत्कोऽस्य विशेषः येनैतदेवं भवतीति । अथोत्तरं—**साप्प्रणीतेयं** अद्भिस्सहितस्साप् साप्त्वादयं प्रणीते चीयते । कथं साप्त्वमित्याह—अप्सु हीति ॥ यद्वा—सोऽयं प्रणीतेऽपि चेतव्यः तिष्ठत्वन्योऽग्निः । अयमारुणकेतुकः प्रणीतेऽपि चेतव्यः । 'स प्रणीतेऽयं' इति वक्तव्ये वर्णव्यत्ययो लिङ्गव्यत्ययो वा । नाग्न्यन्तरवदयं प्रणीत एव चेतव्यः । हेतुमाह—**अप्सु ह्ययं चीयते** । आ-

---

[1]सर्वतोऽग्नौ.

**ति । [13]अग्निहोत्रे दर्शपूर्णमासयोः । पशुबन्धे चातुर्मास्येषु ॥ ८६ ॥ अथो आहुः । सर्वेषु यज्ञक्रतुष्विति । [14]एतद्ध स्म वा आहुश्शण्डिलाः । कमग्निं चिनुते । सत्रियमग्निं चिन्वानः । संवथ्सरं प्रत्यक्षेण । कमग्निं चिनुते । सावित्रमग्निं चिन्वानः ।**

---

द्वावद्भिः पूरणं ततः पुनः पुष्करपर्णादिसंछादनं अन्ते इष्टकानामुपधानमिति एवं प्रायेण अप्स्ववायं चीयते । तत्र यदि मध्ये नाग्निः प्रणीयेत असौ अग्निः भुवने जले **अनाहिताग्निरप्येता** अप्ययं विलयं प्राप्नुयादिति । छान्दसो लुट्, सकारोपजनश्च । 'न लुट्' इति निघाताभावः । यद्वा—न केवलं चितावेव अपि तु भुवनेऽपि असौ अनाहिताग्निः एव इयात् न कदाचिदपि अस्याग्निसम्बन्धो भवेत् । आवश्यके वा तृच् । तस्मादग्निं **प्रणीयोपसमधाय तमभित एता अवीष्टका उपदधाति** । छान्दसमिकारस्य दीर्घत्वम् ॥

[13]अथ पुनः कस्मिन्कर्मण्यस्याङ्गभाव इत्याह—अग्निहोत्र इत्यादि ॥ **अथो** अन्यदपि ब्रह्मवादिन **आहुः सर्वेषु यज्ञक्रतुषु** अस्याङ्गभाव इति । यत्र ज्योतिष्टोमादिषु यज्ञेषु क्रतुषु चोत्तरेषु अग्निष्टुदादिषु यत्राग्निर्नास्ति तत्रापीत्यर्थः ॥

[14]**एतत्** एवार्थरूपं प्रश्नप्रतिवचनाभ्यां **आहुः शण्डिलाः** शण्डिलस्य पुत्राः । 'गर्गादिभ्यो यञ्' 'यञञोश्च' इति बहुषु लुक् । **कमग्निं चिनुते** यः **सत्रियं** सत्र्यं सत्रे भवं अग्निं चिनुते स किं-

अमुमादित्यं प्रत्यक्षेण । कमग्निं चिनुते ॥ ८७ ॥ नाचिकेतमग्निं चिन्वानः । प्राणान्प्रत्यक्षेण । कमग्निं चिनुते । चातुर्होत्रियमग्निं चिन्वानः । ब्रह्म प्रत्यक्षेण । कमग्निं चिनुते । वैश्वसृजमग्निं चिन्वानः । शरीरं प्रत्यक्षेण । कमग्निं चिनुते । उपानुवाक्यमाशुमग्निं चिन्वानः ॥ ८८ ॥ इमान्लोकान्प्रत्यक्षेण । कमग्निं चिनुते । इममारुणकेतुकमग्निं चिन्वान इति । य एवासौ । इतश्चामुतश्चाव्यतीपाती । तमिति । योऽग्नेर्मिथूया वेद । मिथुनवान्भवति । आपो वा अग्नेर्मिथूयाः । मिथुनवान्भव-

फलमग्निं चिनुते इति प्रश्नः । उत्तरं—संवत्सरं प्रत्यक्षेण । चिनुत इत्येव । पुनश्च—कमिति प्रश्नः । एवं सर्वत्र । सावित्रादयोऽग्निविकाराः । तत्र सावित्रं चिन्वानोऽमुमादित्यं प्रत्यक्षेण चिनुते । नाचिकेतं चिन्वानः प्राणान् प्रत्यक्षेण चिनुते । चातुर्होत्रियमग्निं चिन्वानः । ब्रह्म प्रत्यक्षेण चिनुते । उक्तं च 'ब्रह्म वै चतुर्होतारः'* इति । यज्ञो ब्रह्म वेदो वा । वैश्वसृजं चिन्वानश्शरीरं प्रत्यक्षेण चिनुते । अग्निपुरुषस्य हिरण्यगर्भस्य वा उपानुवाक्यं आशुं महान्तं अग्निं चिन्वानः इमान् लोकान् भूरादीन् प्रत्यक्षेण चिनुते । इमं अस्मिन् प्रकरणे विहितं आरुणकेतुकमग्निं चिन्वानः यः अयं इत-

*ब्रा. ३-१२-५.

ति । य एवं वेद ॥ ८१ ॥ वेद भवत्यायतनं भवति वेद वेद तिष्ठति गुल्फदघ्नं चातुर्मास्येष्वमुमादित्यं प्रत्यक्षेण कमग्निं चिनुत उपानुवाक्यमाशुमग्निं चिन्वानो मिथूया मिथुनवान्भवत्येकं च ॥ २२ ॥

पुष्पमग्निर्वायुरसौ वै तपश्चन्द्रमा नक्षत्राणि पर्जन्यस्संवथ्सरो योऽप्सु नावमेतद्ध स्म वै सात्रियꣳ संवथ्सरꣳ सावित्रममुं नाचिकेतं प्राणाꣳश्चातुर्होत्रियं ब्रह्म वैश्वसृजꣳ शरीरमुपानुवाक्यमाशुमिमान्लोकानिममारुणकेतुकं य एवासौ ॥

श्चामुतश्चात्यतीपाती तं चिनुत इति इमं चामुं च लोकं व्यतीत्य अतिक्रम्य हित्वा यो न गच्छति सर्वगतत्वेन चालितुमशक्यत्वात्तं विश्वात्मानं ईश्वरमिति । प्रश्नप्रतिवचनावसानद्योतनार्थाविति शब्दौ । एवं शाण्डिलमतानुसारेण केचिदस्य सर्वेषु यज्ञक्रतुषु च अङ्गभावमाहुरिति । योऽग्नेरिति । अग्निना मिथुनीभावमात्मन इच्छतीति मिथूया । 'सुप आत्मनः क्यच्' 'अ प्रत्ययात्' इत्यकारप्रत्ययः । ताद्धर्म्यात्ताच्छब्द्यम् । एवं वेदिता मिथुनशक्तिमान् भवति ॥

इत्यारण्यके प्रथमे द्वाविंशोऽनुवाकः.

[1]आपो वा इदमासन्त्सलिलमेव । स प्रजापति-रेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि का-मस्समवर्तत । इदꣳ सृजेयमिति । तस्माद्यत्पुरु-षो मनसाऽभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेषाऽभ्यनूक्ता । [2]कामस्तदग्रे समवर्त-

[1]पुनश्चापस्स्तूयन्ते अबीष्टकानामेव वैशिष्ट्यं वक्तुं—आप इति ॥ कार्ये कारणशब्दः । अपां कार्यभूतं इदं परिदृश्यमानं विश्वं जगत् अग्रे सलिलमात्रमेवासीत्

अप एव ससर्जादौ तासु वीर्यमपासृजत् ।*

इति । अथ सः अप्छरीरः प्रजापतिः तदभिमानी हिरण्यगर्भः एकः असहायः पुष्करपर्णे पुष्करपर्णाकारे पुष्टिकारके कस्मिं-श्चित् प्रदेशे सलिलमध्ये समभवत् समपद्यत अहमस्मीत्यभ्यम-न्यत । अथ तस्य अभिमन्यमानस्य अन्तः मनसि कामः इच्छा समवर्तत उदपद्यत । यदा ह्यभिमन्यते तदेव चान्तर्मन उत्प-द्यते तत्रैव चेच्छादय उत्पद्यन्ते । तस्य तु समस्तं जगच्छून्यं पश्यत इदं सृजेयमिति प्रथममिच्छोदपादि । तस्मात् यत्पुरुषः प्रथमं मनसाऽभिगच्छति अभिप्राप्नोति ध्यायाति तत् एव वा-चा वदति तत् एव कर्मणा करोति तदेव वाक्कर्मभ्यां विवृणोति यथा प्रजापतिना कृतमिति । तत् इदमर्थरूपमभिलक्ष्य इय-मृगनूक्ता ॥

[2]कामस्तदग्र इति ॥ एतां[1] च संकल्पवतीमुपदधाति । व्या-

*मनु. १.

[1]एकां.

तार्धि । मनसो रेतः प्रथमं यदासीत् ॥ १० ॥ सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषेति । [3]उपैनं तदुपनमति । यत्कामो भवति । य एवं वेद । [4]स तपोऽतप्यत । स तपस्तप्त्वा । शरीरमधूनुत । तस्य यन्मांसमासीत् । ततोऽरुणाः

ख्याता चेयं त्रिष्टुप्—'जुष्टो दमूनाः'* इत्यत्र । प्रजापतेः अग्रे प्रथमं **कामस्समवर्तत** समपद्यत **यन्मनसः प्रथमं रेतः** कार्यभूतं **आसीत् सतो बन्धुं** व्यक्तसम्बन्धिनं यं कामं **असति** अव्यक्ते **निरविन्दन्** निष्कृष्य लब्धवन्तः हृदये प्रार्थितं† **कवयः** मेधाविनः प्रजापतयः प्राणा वा । **मनीषा** मनसः ईशितार इति ॥

[3]**एनं** एवं वेदितारं **तत्** अभिप्रेतं शीघ्रं **उपनमति** उपसंप्राप्नोति **यत्कामो भवति** यत्काम्यं कामयमानोऽयं भवति । देशकालप्रत्यासत्तिपरौ द्वावुपशब्दौ । 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वं च ॥

[4]अथ **स** प्रजापतिस्सिसृक्षुः **तपोऽतप्यत** । तपसश्रान्ते तं तप्ततपस्कं **शरीरमधूनुत** कंपितवान् । अथ **तस्य** शरीरस्य **यन्मांसं** अरुचिजननं **आसीत् ततोऽरुणादय ऋषयः उदतिष्ठन्** उदपद्यन्त । अरुषो जाताः अरुणाः **केतवः** ज्ञानमयाः तप्तशरीरप्रभवत्वात् **वातरशनाः** शुष्कशरीरप्रभवत्वात् वातं शुष्कं रशना शरीरं बन्धनत्वात् । अथ तस्यैव शरीरस्य ये

*ब्रा. २-४-१.

†हृदि हृदये प्रतीष्य निश्चित्य इति माधवीयम्.

केतवो वातरशना ऋषय उदतिष्ठन् ॥ ११ ॥ ये नखाः । ते वैखानसाः । ये वालाः । ते वालखिल्याः । यो रसः । सोऽपाम् । [5]अन्तरतः कूर्मभूतꣳ सर्पन्तम् । तमब्रवीत् । मम वै त्वङ्माꣳसा । समभूत् ॥१२॥ नेत्यब्रवीत् । पूर्वमेवाहमिहासमिति ।

---

**नखा** आसन् ते **वैखानसाः** ऋषयोऽभवन् नखविरूढा वैखानसाः[1] । प्रातिलोम्येन वर्णा वर्तन्ते । अथ **ये वालाः** तस्य शरीरस्य रोमाणि **ते वालखिल्या** ऋषयोऽभवन् वालजाः खिलाः वालखिल्याः । वालत्वेन खिल्यन्त इति वालखिल्याः । यद्वा—वालजत्वेन सौक्ष्म्यात् खिलाः दुर्निरूपाः वालखिल्याः । अथ **यो रसः** तस्मात् शरीरात् विधूननेनैव गळितः स कूर्मोऽभवत् । कुत एतत्? यदाह 'सोऽपाम् । अन्तरतः कूर्मं भूतं सर्पन्तम् । तमब्रवीत्' इति ॥

[5]अत्र सः तमिति प्रथमाद्वितीयान्तयोः स्थानविनिमयः । एतदुक्तं भवति—**तं अपामन्तरतः** मध्ये **कूर्मभूतं** कूर्मात्मना संजातं उत्पन्नं **सर्पन्तं** जले प्लवमानं स्वशरीरपरिमाणं[2] स प्रजापतिः **अब्रवीत्** हे कूर्म ! **मम वै** ममैव **त्वङ्मांसा** त्वङ्मांसात् । पूर्ववदाकारः । **समभूत्** समुत्पन्नोसि । पुरुषव्यत्ययः । त्वङ्मांसप्रभवो रसो यः स त्वङ्मांसशब्देनोच्यते । त्वमित्यस्य वा छान्दसो ङकारोन्तादेशः । अथ कूर्मः **नेत्यब्रवीत्** यत्त्वयोक्तं तन्नेत्यर्थः । हेतुमाह—पूर्वमेवाहमिति । यद्वा—मे मांसा त्वं समभूरिति

---

[1]नखविरूढवैखानसाः.

[2]स्वशरीरपरिणामं स्वपरिणामं वा.

तत्पुरुषस्य पुरुषत्वम् । स सहस्रशीर्षा पुरुषः । सहस्राक्षस्सहस्रपात् । भूत्वोदतिष्ठत् । तमब्रवीत् । त्वं वै पूर्वꣳ समभूः । त्वमिदं पूर्वः कुरुष्वेति ।
6 स इत आदायापः ॥ १३ ॥ अञ्जलिना पुरस्तादुपादधात् । एवा ह्येवेति । ततं आदित्य उदतिष्ठत् ।

मन्यसे नैवं मन्तव्यम् । पूर्वमुक्तं निषिद्धं; इदानीं उत्पत्तिरेव निषिद्ध्यते—**पूर्वमेवाहमिहासं** तव शरीरविभूननात् प्रागपीहास्मिन् प्रदेशे अहं स्थितत्रानेवेति । यस्मादेवं **तत्** तस्मात् **पुरुषस्य** पूरयितुर्व्यापिनः परम[1]पुरुषस्य समस्तचेतनाभिमानिनः **पुरुषत्वम्** । अथ कूर्मः पुरुषेणात्मनो भेदं दर्शयन् 'पूर्वमेवाहमिहासं' इति यदुक्तं तस्य सत्यत्वख्यापनार्थं सहस्रशीर्षादिलक्षणः पुरुषो **भूत्वा उदतिष्ठत्** व्याप्य स्थितवान् । व्याप्त्या सर्वत्र शिरःप्रभृतिकार्यसम्भवात् शिरःप्रभृतीनामानन्त्यम् । यस्मादेवं तस्मात् पूर्वमेवाहमिहासं अतोऽहं पुरुष इति । पूर्वमेव सन् पुरुष इति पृषोदरादिः । यद्वा—व्याप्तेरिदं फलमुच्यते—पूरणात् पूर्वमिहासमिति । तस्मात्पूरयतीति पुरुषः, औणादिकः पृणोतेरुषन्प्रत्ययः । अथ तं कूर्मं उपसंहृतवपुषं प्रजापतिः **अब्रवीत्** त्वं यदि **पूर्वं समभूः** तर्हि **त्वं** एव **पूर्वः** पुरातनः **इदं** सृष्टिकर्म **कुरुष्व** कर्तुमर्हसि त्वमेव ममापीश्वर इति ॥

6 अथ **स** कूर्मः आरुणकेतुकाग्न्यात्मा । कुत एतत्? 'अथारुणः केतुः' इति वक्ष्यमाणत्वात् । अरुणो मांसलक्षणाज्जातोऽ-

[1] परस्य.

सा प्राची दिक्। अथारुणः केतुर्दक्षिणत उपादधात्। एवा ह्यग्न इति। ततो वा अग्निरुदतिष्ठत् । सा दक्षिणा दिक् । अथारुणः केतुः पश्चादुपादधात् । एवा हि वायो इति ॥ १३ ॥ ततो वायुरुदतिष्ठत् । सा प्रतीची दिक् । अथारुणः केतुरुत्तरत उपादधात् । एवा हीन्द्रेति । ततो वा इन्द्र उदतिष्ठत्। सोदीची दिक् । अथारुणः केतुर्मध्य उपादधात् । एवा हि पूषन्निति । ततो वै पूषोदतिष्ठत् । सेयं दिक्॥१५॥ अथारुणः केतुरुपरिष्टादुपादधात् । एवा हि देवा

रुणः प्रकाशकत्वात् । केतुं केतयतीति केतुः अग्निरुच्यते । स इतः आदिसलिलात् आपः अपः अञ्जलिना पुरस्तादादाय गृहीत्वा । विभक्तिव्यत्ययेन प्रथमा। शस एव वा 'ऊडिदं' इत्युदात्तत्वाभावः । पुरस्तदात्मनोऽग्रे उपादधात इष्टकाबुद्ध्या उपहितवानपः 'एवा ह्येव तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद' इति। अथ ततः ताभ्य उपधीयमानाभ्यः अद्भ्यः आदित्यः उदतिष्ठत देवानामादिभूतस्सविता समुत्पन्नः। हे एव! अयनशील! देव! त्वं हि एवा अयनसमर्थः । तस्मादागच्छेति प्रागेव व्याख्यातो मन्त्रः।* अथ यत्र आदित्य उदतिष्ठत् सा प्राची दिक् अभवत् । प्रथमतोऽञ्चनात् प्राची । अथ सः अरुणः[1] केतुर्दक्षिणतः दक्षिणहस्तपार्श्वे उपादधात् इत्यादि। गतम् । पश्चात् आत्मनः

[1] आरुणः. *आ. १-२०.

इति । ततो देवमनुष्याः पितरः । गन्धर्वाप्सरस-श्चोदतिष्ठन्न् । सोर्ध्वा दिक् । [7]या विप्रुषो विपरापतन्न् । ताभ्योसुरा रक्षाꣳसि पिशाचाश्चोदतिष्ठन्न् । तस्मात्ते पराभवन्न् । विप्रुड्भ्यो हि ते समभवन्न् । तदेषाऽभ्यनूक्ता ॥१६॥ [8]आपो ह यद्बृहतीर्गर्भमायन्न् । दक्षं द-

पृष्ठतः । उत्तरतः सव्यपार्श्वगोलदृष्टान्तस्य[1] दक्षिणादुन्नततरत्वात् । मध्ये यत्रातिष्ठत् । उपरिष्टात् शिरसः परस्तात् ॥

[7]अथ ताभ्यउपधीयमानाभ्यो अद्भ्यः याः विप्रुषः सूक्ष्मास्तोयबिन्दवः विपरापतन् विविधमितश्चेतश्च परापतिताः अबुद्धिपूर्वं गळिताः विनष्ट[2]प्रायाः ताभ्यः असुरादय उदातिष्ठन् । तस्मात् ते सदा देवेभ्यः पराभवन् पराभूताः । कस्मात् ? विप्रुड्भ्यो हि ते समभवन् समुत्पन्नाः विप्रुषो हि कर्मण्यनुपयोगात् विनष्टप्राया इति । तत् इदमर्थरूपं सृष्टिलक्षणं अभिलक्ष्य एषा गाधा अनूक्ता ॥

[8]आपो ह यद्बृहतीरिति ॥ इमां चोपदध्यात् । इयं चतुष्पदा त्रिष्टुप् । तत्र 'अद्भ्यो वा इदं समभूत्' इति चतुर्थपादापेक्षितमध्याहार्यं प्रागेव तस्य पाठात् ब्राह्मणं दर्शयति । यत् यस्मात् आपो बृहतीः महत्यो गर्भमायन् प्रासवत्यः दक्षं वृद्धिशीलं[3] दधाना धारयितुकामाः । हेतौ शानच् । जनयन्तीः जनयितुकामाः कं ? स्वयम्भुं अन्यानपेक्षया यो विश्वं स्वयमेव भाव-

[1]ल्दृष्टयां तस्य. [2]परापतन्ति ता बुद्धिपूर्वगलिता न विनष्ट. [3]वृद्धिं.

**धाना जनयन्तीस्स्वयम्भुम् । तत इमेऽध्यसृज्यन्त सर्गाः । अद्भ्यो वा इदꣳ समभूत् । तस्मादिदꣳ सर्वं ब्रह्म स्वयम्भ्विति । [१]तस्मादिदꣳ सर्वꣳ शिथिलमिवाध्रुवमिवाभवत् । प्रजापतिर्वाव तत् । आत्मनाऽऽत्मानं विधाय । तदेवानु प्राविशत् । तदे-**

---

यितुं शक्नोति । यद्वा—विश्वात्मतया स्वयमेव भविता । तादृशं यस्मादाप आयन् ततः तस्मात् **इमे सर्गाः** स्रष्टव्या लोकाः **अध्यसृज्यन्त** ऐश्वर्यादसृज्यन्त अवैकल्येन वा । यद्वा—यदिति लिङ्गव्यत्ययः । यं गर्भमायन् ततस्स्वयम्भुवा इमे सर्गा अध्यसृज्यन्त तस्यैवैश्वर्यादुत्पन्नाः । अथ 'तस्मादिदं सर्वं ब्रह्म स्वयंभु' इति चतुर्थं पादं दर्शयिष्यत् ब्राह्मणं तस्मादित्यंशासमर्थनायाध्याहारेण हेतुं दर्शयति—एवमुक्तेन प्रकारेण **अद्भ्यः इदं सर्वं** यस्मात् **समभूत्** स्वयम्भुवोऽप्यपां गर्भत्वेन तत्परिणामत्वात् **तस्मादिदं सर्वं** भुवनजातं **ब्रह्म स्वयम्भु** यथा अद्भ्यस्सम्भूतो हिरण्यगर्भो ब्रह्मा स्वयम्भूश्च भवति एवमिदं विश्वमप्परिणामत्वात् बृंहणशीलं स्वयम्भवनसमर्थं च भवतीत्यपामेव स्तुतिः ॥

[१]इदानीं दृष्टान्तेनोक्तं समर्थयते—**तस्मात्** अप्परिणामत्वात् **इदं सर्वं शिथिलमिव अध्रुवमिव** च **अभवत्** भवति अपां शिथिलाध्रुवस्वभावत्वात् । कथं तर्हीदमिदानीं विश्वं दृढं स्थिरं च भवतीत्याह—तस्मिन्नेव काले **प्रजापतिः आत्मना** स्वयमेव **आत्मानं** आत्मशरीरभूतं विश्वं **विधाय** सृष्ट्वा **तदेव** सृष्टमात्रमेव **अनुप्राविशत्** अनुक्रमेण प्रविश्य स्थितः अहमिदमित्यभि-

षाऽभ्यनूंक्ता ॥१७॥ [10]विधायं लोकान् विधायं भूतानिं । विधाय सर्वाः प्रदिशो दिशंश्च । प्रजापंतिः प्रथमजा ऋतस्यं । आत्मनाऽऽत्मानंमभिसंविवेशेतिं । [11]सर्वंमेवेदमाप्त्वा । सर्वंमवरुद्ध्यं । तदेवानु प्रविंशति । य एवं वेदं ॥ १८ ॥

आसींदतिष्ठन्नभूदपो वायो इति सेयं दिगभ्यनूंक्ताऽभ्यनूंक्ताऽष्टौ चं ॥ २३॥

---

मानेन विश्वमनुप्रविश्याधारयत् । तत् इदमर्थरूपं प्रजापतिप्रवृत्तिलक्षणं **अभिलक्ष्य एषा** ऋक् **अनूक्ता** ॥

[10]विधाय लोकानिति ॥ इमां च त्रिष्टुभमुपदधाति । **विधाय लोकान्** भूतादीन् **विधाय भूतानि** आकाशादीनि **विधाय** च **सर्वाः प्रदिशः** प्रधानदिशः प्रागाद्याः **दिशश्च** कोणदिशश्च **प्रजापतिः प्रथमजाः** प्रथमजातः प्रथमपुत्रः **ऋतस्य** उदकस्य । 'जनसन' इति विट्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । **आत्मना** स्वयमेव **आत्मानं** आत्मीयं शरीरं जगल्लक्षणं **अभिसंविवेश** आभिमुख्येन प्रविष्टवान् । 'तत्सृष्ट्वा । तदेवानु प्राविशत्'* इत्यत्र विस्तरो भविष्यति ॥

[11]एवं वेदिता **सर्वमेव** जगत् **इदं आप्त्वा** लब्ध्वा **सर्वं** च **अवरुध्य** विधेयीकृत्य **तदेवानु प्रविशति** स्वामित्वेन धारयति ॥

इत्यारण्यके प्रथमे त्रयोविंशोनुवाकः.

---

*तै. उ. २—६.

**[1]चतुष्टय्य आपो गृह्णाति । चत्वारि वा अपाꣳ रूपाणि । मेघो विद्युत् । स्तनयित्नुर्वृष्टिः । तान्येवावरुन्धे । [2]आतपति वर्ष्या गृह्णाति । ताः पुरस्तादुपदधाति । एता वै ब्रह्मवर्चस्या आपः । मुखत एव ब्रह्मवर्चसमवरुन्धे । तस्मान्मुखतो ब्रह्मवर्चसि-**

---

[1]इदानी मवीष्टकानामनुष्ठानविशेषमाह—चतुष्टय्य इति ॥ चत्वारोऽवयवाः आसाम् । 'संख्याया अवयवे तयप्' 'टिड्ढाणञ्' इत्यादिना ङीप् । चत्वारोऽवयवाः चतुर्धा भिन्नाः वर्ष्याः **आपो गृह्णाति** । उभयत्र विभक्तिव्यत्ययः । **चत्वारि अपां रूपाणि** रूपणानि आविर्भावाः मेघादयः । **मेघः** मेहनसमर्थजलदविशेषा[1]-त्मकमेकं रूपम् । **विद्युत्** विद्योतनात्मकमेकं रूपम् । **स्तनयित्नुः** गर्जनात्मकम् । **वृष्टिः** अप्पतनात्मकम् । **तान्येव** रूपाणि **अवरुन्धे** चतुष्टयीनां ग्रहणात् ॥

[2]**आतपति** बलवति सूर्ये तपति **वर्ष्याः** वर्षभवाः **गृह्णाति** । **ताः पुरस्तात्** पूर्वस्यां दिशि **उपदधाति** याः पूर्वस्यां दिशि अविष्टकाश्चोदिताः ता वर्ष्याभिरेव कार्या इत्यर्थः । **एता वै ब्रह्मवर्चस्या आपः** ब्रह्मवर्चससंपादनार्हाः । 'छन्दसि च' इति यः । **मुखतः** प्रथमं **एव ब्रह्मवर्चसं अवरुन्धे** प्रापयति यजमानं[2] **तस्मात् पुरुषो मुखतो ब्रह्मवर्चसितरः** अतिशयेन ब्रह्मवर्चसवान् ॥

---

[1]विशेषागमना. [2]प्राप्नोति यजमानः.

तरः ॥९९॥ [3]कूप्या गृह्णाति । ता दक्षिणत उपदधाति । एता वै तेजस्विनीरापः । तेज एवास्य दक्षिणतो दधाति । तस्माद्दक्षिणोऽर्धस्तेजस्वितरः । [4]स्थावरा गृह्णाति । ताः पश्चादुप दधाति । प्रतिष्ठिता वै स्थावराः । पश्चादेव प्रतितिष्ठति । [5]वहन्तीर्गृह्णाति ॥१००॥ ता उत्तरत उपदधाति । ओजसा वा एता वहन्तीरिवोद्धतीरिव आकूजतीरिव धावन्तीः । ओज एवास्योत्तरतो दधाति । तस्मादुत्तरोऽर्ध ओजस्वितरः । [6]संभार्या गृह्णाति । ता मध्य

---

[3]कूपे भवाः कूप्याः । 'भवेच्छन्दसि' इति यत् । **ता दक्षिणत** इत्यादि । गतम् । पुरुषस्य **दक्षिणोऽर्धः तेजस्वितरः** इतरस्मात् ॥

[4]**स्थावराः** स्थानशीलाः ॥ 'स्थेशभासपिसकसो वरच्' इति वरच् । पश्चादायत्या पुरुषः प्रतिष्ठितो भवति, पश्चात् स्थावरोपधानात् ॥

[5]वहन्त्यः स्रोतस्विन्यः ओजः बलं तेन हेतुना आपो धावन्त्यः वेगेन गच्छन्त्यः वहन्त्य इव आकर्षन्त्यः इव च भवन्ति । **उद्धतीः** उद्धतयः ऊर्ध्वगतय इव च भवन्ति । **आकूजतीः** समन्तात् शब्दयन्त्य इव च भवन्ति । **तस्मादुत्तरोऽर्धः** पुरुषस्य बलवत्तरः ॥

[6]**सम्भार्याः** गृहेषु स्थिताः । संभ्रियन्त इति सम्भार्याः ।

**उपंदधाति । इयं वै संभार्याः । अस्यामेव प्रतिं तिष्ठति । [7]पल्वल्या गृंह्णाति । ता उपरिष्टादुपादं-धाति ॥ १०१ ॥ असौ वै पंल्वल्याः । अमुष्यांमे-व प्रतिंतिष्ठति । [8]दिक्षूपंदधाति । दिक्षु वा आपंः । अन्नं वा आपंः । अद्भ्यो वा अन्नं जायते । यदेवा-द्भ्योऽन्नं जायंते । तदवंरुन्धे । [9]तं वा एतमंरुणाः केतवो वातंरशना ऋषंयोऽचिन्वन्न् । तस्मांदारुण-**

---

कर्मणि ण्यत् । इयं खलु पृथिवी **सम्भार्याः** आपः सम्भार्यत्व-साम्यात् पृथिव्यपि सम्भार्या । सम्यक् भ्रियन्ते सर्वेऽप्यनयेति करणे ण्यत् ॥

[7]**पल्वल्याः** पल्वले भवाः अशोष्यस्वभावाः । **असौ** द्यौः **पल्वल्या** आपः । अशोष्यत्वलक्षणसाधर्म्यात् ताच्छब्द्यम् ॥

[8]अथ दिक्षूपधानं स्तूयते—दिक्षूपदधातीति ॥ एता इष्टकाः । को लाभः ? सर्वान्नसिद्धिः । कुत एतत् ? **दिक्षु** हि **आपः** स्थिताः ताश्च स्वयं **अन्नं**, अन्नकारणत्वात् तासाम् । तदे-वाह—**अद्भ्यो वा अन्नं जायते** । तस्मात् **यत्** नाम किञ्चित् **अद्भ्योऽन्नं जायते** तत् सर्वं **अवरुन्धे** दिक्षूपधानेन ॥

[9]अथारुणकेतुकपदं निर्वक्ति—तं वा इति ॥ यस्मादिदमरुणा-दयः ऋषयोऽचिन्वन् पूर्वं **तस्मादारुणकेतुकः** । 'तस्येदम्' इति छान्दसः ठक् । अध्यात्मादित्वाद्वा ठञ् । छान्दसं प्रत्य-यात्पूर्वस्योदात्तत्वम् । तत् इदमर्थरूपं **अभिलक्ष्य एषा ऋक् अनूक्ता** ॥

केतुकः । तदेषाऽभ्यनूक्ता । [10]केतवो अरुणासश्च । ऋषयो वातरशनाः । प्रतिष्ठाꣳ शतधा हि । समाहितासोऽसहस्रधायसमिति । [11]शतशश्चैव सहस्रशश्च प्रतितिष्ठति । य एतमग्निं चिनुते । य उ चैनमेवं वेद ॥ १०२ ॥

ब्रह्मवर्चसितरो वहन्तीर्गृह्णाति ता उपरिष्टादुपादधात्यारुणकेतुकोऽष्टौ च॥२४॥

[10]केतवो अरुणासश्च इति ॥ व्याख्यातेयम् ।* अस्यार्थस्य अनूक्ति[1] र्व्याख्यानमर्थस्य अनया क्रियते । यथा अरुणादयः **ऋषयः समाहिताः** असहस्रधात्रीं **प्रतिष्ठां** अग्निं **शतधा** भिन्नं अचिन्वन् इति शेषः । अत्र त्रयाणां कर्तृत्वे प्राधान्यादारुणकेतुभिः व्यपदेशः ॥

[11]**य एतमग्निं** आरुणकेतुकं **चिनुते यश्च एनं** अग्निं **एवं** उक्तप्रकारेण **वेद** जानाति । स चेता वेदिता च **शतशश्चैव** शतेनशतेन च **सहस्रशश्च** सहस्रेणसहस्रेण च प्रजाभिः पशुभिश्च **प्रतितिष्ठति** प्रतिष्ठितो भवति । 'संख्यैकवचनाच्च' इति शस् । इदं द्वितीयमारुणकेतुकस्य निर्वचनम् । प्रथमं तु 'अथारुणः केतुर्दक्षिणतः '† इत्यत्र । आरुणकेतुकलक्षणकूर्मरूपिपुरुषप्रभवत्वात् आरुणकेतुकोऽग्निरिति सूचितमिति[2] ॥

इत्यारण्यके प्रथमे चतुर्विंशोनुवाकः ॥

[1]वाचिकैवेयमन्यार्थस्य नानूक्ति. [2]केतुकोऽग्निरुच्यते.

*आ. १-२१. †आ. १-२३.

[1]जानुदघ्नीमुत्तरवेदीं खात्वा । अपां पूरयति । अपाꣳ सर्वत्वाय । पुष्करपर्णꣳ रुक्मं पुरुषमित्युप दधाति । तपो वै पुष्करपर्णम् । सत्यꣳ रुक्मः । अमृतं पुरुषः । एतावद्वावास्ति । यावदेतत् । यावदेवास्ति ॥ १०३ ॥ तदवरुन्धे । [2]कूर्ममुपदधाति । अपामेव मेधमवरुन्धे । अथो स्वर्गस्य लोकस्य स-

---

[1]अथारुणकेतुकस्य प्रयोगशरीरमाह[1]—जानुदघ्नीमिति ॥ व्याख्यातम्* । विहितानामेव पूरणादीनां पुनर्विधानं स्तुत्यर्थम् । **अपां** अद्भिः **पूरयति** । 'पूरणगुण' इति समासप्रतिषेधात् षष्ठी विज्ञाता । **अपां सर्वत्वाय** सर्वोऽप्यग्निरम्मय इति ख्यापनार्थमबीष्टकावत्त्वादग्नेः । यद्वा—सर्वमिदं जगत् अद्भिः पूर्णं अम्मयमिति विश्वमिति ख्यापनार्थम् । तप इति । प्रजापतेः तपःप्रभावसम्भूतत्वात् । सत्यमिति । दृढत्वात् दीप्तिमत्त्वाद्वा । अमृतमिति । हिरण्यगर्भरूपत्वात् । यद्वा—ब्रह्मैव पुरुषः पूरकत्वसामान्यात् । एतावदिति । **यावत् एतत्** तपस्सत्यं अमृतमिति **एतावदेव** परमार्थतः **अस्ति** असत्प्रायमन्यत् । तस्मात् एतदात्मकं पुष्करपर्णं रुक्मं पुरुषत्रयमुपदध्यादिति । तस्मात् तदुपधानात् **यावदेवास्ति तत्** सर्वं **अवरुन्धे** ॥

[2]कूर्ममिति ॥ अत्र मन्त्रस्य अनाम्नातत्वात् महाग्निकेनोपदधाति 'मही द्यौः'† इति । अपामेवेति । **अपां** सम्बन्धि यत् मेधार्हं यज्ञार्हं तत् **अवरुन्धे** रसात्मकत्वात् कूर्मस्य । **अथो**

---

[1]प्रयोगमाह. *आ. १-२२. †सं. ३-३-१०.

**मंष्ट्यै । [3]आपमापामपस्सर्वाः । अस्मादस्मादि-तोऽमुतः । अग्निर्वायुश्च सूर्यश्च । सहसंश्चस्करर्धि-या इति । वाय्वश्वां रश्मिपतंयः । [4]लोकंपृण-च्छिद्रंपृण ॥ १०४ ॥ यास्तिस्रः परमजाः । [5]इ-न्द्रघोषा वो वसुभिरेवा ह्येवेति । [6]पञ्च चितय उपद-धाति । पाङ्क्तोऽग्निः । यावानेवाग्निः । तं चिनुते । [7]लोकंपृणया द्वितीयामुपदधाति । पञ्चपदा वै विराट् ।**

---

अपि च **स्वर्गस्य लोकस्य समष्ट्यै** सम्यगाप्त्यै भवति पुरुषरूपत्वात्तस्य ॥

[3]आपमापामित्यबीष्टकाविधिसूचनार्थः तन्मन्त्रपाठः* ॥

[4]लोकंपृणेति लोकंपृणा उपदधाति । **यास्तिस्रः परमजाः** इत्यत्र विशेषो मन्त्रस्य **याः** परमजाताः **परमजाः तिस्रः** ॥

[5]' इन्द्रघोषा वः '† इत्यादिभिश्च ' एवा ह्येव '† इत्यादिभिश्च । गता मन्त्राः ॥

[6]अथ पञ्चचितीरुपदधाति । पञ्चसु चितीषु व्याख्याताः‡ । एवं लोकंपृणान्ताः पाङ्क्ताः पङ्क्तिविकाराः पञ्चसंख्यासम्भूताः । पङ्क्तिशब्दः उत्सादिकः । तस्मात् **यावान् अग्निः तं चिनुते** पञ्चचित्युपधानेन ॥

[7]**लोकंपृणया** पूर्वोक्तया **द्वितीयामुपदधाति** । पञ्चसु चि-

---

*आ. १-१. †आ. १-२०. ‡सं. ५-२-३.

तस्या वा इयं पादः । अन्तरिक्षं पादः । द्यौः पादः । दिशः पादः । परोरजाः पादः । [8]विराज्येव प्रतितिष्ठति । य एतमग्निं चिनुते । य उ चैनमेवं वेद ॥ १०५ ॥

अस्तिं पृणान्तरिक्षं पादष्षट्च ॥२५॥

[1]अग्निं प्रणीयोपसमाधाय । तमभित एता अ-

तीषु व्याख्यातो लोकंपृणाशब्दः* । अथ लोकंपृणां विट्त्वेन स्तोतुं विराजः प्राशस्त्यमाह—**पञ्चपदा विराट्** अन्नं प्रजापतिमूर्तिर्वा । पञ्च पादा अस्या इति पञ्चपदा । 'संख्यासुपूर्वस्य' इति लोपः व्यत्ययेन ऋचोऽन्यत्रापि । 'टाबृचि' 'पादः पत्' इति पद्भावः । तस्याः पृथिव्यादयः पञ्च पादाः **दिशः** सर्वा एक**पादः** । परस्तात् रजसो यो वर्तते स **परोरजाः** अज आदित्यो वा स पञ्चमः **पादः** । पारस्करादित्वात् सुट् । ईदृशी विराट् लोकंपृणा इत्यनुक्तेऽपि स्तुतिः गम्यते ॥

[8]अथ **एतमग्निं** चिन्वानः एवं वेदिता च **विराजि** प्रतिष्ठितो भवति ॥

इत्यारण्यके प्रथमे पञ्चविंशोनुवाकः.

---

[1]'अग्निं प्रणीय' इत्याद्युक्तमेव† अनुवदति न्यायेन विशेषं वक्तुम् । यदुक्तं पूर्वमस्माभिः—अयमबिष्टकावान् अग्निः अग्निहोत्रादिकर्मस्वङ्गभावं प्रतिपद्यते, अन्येषां मते सर्वेषु यज्ञक्रतुष्विति; तदिद-

*सं ५-२-३. †आ. १-२२.

वीष्टंका उपंदधाति । अग्निहोत्रे दंर्शपूर्णमासयोंः। पशुबन्धे चांतुर्मास्येषुं । अथों आहुः । सर्वेषु यज्ञक्रतुष्विति । अथं ह स्माहारुणस्स्वांयम्भुवः । सावित्रस्सर्वोऽग्निरि[2]त्यनंनुषङ्गं मन्यामहे । [3]नाना वा एतेषां वीर्यांणि । कमग्निं चिंनुते ॥ १०६ ॥ सत्रियमग्निं चिन्वानः । कमग्निं चिंनुते । सावित्रमग्निं चिन्वानः । कमग्निं चिंनुते । नाचिकेतमग्निं चिन्वानः । कमग्निं चिंनुते । चातुर्होत्रियमग्निं

---

मनुपपन्नम् । अथेत्युपक्रमे । हेति विनिग्रहे । **अयं** तावत् **अरुणो** नाम साक्षात् स्वयम्भुवोऽपत्यं एवमाह—सावित्रस्सर्वोऽग्निरिति । कोऽर्थः ? यावानग्निः काठके विधीयते सावित्रो नाचिकेतश्चातुर्होत्रो वैश्वसृजः उपानुवाक्य आरुणकेतुकश्च स **सर्वः** अपि **सावित्र** एव सावित्रे सर्वस्यान्यस्यानुषङ्गात् सावित्रः प्रथमा चितिः नाचिकेतो द्वितीय इत्यादि । तस्मादारुणकेतुकस्यापि पृथक्कृतस्य अग्निहोत्राद्यङ्गभावो न युक्त इति ॥

[2]अथेममनुषङ्गपक्षं दूषयति—अननुषङ्गमिति ॥ एषामग्नीनामनुषङ्गाभावमेव वयं ब्रह्मवादिनो **मन्यामहे** । तस्मात् सर्वेऽपि पृथक्पृथक् पञ्च चितयः प्रयोक्तव्या इति ॥

[3]हेतुमाह—नानेति ॥ **नाना** पृथग्भूतानि खल्वे**तेषां वीर्याणि** कर्मफलानि तत्कथमैकधर्म्यं स्यात् । नानात्वमेव समर्थयते—कमिति । किंफलमग्निंचिनुते यस्सत्रियं चिनुते । अथ यस्सा-

चिन्वानः । कमग्निं चिनुते । वैश्वसृजमग्निं चिन्वानः । कमग्निं चिनुते ॥ १०७ ॥ उपानुवाक्यमाशुमग्निं चिन्वानः । कमग्निं चिनुते। इममारुणकेतुकमग्निं चिन्वान इति । [4]वृषा वा अग्निः । वृषाणौ सङ्स्फालयेत् । हन्येतास्य यज्ञः । तस्मान्नानुषज्यः । [5]सोत्तरवेदिषु क्रतुषु चिन्वीत । उत्तरवेद्यां ह्य

---

वित्रं चिनुते सोऽपि किंफलं चिनुते यत्फलमुद्दिश्य सत्यमग्निं चिनुते तत्फलकोऽन्यः एतत्फलकोऽप्यन्य इति[1] यावत् । सर्वं निगदसिद्धम्* ॥

[4]इदानीमनुषङ्गदोषमाह—वृषेति ॥ **वृषा** सेक्ता खल्वग्निः । अनुषङ्गं हि कुर्वन् तस्य **वृषाणौ** मुष्कौ **संस्फालयेत्** शातयेत् । स्फुरतेः 'चिस्फुरोर्णौ' इत्यात्वम् । हीनवीर्यत्वात् छिन्नवृषणः स्यादग्निः । ततश्च **अस्य यज्ञो हन्येत** नश्येत् निर्वीर्यत्वादग्नेः । **तस्मान्नानुषज्यः** ॥

[5]तर्ह्यग्निहोत्रादिष्वप्ययं प्रयुज्यतामित्याह—सोत्तरवेदिष्विति ॥ उत्तरवेदिसहितेषु **क्रतुषु** कर्मसु पश्वादिषु इममग्निं **चिन्वीत** । कारणमाह—**उत्तरवेद्यां ह्यग्निश्चीयते** । तस्मात् सर्वोऽप्यग्निः प्रकृतिः विकृतिर्वा उत्तरवेदिमत्स्वेव कर्मसु चेतव्यः । न चास्त्यग्निहोत्रादिषु उत्तरवेदिः । तेषु तु विहितप्रतिषिद्धत्वात् विकल्प इति ॥

---

[1]...किम्फलकं चिनुते यत्फलकोऽन्यः तेनैतत्फलकोऽन्य इति. *आ. १-२२.

ह्यग्निश्चीयते । [6]प्रजाकामश्चिन्वीत ॥ १०८ ॥ प्राजापत्यो वा एषोऽग्निः । प्राजापत्याः प्रजाः । प्रजावान्भवति । य एवं वेद । [7]पशुकामश्चिन्वीत । संज्ञानं वा एतत्पशूनाम् । यदापः । पशूनामेव संज्ञानेऽग्निं चिनुते । पशुमान्भवति । य एवं वेद ॥ १०९॥ [8]वृष्टिकामश्चिन्वीत । आपो वै वृष्टिः । पर्जन्यो वर्षुको भवति । य एवं वेद । [9]आमयावी चिन्वीत । आपो वै भेषजम् । भेषजमेवास्मै करोति । सर्वमायुरेति । [10]अभिचरंश्चिन्वीत । वज्रो वा आपः ॥ ११० ॥ वज्रमेव भ्रातृव्येभ्यः प्रहरति । [11]स्तृणुत एनम् । [12]तेजस्कामो यशस्कामः । ब्रह्मवर्चसकामस्स्वर्गकामश्चिन्वीत । [13]एतावद्वावा-

---

[6]प्रजाकामश्चिन्वीतेत्येवमादयः आरुणकेतुकस्य काम्यविधयः निगदसिद्धाः ॥

[7—10]संज्ञानमिति ॥ सम्यक् ज्ञानसाधनं आपः पशूनाम् । तत्र संज्ञाने अप्सु चीयमानः पशूनस्मै संज्ञापयति । ततः पशुमान् भवति ॥

[11]स्तृणुत एनमिति ॥ छिनत्त्येव शत्रून् ॥

[12]तेजस्कामादयस्समुदिताः प्रथमया चेतारं विशिंषन्ति ॥

[13]एतावदित्यादि ॥ गतम्* ॥

---

*आ. १–२५.

स्ति । यावदेतत् । यावदेवास्ति । तदवरुन्धे । [14]तस्यैतद्व्रतम् । वर्षति न धावेत् ॥ १११ ॥ अमृतं वा आपः । अमृतस्यानन्तरित्यै । नाप्सु मूत्रपुरीषं कुर्यात् । न निष्ठीवेत् । न विवसनस्स्नायात् । गुह्यो वा एषोऽग्निः । एतस्याग्नेरनतिदाहाय । [15]न पुष्करपर्णानि हिरण्यं वाऽधितिष्ठेत् । एतस्याग्नेरनभ्या-

[14]अथ तस्य आरुणकेतुकचितः एतत् इदं वक्ष्यमाणं व्रतम् नियमः—वर्षति न धावेत् इत्यादि । नाप्स्विति । कर्माङ्गत्वेन स्मृतिप्रतिषिद्धस्यापीह प्रतिषेधः श्रौतप्रायश्चित्तार्थः । न निष्ठीवेत् अप्सु । न विवसनस्स्नायात् । गुह्य इति । अग्निचिन्नाम संवृतोऽग्निः । तेनाग्निना एतस्याबीष्टकाग्नेः अनतिदाहाय अतिक्रम्य दाहो मा भूदिति वस्त्रादिना छादित एव स्नायात् अग्न्यन्तरयोगो हि अग्न्यन्तरमतिदहति । यद्वा—गुह्येनाबिष्टकाग्निना आत्मनो दाहो मा भूदिति संवृत एव स्नायात् ॥

[15]न पुष्करपर्णानीति ॥ उपहितस्यैव निषेध इत्येके । सर्वस्येत्यन्ये । एतस्य पुष्करपर्णाद्यात्मनोऽग्नेः अनभ्यारोहाय आभिमुख्येनारोहणं अभ्यारोहणमिति[1] । यद्वा—पुष्करपर्णाद्यात्मना अग्निना आत्माऽभ्यारूढो मा भूदिति नाधितिष्ठेत् । न कूर्मस्येति। कर्मणस्संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी । उपहितस्याभक्ष्यत्वम् । नोदकस्येति । उदके भवः औदकः मत्स्यादिः तस्य नाश्नीयात् । नौदकस्य इति वक्तव्ये वर्णव्यत्ययेन ओकारः । यद्वा—मञ्चाः क्रोशन्तीतिवत् तात्स्थ्यात् ताच्छब्द्यम् । उदकचरस्य ना-

[1]आभिमुख्येनाक्रमणं आकर्ष इति.

रोहाय । न कूर्मस्याश्नीयात् । नोदकस्याघातुका-न्येनमोदकानि भवन्ति । अघातुका आपः । य एतमग्निं चिनुते । य उं चैनमेवं वेद ॥ ११२ ॥

चिनुते चिनुते प्रजाकामश्चिन्वीत य एवं वे-
दापो घावेदश्नीयाच्चत्वारि च ॥२६॥

[1]इमा नुकं भुवना सीषधेम । इन्द्रश्च विश्वे च देवाः । [2]यज्ञं च नस्तन्वं च प्रजां च । आदित्यैरिन्द्रस्सह सीषधातु । [3]आदित्यैरिन्द्रस्सगणो मरुद्भिः ।

श्नीयादिति । अथ य एतमग्निं चिनुते यः च एनं अग्निमेवं-फलकं एवंव्रतकं च जानाति एनं औदकानि औदकानि उदके भवानि मत्स्यादीनि उदकनिमित्तानि वा व्याध्यादीनि व्यसन-कारणानि अघातुकानि भवन्ति घातुकान्येतस्य न भवन्ति । न लोकाव्यय ' इति [3] षष्ठीप्रतिषेधः । उदकशब्दस्यादिवृद्धौ वर्णव्यत्ययेन ओकारः । एनादेशस्याद्युदात्तत्वं छान्दसम् । अ-घातुकशब्दस्य चोत्तरपदाद्युदात्तत्वं छान्दसमेव । तदिदमाद्युदात्तत्वं व्यत्ययस्थानमेवेति वेदितव्यम् । अथ आपः च एनं अघा-तुका भवन्ति न परमौदकान्येव ॥

इत्यारण्यके प्रथमे षड्विंशोनुवाकः.

---

[1-3]अथ तिस्रो द्विपदा उपदधाति—इमा नुकमिति ॥ सर्वा-स्त्रिष्टुभः । द्वितीयः पादस्त्र्यक्षराभिक्रान्तः । नुकमिति सु-

अस्माकं भूत्ववि॒ता त॒नूना॑म् । [4]आप्लु॑वस्व॒ प्रप्लु॑व-

खनाम । इमानि भुवनानि सुखं सीषधेम साधयामः । छान्दसो लुङ्, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । वर्णव्यत्ययेन उपान्त्यस्य एकारः । इन्द्रश्च विश्वे च देवाः वयं च साधयामः । 'त्यदादीनि सर्वैर्नित्यम्' इत्यस्मदः शेषः । नः अस्माकं यज्ञं च तन्वं शरीरं प्रजां च आदित्यैस्सहेन्द्रः सीषधातु साधयतु । साधयतेर्लोटि शपश्चङ्, तस्य च दीर्घत्वम् । चङि द्विर्वचनह्रस्वत्वाभ्यासकार्याणि । आदित्यैः मरुद्भिश्च सह सगणः आत्मीयगणसहितः इन्द्रः अस्माकं तनूनां आविता रक्षिता भूतु भवतु । शपो लुक् । 'भूसुवोस्तिङि' इति गुणाभावः ॥

अथ षोडशदुःखक्षपणी[1]रुपदधाति—आप्लवस्वेति ॥ सर्वा अनुष्टुभः । विशेषो वक्ष्यते । अत्र अग्निरेव यजमानीकृत्योच्यते । हे आण्डीभवज ! अण्डमेवाण्डी । स्वार्थिकाणन्तात् स्त्रियां ङीप् । अण्डस्य वा इयमाण्डी, अण्डस्यान्तर्गततया यत्र गर्भश्शेते । तत्र भवः आण्डीभवः अण्डजः पितामहः, तस्माज्जातः आण्डीभवजः यथा "प्राजापत्यो वा एषोऽग्निः"* इति । आमन्त्रिताद्युदात्तत्वाभावः छान्दसः । सः त्वं मा मुहुराप्लवस्व मा च मुहुः प्रप्लवस्व । आप्लवनं आगमनं जन्म, प्रप्लवनं प्रायणं मरणम् । किं तर्हि कुर्यामिति चेत् सुखादीं सुखानामादिं मुख्यं दुःखनिधनां दुःखानां निधनं विनाशहेतुम् । उभयत्रापि छान्दसं दीर्घत्वम् । ईदृशीं स्वां पुरं आत्मीयं स्थानं प्रतिमुञ्चस्व बन्धय । तादृशं विष्टपं स्थानं कल्पय यत्र न जन्ममरणे इति ।

[1] दुःखक्षाणी. दुःखकृषाणी. *आ. १-२६.

**स्व । आण्डीभंवज मा मुहुः । सुखादीं दुःखनिधनाम् । प्रतिमुञ्चस्व स्वां पुरम् ॥ ११३ ॥ [5]मरीचयस्स्वायम्भुवाः । ये शरीराण्यकल्पयन् । ते ते देहं**

अन्य आह—अत्र समुच्चये लोट्, यथा ओदनं भुङ्क्ष्व सक्तून् पिब धानाः खाद इत्येवायमभ्यवहरतीति । **आप्लवस्व** जायस्व, **प्रप्लवस्व** म्रियस्व, **आण्डी भव** अण्डस्थो भव । अण्डे भव आण्डः, अभूततद्भावे च्विः । गर्भवासित्वं प्रतिपद्यस्व । चेत्यस्य वर्णव्यत्ययेन जकारः । यद्वा—जनेर्निरुपपदादेव छान्दसो डः । हे **ज** ! जननशील ! **सुखादीं** आपातसुखां **दुःखनिधनां** परिणामदुःखां **स्वां पुरं** आत्मीयां अनुभूयमानां इमामिव **मा मुहुः प्रतिमुञ्चस्व** मा परिगृहाण, आप्लवादिक्रमेण पुनःपुनः असाधारणीं देहपरम्परां प्रतिमुञ्चस्वेति । सामान्यवचनो धातुः ॥

[5]**मरीचय** इति ॥ बहुवचनात् आद्यर्थोऽवगम्यते । मरीच्यादयः **स्वायम्भुवाः** स्वयम्भुवोऽपत्यानि स्वयम्भुवो मानसाः पुत्राः । यद्वा—मरीचिनामानः पुत्राः स्वायम्भुवाः केचिदृषयः । **शरीराणि** लोकानां **ये अकल्पयन्** ते मरीचयः **ते** तव **देहं** कल्पयन्तु हे अग्ने! । किंच **ते** तव **ख्यातिश्च मा स्म रिषत्** मा रिष्टा विनष्टा भूत् । प्रकृतिप्रत्यययोः स्मशब्देन व्यवधानं छान्दसम् । 'ढ्रलोपे पूर्वस्य' इति क्तिनो दीर्घत्वम् । अन्य आह—ख्यातिः **ख्याः** । 'क्विप्च' इति क्विप् । कीदृशी ख्यातिः? **तीः** तरन्ती सर्वत्र प्रथमाना, **मा स्म रिषत्** संकुचिता मा भूत् । तरतेः क्विप । 'ऋत इद्धातोः' इतीत्वम् । 'र्वोरुपधायाः' इति दीर्घत्वम् ॥

कल्पयन्तु । मा च ते ख्या स्मं ती रिषत् । [6]उत्तिष्ठत मा स्वप्त । अग्निमिच्छध्वं भारताः । राज्ञस्सोमस्य तृप्तासः । सूर्येण सयुजोषसः । [7]युवा सुवासाः ।

---

[6]उत्तिष्ठतेति ॥ ऋत्विजोऽबिष्टकाधिष्ठिताः स्तूयन्ते । **उत्तिष्ठत** उत्सहध्वम् । 'उदोऽनूर्ध्वकर्मणि' इत्यात्मनेपदाभावः छान्दसः । **मा स्वप्त** अलसा मा भूत । **अग्निमिच्छध्वं** निर्वर्तयितुमिच्छत । यद्वा—अग्निमन्विच्छत केनोपायेन सिद्धस्स्यादिति । **भारताः** हविरादिभरणशीलास्सन्तः इच्छध्वमिति । भरणात् भारताः, यथा—"भारतेत्याहैष हि देवेभ्यो हव्यं भरति"* इति । **राज्ञः सोमस्य** पीतस्य **तृप्तासः** पीतेन सोमेन तृप्ताः। 'पूरणगुण' इति समासप्रतिषेधात् षष्ठी ज्ञापिता । **सयुजोषसः** सह युज्यत इति सयुजः ताहश्य उषसो येषां ते सयुजोषसः । अकारोपजनः छान्दसः । सूर्येण समानं उद्यन्तः । यद्वा—**सूर्येण** सयुक् जोषः प्रीतिर्येषां ते सयुजोषसः । पूर्वस्यान्त्यलोपश्छान्दसः, समानप्रीतयः । जुषेरसुनि जोषः । जगद्रक्षणे सूर्येण समानयोगक्षेमाः स्थ । तस्मान्न तूष्णीमासीतव्यमिति भावः ॥

[7]युवेति ॥ प्रतीकग्रहणमिदं "युवा सुवासाः परिवीत आगात्" इत्यस्याः त्रिष्टुभः । व्याख्यातेयं पशुहौत्रे 'अञ्जन्ति त्वां' इत्यत्र† । नित्ययुवा शोभनवासाः तेजसा परिवीतः आगच्छतु । स एव हि श्रेयान् वृद्धतरो जायमान एव भवति । तं धीमन्तः कवयः ऊर्ध्वं नयन्ति स्वायत्तयज्ञकर्माणः मनसा देवमिच्छन्त इति ॥

---

*सं. २-५-९, †ब्रा. ३-६-१.

[8]अष्टाचंक्रा नवंद्वारा ॥ ११४ ॥ देवानां पूरंयोध्या। तस्याᳪं हिरण्मंयः कोशः । स्वर्गो लोको ज्योतिषाऽऽवृंतः । [9]यो वै तां ब्रह्मंणो वेद । अमृतेनावृंतां पुरीम् । तस्मैं ब्रह्म चं ब्रह्मा च । आयुः कीर्तिं प्रजां दंदुः । [10]विभ्राजंमानाᳪं हरिंणीम् । य-

[8]अष्टाचक्रेति ॥ **अष्टाचक्रा** अष्टव्यूहा अष्टावरणा वा **नवद्वारा** नवनिर्गमना **देवानां** देवनशीलानां **पूः** स्थानं **अयोध्या** न केनचिदपि संप्रहर्तुं शक्या । ‘ ययतोश्चातदर्थे ’ इत्युत्तरपदान्तोदात्तत्वम् । **तस्यां** पुरि **हिरण्मयः** हितरमणीयः हिरण्यप्रभवो वा **कोशः**—कीदृशः?—**स्वर्गः** सुखमयः शोभनावरणो वा **लोकः** स्थानं यत्रेश्वरो लोक्येत **ज्योतिषा** आत्मीयेन तेजसा समन्तात् **आवृतः** परिवेष्टितः । ईदृशब्रह्मबुद्धिरिष्टकासु कर्तव्येति भावः ॥

[9]यो वै तामिति ॥ **यस्तां ब्रह्मणः पुरीं अमृतेन** ज्योतिषा **आवृताम्** । छान्दसमन्तोदात्तत्वम् । **वेद** पश्यति ब्राह्मणः **तस्मै ब्रह्म** शाश्वतं भानाक्रियादान[1]शक्त्यानन्दात्मकं परंब्रह्म **ब्रह्मा** प्रजापतिश्चान्ये च सर्वे देवाः **आयुरादीनि ददुः** ददति ॥

[10]विभ्राजमानामिति ॥ **विभ्राजमानां** बहुप्रकारं दीप्यमानां **हरिणीं** कनकवर्णां हरणशीलां वा मनसः, **यशसा** दीप्त्या **सम्परीवृतां** समन्तात् परिवेष्टितां **पुरं हिरण्मयीं**—गतं—**ब्रह्मा विवेश** प्रविष्टवान् **अपराजिता** सर्वोपद्रवरहिताम् । ‘ सुपां सुलुक् ’ इति लुक् । उपलक्षणत्वात् सर्वेऽपि ब्रह्मादयः पिपी-

[1] भानाक्रियानाद.

शसा संपरीवृताम् । पुरꣳ हिरण्मयीं ब्रह्मा ॥११५
विवेशापराजिता । [1]पराङेत्यज्यामयी । परा-
ङेत्यनाशकी । इह चामुत्र चान्वेति । विद्वान्देवा-

लिकान्ताः स्वाधिकारोपाध्यवच्छिन्नतया परं*संकोचयन्तः तमेव संकुचितं स्वात्मतयाऽभिमन्यन्ते । इदमेव बन्धनम् । सर्वकर्मक्षयेण त्वधिकारनिवृत्तौ परत्वेनाभिमानात्[1] तत्साधर्म्यमुपयन्तीति मुक्ता इत्युच्यन्ते । तत्रैते अधिकारनिवृत्त्या मुक्ताः । ईश्वरोऽनादिमुक्तः, अधिकारस्याविद्यमानत्वात् । तत्राधिकारकारणमेव अभिमन्तृत्वं चेतनत्वं चेत्येके । अन्य एव तेभ्यश्चेतना इत्यन्ये । पराभिमन्त्रभिमन्तव्यांशा इतरेऽभिमन्तारोऽभिमन्तव्यानि चेत्यपरे । एवमेतत्स्थानबुद्ध्या इष्टकोपधेयेति । निष्ठान्तयोरनन्तरस्य[2] गतेरन्तोदात्तत्वं छान्दसम् ॥

[11]पराङिति ॥ **पराङ्** अपुनरावृत्तः शान्तिं परां प्राप्नोति । **अज्यामयी** वयोहानिः ज्या सैवामयः तद्वन्तो ज्यामयिनः मरणधर्माणः तद्विपरीतः अज्यामयी अमृतिभूतः । अमुत्र फलमेतत् । इह च **पराङेति** अपुनरावृत्त एव गच्छति सुखं **अनाशकी** नाशकोपमृत्युः, बन्धकं वा कर्म, तद्वन्तो नाशकिनः, तद्विपरीतः अनाशकी जितापमृत्युः । एवं **इह च अमुत्र च विद्वान्** ब्रह्मवित् सुखी सम्पद्यते । किञ्च **अन्वेति** अनुक्रमेण गच्छति च **देवासुरान् उभयान्** देवा इन्द्रादयः तेभ्योऽन्ये असुराः मनुष्यादयः तान् सर्वान् स्वेच्छयैवान्वेति । यदा यथाभावं का-

*'पुरं' इति पाठान्तरमप्यस्ति. [1]त्वेनाभिधानात्. [2]रन्यतरस्य.

सुरानुभयान् । [12]यत्कुमारी मन्द्रयते । यद्योषिद्यत्पतिव्रता । अरिष्टं यत्किञ्च क्रियते । अग्निस्तदनुवेधति । [13]अशृतासश्शृतासश्च ॥ ११६ ॥ यज्वा-

मयते तदैव तथाभावं स्वेच्छया प्रतिपद्यते । न तत् किञ्चित्कामयते, परमेव प्राप्नोति ॥

[12]यत्कुमारीति ॥ मन्त्रयतिसमानार्थो मन्द्रयतिः । मन्त्रयतेरेव वा वर्णव्यत्ययेन दकारः । मत्रि गुप्तभाषणे । अप्राप्तभर्तृका **कुमारी** सा प्राप्तयौवना रहसि **मन्त्रयते** "मम सख्यः सर्वा लब्धकौमारपतयः मोदन्ते, अहं मन्दभाग्या अद्यापि पितृकुले वसामि" इत्येवमिमां मन्त्रयमाणां कुर्वतः पितुः यत् पापं, अथ **योषित्** युवतिः सा अतीव रागान्धा अभीष्टवल्लभालाभेन मन्त्रयते "निर्दयो मां मन्मथो बाधते किमनेन वराकेणोपयन्त्रा तमेव हृदयचोरं अभिसरामि" इति एवं मन्त्रयमाणाया अस्या एव **यत्** पापं, अथ **पतिव्रता** त्यक्तान्यपुरुषिका कौमारपतावेव नियता सा मन्त्रयते "अहमत्रभवन्तमेव ध्यायामि, अयं तु मामकृतपुण्यां[1] नाद्रियते, तद्वरं मर्तुं" इति तामेव मन्त्रयमाणां कुर्वतः पत्युः **यत्** पापं, **यच्चान्यत् किंचित् अरिष्टं** नाम्ना निर्देष्टुमशक्यं महत्पापं **क्रियते** पित्रादिभिरन्यैर्वा **तत्** सर्वं **अग्निः** आरुणकेतुकः **अनुवेधति** अनुक्रमेण नाशयति । वेधतिर्धात्वन्तरं विध्यतिसमानार्थम् ॥

[13]अशृतास इति ॥ **अशृतासः** अपक्काः बालमूकादयः **शृतासः** पक्काः शृतवन्तः **यज्वानः** श्रुतिस्मृतिविहितकर्मानुष्ठायिनः **अयज्वनः** तद्विपरीताः ते सर्वेऽपि **स्वर्यन्तो नापेक्षन्ते**—हेतौ शतृप्रत्ययः—स्वर्गगमनार्थं अन्यन्नापेक्षन्ते, वक्ष्य-

[1]मकृतबुद्ध्या.

नो येऽप्ययज्वनः । स्वर्यन्तो नापेक्षन्ते । इन्द्रमग्निं च ये विदुः । [14]सिकता इव संयन्ति । रश्मिभिस्समुदीरिताः । अस्माल्लोकादमुष्माच्च । ऋषिभि-

माणज्ञानव्यतिरेकेणान्यत्किंचित् स्वर्गगमनसाधनं नापेक्षन्ते, तेषां तदेव पर्याप्तमिति भावः । किं पुनस्तदित्याह—**इन्द्रमग्निं च ये विदुः** शचीपतिं स्वाहापतिं च ये यथावत् जानन्ति । यद्वा— पूर्वोक्तं ब्रह्मलक्षणं ईश्वरं आरुणकेतुकं चाग्निं ये यथार्थेन जानन्ति तेषां तदेव ज्ञानं सर्वश्रेयस्साधनमिति ॥

[14]सिकता इति ॥ **सिकताः** पांसवो यथा वायुना इतश्चेतश्च समुदीरिताः क्वचित् **संयन्ति** सङ्गच्छन्ते तथा इमे जीवाः **रश्मिभिः** रज्जुस्थानीयैः कर्मभिः **अस्माल्लोकात्** कर्मार्जनस्थानात् **अमुष्माच्च** तत्फलभोगस्थानाच्च **समुदीरिताः** सम्यक् कर्मानुगुणं प्रेरिताः संयन्ति संहत्य क्वचिद्वर्तन्ते, पुनश्च अन्यैः कर्मभिः वाय्वन्तरस्थानीयैः अन्यत्र नीयमानाः परस्परं वियुज्यन्ते । इत्थं व्यवस्थां विधाय ततः इमां व्यवस्थां **ऋषिभिः** मन्त्रदृग्भिः **पृश्निभिः** शुक्लैः शुद्धवर्णैः निजरश्मिस्थानीयैर्वा ईश्वरः **अदात्** लोकेषु प्रकाशितवान् । यद्वा— विभक्तिव्यत्ययः । शुद्धेभ्यः ऋषिभ्यः इममर्थं **अदात्** उपदिष्टवान् । यद्वा—दानस्य प्रशंसेयं क्रियते । ‘ यः ’ इत्यध्याहार्यम् । एवं कर्मवशेन अनियतसंसर्गिणां जीवानां मध्ये यो ददाति गोभूहिरण्यादिकं स शुद्धैः ऋषिभिः समेति । ततः तत्संसर्गेण विधूतपाप्मा भवतीति । वचनव्यत्ययो वा—ये अदात् अदुरिति ॥

रदात्पृभिभिः । [15]अपेत वीत वि च सर्पतातः । येऽत्र स्थ पुराणा ये च नूतनाः । अहोभिरद्भिर- क्तुभिर्व्यक्तम् ॥ ११७ ॥ यमो ददात्ववसानमस्मै । [16]नृ मुणन्तु नृ पात्वर्यः । अकृष्टा ये च कृष्टजाः ।

---

[15]अपेतेति ॥ त्रिष्टुप् । अपेत अपगच्छत अतः स्थानात् वीत विश्लिष्टा गच्छत । विसर्पत विविधमिष्टं देशं गच्छत । येऽत्र स्थाने उत्तरवेद्यां पुराणाः पूर्वमेव इदं स्थानं श्रिताः स्वामिनः ये च नूतनाः इदानींतनाः अस्वामिन एवाधितिष्ठन्ति इदं स्थानं ते सर्वेऽप्यपेतेति । ननु युक्तं अस्वामिनोऽपयन्तीति ; कस्य पुनर्हेतोः स्वामिनोऽप्यपयन्तीत्याह—अहोभिरिति । अहोभिः दिवसैः अक्तुभिः रात्रिभिश्च व्यक्तं दृढं वृष्ट्यादिद्वारेण अ- होरात्रैर्यागार्थं दृढं सम्पादितमिदं अवसानं स्थानं अस्मै यज- मानाय यष्टुकामाय ददातु प्रयच्छतु यमः सर्वस्य नियन्ता सर्वस्य स्वामी ईश्वरः स एव ददात्विति । अहरादिग्रहणं दान- पौष्कल्यख्यापनार्थं, योग्ये हि काले उदकपूर्वकं लोकप्रकाशं च कृतं दानं स्वत्वापादकमिति ॥

[16]नृ मुणन्त्विति ॥ ये परपीडादिना परभृत्यभावादिना जीवन्तो गर्हिताः पुरुषाः ते जातिमात्रान्वयवन्तो नृशब्देनोच्यन्ते । तत्रा- र्थवल्लक्षणविभक्त्युत्पत्त्यनादरेण—उत्पाद्या वा विभक्तिः तस्याः 'सुपां सुलुक्' इति लोपेन—तेषामवस्तुत्वं सूचयति । ते नराः मुणन्तु प्रतिजानन्तु—किम्?—अपेत वीतेति प्रकृतत्वात् अतः स्थानात् अपैतुम् । मुण प्रतिज्ञाने, तौदादिकः । तथा यः तेषां नृणां मध्ये अर्यः स्वामी सोऽपि पातु रक्षतु अस्मान् इतोपया-

कुमारीषु कनीनीषु । जारिणीषु च ये हिताः ।
[17] रेतःपीता आण्डपीताः । अङ्गारेषु च ये हुताः ।

नेन । यद्वा—तेषां अर्यः यो ना तद्वद्वस्तुभूतः सोप्यस्मान् पातु, तानेव वा निजभृत्यान् पातु तानपेतान् स्वयमप्यन्वेतु इति भावः। तथा ये अकृष्टाः अकर्मयोग्याः दुष्कुलप्रसूताः, ये च कृष्टजाः विशुद्धवंशजाताः, एवं स्वयमकर्मयोग्याः अन्धादयः पातकिनो वा, तेऽस्मात् स्थानात् अपयन्तु । तथा कुमारीषु कन्यासु ये हिताः निहिताः गर्भत्वेन स्थापिताः, ये च कनीनीषु निहिताः, कन्यावस्थायामेव प्रसूतपुत्राः कनीन्यः, तास्वपरिणीतासु ये गर्भत्वेन निहिताः, ये च जारिणीषु जारवतीषु निहिताः, चोरपतिः जारः । उपलक्षणत्वात् दुष्टक्षेत्रजाः ते सर्वेऽप्यस्मादुपधानस्थानात् अपयन्तु ॥

[17] रेतःपीता इति ॥ रेतः पीतं यैः ते रेतःपीताः । 'निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्' इति निष्ठायाः परनिपातः । 'जातिकालसुखादिभ्योऽनाच्छादनात्' इति प्राप्तमुत्तरपदान्तोदात्तत्वं व्यत्ययेन न प्रवर्तते । आण्डपीताः अण्डान्येवाण्डानि तानि द्रवीकृत्य यैः पीतानि । यद्वा—अण्डस्थमुदकमाण्डं तद्यैः पीतं ते आण्डपीताः । उपलक्षणत्वात् अभक्ष्यभक्षिणः सर्वेपि पुरुषाः स्त्रियो वा इतोऽपयन्तु । तथा अङ्गारेषु ये अन्यायेन हुताः पश्वादयः प्रमादाद्वा हुताः पिपीलिकादयः पिशाचादिभावेन जगति तिष्ठन्ति तेऽपि अस्मात् स्थानात् अपयन्तु । तथा उभयान् पुत्रपौत्रकान् पुत्रकान् पौत्रकांश्च श्रुतवृत्तहीनतया कुत्सितान् अहं युवे पृथक्करोमि अस्मा-

**उभयान्पुत्रपौत्रकान् । युवेऽहं यमराजगान् । [18]शतमिन्नु शरदः । [19]अदो यद्ब्रह्म विलबम् । पितृणां च यमस्य च । वरुणस्याश्विनोरग्नेः । मरुतां च**

---

त् स्थानात् अपनयामि । यौतिः पृथग्भावे । छन्दसि व्यत्ययेनात्मनेपादित्वात्, आदादिकत्वात् शपो लुक् । **यमराजगान्** यमेन यातयितुं योग्यान् ॥

[18]शतमिन्न्विति ॥ प्रतीकग्रहणमिदं शतमिन्नुशरद इत्यस्यास्त्रिष्टुभः । इयं च शाखान्तरीया वैश्वदेवकाण्डे ' योगेयोगे ' इत्यनुवाके आम्नाता* । अर्थस्तु—हे **देवाः** " शतायुः पुरुषः "† इति **शत**मपि **शरदः** संवत्सराः अस्माकं **अन्ति** आन्तिकस्थाः स्वल्पसङ्ख्या एव भवन्ति । **यत्र** आयुषि **नः** अस्माकं **तनूनां जरसं चक्र** कुरुथ तदपि स्वल्पं, जराहीनं न लभ्यत इति भावः । तदेव दर्शयति—**पुत्रा** एवास्य यत्र अस्य जीर्णदेहस्य **पितरः** पातारो भवन्ति तस्य स्वल्पस्यासारस्य च आयुषो गमनात् प्राप्तेः प्रागेवायुषो मध्यात् अस्मान् मा रिरीषत मामीमरत शतमन्यूनमेव दातव्यमिति ॥

[19]अदो यदिति ॥ **अदो** दृश्यमानं **विलबं** विविधं लम्बनीयं विविधं शब्दनीयं वा विविधं वा । लम्बयन्ते शब्दयन्ति यत्र तादृशं, विविधं लम्बनीयं वा शब्दभेदेन एकमेव वस्तु विकल्प्यत इति । ईदृशं **ब्रह्म यत् अदः** सर्वेषामेव पित्रादीनामपि विलबं पित्रादिविकल्पा अप्यस्यैवेति । लबिशब्दे, घञर्थे कः । यद्वा—यत्पूर्वोक्तं ब्रह्म तत्सर्वेषां पित्रादीनामपि वि-

---

*तै. मं. २-४. †सं. १-५-२.

**विहायसाम् । [20]कामप्रयवणं मे अस्तु । स ह्येवा-**

लबं विविधमवलम्बनम् । तदेव सर्वेऽप्यवलम्बन्ते । न तेन विना कस्यचित् कदाऽपि आत्मलाभ इति । **विहायसां** विहायसि स्थितानाम् । तात्स्थ्यात्ताच्छब्द्यम् ॥

[20]कामप्रयवणमिति ॥ इयमास्तारबृहती चतुष्पदा । कामाः प्रकर्षेण यूयन्ते प्राप्यन्ते येन तत् **कामप्रयवणम्** । यद्वा—यवनं पृथक्करणं तन्निवृत्तिः प्रायवणं प्रस्मरणप्रस्थानादिवत्, तेन कामाः प्राप्यन्ते येन तत् **कामप्रयवणम्** । ईदृशं **मे** मम **अस्तु** तद्ब्रह्म तत्प्रसादेन तस्येव ममापि कामाः प्रकर्षेण सङ्कल्पमात्र एव सम्पद्यन्ताम् । किं कारणमित्याह—उक्तेन गाथात्म्यज्ञानेन **स एव सनातनोऽस्मीति** ममेदं हृदयं ह्यविष्कृतं[1] तत्प्रसादेन तस्मादिति हिशब्दो हेतुभावमाचष्टे । यद्वा—कामप्रयवणमिति भावे ल्युट् । कामानां प्रकर्षेण सम्पत्तिः ममास्तु । स ह्येवास्मि सनातनः । तस्मात्तादृशेन मया किं दुष्प्रापमिति । यद्वा—कामानां प्रदातारः कामप्राः देवाः । प्रा पूरणे, आतोऽनुपर्गे कः । तैस्सह यवनं मिश्रणं कामप्रयवणं देवत्वप्राप्तिः ममास्तु । छान्दसं णत्वम् । स ह्येव सनातनोऽस्मि यस्सर्वदेवमयः **इति** अतो हेतोः मम **नाकः** स्वर्गः यत्र कं दुःखं नास्ति **ब्रह्मश्रवः** ब्रह्मशब्दवत् श्रवणं यस्य ब्रह्मेत्येवं यत् ब्रह्मशब्देनैव श्रूयते तच्च मम, **रायो** हिरण्यादयोऽपि मम सन्तु, **धनं** च मम धिनोतीति धनं स्त्र्यादि । एतत् पुरुषार्थचतुष्टयमपि मे सम्पन्नमिति । **तस्मात्** यूयमपि हे **आपः**! अभीष्टकाः! **देवीः** देवनशीलास्सत्यः **इह** अस्माकं कर्मणि **पुत्रान्** पश्वादीन् **आहित** आभिमुख्येन स्थापयत । दधातेः हिभावः शपो लुक्च छान्दसः । यद्वा—**हिनोतेः अन्तर्भा-**

[1]ममेदं ह्यद्याविष्कृतं.

स्मिं सनातनः। इति नाको ब्रह्म*श्रवो रायो धनम्। पुत्रानापो देवीरिहाहित†॥ ११८॥

पुरं नवद्वारा ब्रह्मा च व्यक्तः शरदोऽष्टौ च॥ २७॥

[1]विशीर्ष्णीं गृध्रशीर्ष्णीं च। अपेतो निर्ऋतिं हथः। परिबाधं श्वेतकुक्षम्। निजङ्घं शब-

---

वितण्यर्थस्य शपो लुक्। पुत्रादीनिह गमयेतेति। अत्राप इत्यस्य व्यत्ययेन आमन्त्रितनिघाताभावः। केचिदाहुः—पञ्चपदा पङ्क्तिरियम्। तत्रा 'आपो देवीरिहाहित' इति पञ्चमः पादः। तत्र पादादित्वान्निघाताभावे षाष्ठिकमान्त्रिताद्युदात्तत्वमिति॥

इत्यारण्यके प्रथमे सप्तविंशोनुवाकः.

---

[1]अथ द्वे उपदधाति—विशीर्ष्णीमिति॥ 'स तान्वाच्यायया' इति द्वितीया त्र्यवसाना। तत्र प्रथमाऽनुष्टुप्। द्वितीया षट्पदा जगती। विगतं शिरो यस्यास्सा **विशीर्ष्णी**। गृध्रशिर इव शिरो यस्यास्सा **गृध्रशीर्ष्णी**। 'अन उपधालोपिनः' इति ङीप्। विशीर्ष्णीनाम्नीं गृध्रशीर्ष्णीनाम्नीं च **निर्ऋतिं** अलक्ष्मीं **इतः** स्थानात् **अपहथः** अपजहि हे अग्ने!। व्यत्ययेन द्विवचनम्। तथा परिबाधादिनाम्नश्च निर्ऋतिपुरुषानपजहि परितो बाधनशीलः **परिबाधः** श्वेतः कुक्षिर्यस्य स **श्वेतकुक्षः**। अकारस्समासान्तः। न्यग्भूता जङ्घा यस्य **निजङ्घः**। शबलं शुक्लमिश्रमुदरं यस्य स **शबलोदरः**॥

---

*ब्राह्म. †हिता.

लोदरम् । [2]स तान् वाच्यायया सह । अग्ने नाशय संदृशः । ईर्ष्यासूये बुभुक्षाम् । मन्युं कृत्यां च दीधिरे । रथेन किꣳशुकावता । अग्ने नाशय संदृशः ॥ ११९ ॥

विशीर्ष्णीं दश ॥ २८ ॥

---

[2]स तानिति ॥ हे अग्ने! स त्वं तान् सर्वान् वाच्यायया सह नाशय । वाच्यान्यवद्यानि आत्मन इच्छतीति 'सुप आत्मनः क्यच्' 'अप्रत्ययात्' इत्यकारप्रत्ययः । वाच्याया वाच्यापादिनी काचिदलक्ष्मीः परिबाधादिसहचारिणी । अतः तान् सहैव नाशय । यद्वा—वाच्या नामालक्ष्मीः यद्योगात्पुरुषा अपि वाच्या भवन्ति, तां च नाशयेति सम्बध्यते । द्वितीयाया आकारः । कीदृशी सा?—यया सह परिबाधादयो वर्तन्त इति तान् सर्वान् संदृशः संदृष्टानेव नाशय सांदृष्टिकमेव तेषां नाशं कुरु । किञ्च—ईर्ष्यासूये ईर्ष्यामसूयां च बुभुक्षां मन्युं कृत्यां च परप्रयुक्तां ये दीधिरे दीपयन्ति । दीधीङो लिटि 'ईवर्णयोर्दीधीवेव्योः' इति लोपः । यद्वा—दधातेर्लिटि 'बहुलं छन्दसि' इत्यभ्यासस्येत्वम् 'तुजादीनां' इति दीर्घत्वम् । ये ईर्ष्यादीन् पुरुषेषु धारयन्ति स्थापयन्ति तानपि संदृशो नाशय रथेन किंशुकावता किंशुकवता चरत इति । 'मतौ बह्वचः' इति दीर्घत्वम् ॥

इत्यारण्यके प्रथमे अष्टाविंशोऽनुवाकः.

---

पर्जन्याय प्रगायत । दिवस्पुत्राय मीढुषे । स नो यवसमृ*च्छतु । [2]इदं वचः पर्जन्याय स्वराजे । हृदो अस्त्वन्तरं तद्युयोत । मयोभूर्वातो विश्वकृष्टयस्सन्त्वस्मे । सुपिप्पला ओषधीर्देवगोपाः ।

---

[1]अथ तिस्र उपदधाति—पर्जन्यायेति ॥ प्रथमतृतीये त्रिपदे गायत्र्यौ । द्वितीया त्रिष्टुप् चतुष्पदा । **पर्जन्याय प्रगायत** प्रकर्षेण शब्दयत स्तुतिं कुरुत । **दिवस्पुत्राय** तत्रोत्पन्नत्वात् । 'षष्ठ्याः पतिपुत्र' इति सत्वम् । **मीढुषे** सेचनसमर्थाय **स** च **नः** अस्माकं **यवसं** भक्ष्यं **ऋच्छतु** समर्पयत्विति ॥

[2]इदं वच इति ॥ **वचः** स्तुतिवाक्यं **पर्जन्याय स्वराजे** स्वायत्तदीप्तये अस्माभिः क्रियते । **इदं** च तस्य पर्जन्यस्य **हृदो** हृदयस्य **अन्तरं** अन्तरवस्थितमस्तु, हृद्यमस्तु तस्येति यावत् । यथा च **तत्** तथा भवति तथा **युयोत** मिश्रयत, हे ऋत्विग्यजमानाः! तस्य हृदये अवस्थितं कुरुत । यौतेः व्यत्ययेन शपः श्लुः । 'तप्तनप्तनथनाश्च' इति तबादेशः । ततश्च **मयोभूः** सर्वेषां सुखस्य भावयिता **वातोऽस्तु** । भवतेरन्तर्भावितण्यर्थात् क्विप् । तथा **विश्वकृष्टयः** सर्वे मनुष्याः **अस्मे** अस्माकं सम्बन्धिनः पुत्रपौत्रादयः मयोभुवः **सन्तु** । **ओषधीः** ओषधयश्च **सुपिप्पलाः** शोभनफलाः सन्तु **देवगोपाः** देवानां गोपयित्र्यः सन्तु यागसाधनेन । 'गतिकारकयोरपि' इत्यसुन् । वचनव्यत्ययेनैकवचनम् ॥

---

*समि.

[3]यो गर्भमोषधीनाम् । गवां कृणोत्यर्वताम् । पर्जन्यः पुरुषीणाम् ॥ १२० ॥

पर्जन्याय दश ॥ २१ ॥

[1]पुनर्मामैत्विन्द्रियम् । पुनरायुः पुनर्भगः । पु-

---

[3]यो गर्भमिति ॥ यो देवः **पर्जन्यः** ओषध्यादीनां **गर्भं** **कृणोति** करोति उत्पादयति तस्मै प्रगायतेति । **पुरुषीणां** मनुष्यस्त्रीणाम् । मनुष्यपर्यायोऽपि पुरुषशब्दोऽस्ति, तस्मात् पुंयोगलक्षणो ङीष् । **अर्वतां** अश्वानाम् ॥

इत्यारण्यके प्रथमे एकोनत्रिंशोनुवाकः.

---

[1]अथ तिस्र उपदधाति—पुनर्मामिति ॥ प्रथमतृतीये अनुष्टुभौ । द्वितीया संस्तारबृहती । **पुनर्मामिन्द्रियमैतु** यदन्यायेन सिक्तं रेतः तत्पुनरपि मामेवागच्छतु । तथा **आयुश्च** मां **पुनरैतु** यदाचारवर्जनादिना मत्तो विनिर्गतं तत्पुनरपि मामेवागच्छतु । **भगश्च** मामैतु **पुनः** या पापाभिभूतं मां विहाय गता श्रीस्सा मामेव पुनरैतु । **ब्राह्मणं** च **पुनर्मामैतु** ब्रह्मण इदं ब्राह्मणं ब्रह्मवर्चसम् । ' ब्राह्मोऽजातौ ' इति लोपो व्यत्ययेन न प्रवर्तते । असत्प्रतिग्रहादिना यन्मत्तोऽपगतं तत्पुनरपि प्राप्नोतु । **द्रविणं** बलं शक्तिः तच्च **पुनरैतु माम्** । कर्मलोपादिना या मत्तोपगता शक्तिः सा च पुनरागच्छतु ॥

नर्ब्राह्मणमैतु मा । पुनर्द्रविणमैतु मा । [2]यन्मेऽद्य रेतः पृथिवीमस्कान्त् । यदोषधीरप्यसरद्यदापः । इदं तत्पुनरादंदे । दीर्घायुत्वाय वर्चसे । [3]यन्मे रेतः प्रसिच्यते । यन्म आजायते पुनः । तेन माममृतं कुरु । तेन सुप्रजसं कुरु ॥ १२१ ॥

पुनर्द्वे च ॥ ३० ॥

---

[2]यन्मेऽद्येति ॥ **यन्मे** मम **रेतः अद्य** कर्मकाले अतः **पृथिवीमस्कान्** स्कन्नम् । स्कन्देर्लुङि 'वदव्रज' इति वृद्धौ इतो लोपः । 'बहुलं छन्दसि' इति ईडभावे हल्ङ्यादिसंयोगान्तलोपौ । **यच्च** रेतः स्कन्नं **ओषधीरप्यसरत्** अपिसंसृष्टं ओषधीषु संसृज्यावस्थितं **यच्चापोऽ**प्यसरत् अप्सु संसृज्य स्थितम् । विभक्तिव्यत्ययेन प्रथमा । **तदिद**महं **पुनरादंदे** अनेनोपधानेन **दीर्घायुत्वाय** मम दीर्घायुष्ट्वाय । छान्दसो वर्णलोपः । तथा **वर्चसे** बलाय तेजसे वा ॥

[3]यन्मे रेत इति ॥ **यन्मे रेतः प्रसिच्यते** प्रशस्तं सिच्यते ऋतौ स्वदारेषु **यच्च** मम तथा सिक्तं रेतः **पुनराजायते** आभिमुख्येन प्रजात्वेनोत्पद्यते **तेन** शोभनपरिणामेन रेतसा **माममृतं** अमरणधर्माणं **कुरु** हे अग्ने! । तथा **तेन** मां **सुप्रजसं** शोभनापत्यमेव **कुरु**, निन्दितापत्यो मा भूवं त्वत्प्रसादेन । 'नित्यमसिच् प्रजामेधयोः' इत्यसिच् समासान्तः ॥

इत्यारण्यके प्रथमे त्रिंशोनुवाकः.

---

[1]अद्भ्यस्तिरोधा जायत । तव वैश्रवणस्सदा । तिरोधेहि सपत्नान्नः । ये अपोऽश्नन्ति केचन । [2]त्वाष्ट्रीं मायां वैश्रवणः । रथꣳ सहस्रवन्धुं*रम् ।

[1]अथ वैश्रवणयज्ञमन्त्राः—तत्र 'अद्भ्यः' इति चतसृभिः वैश्रवणमावाहयति ॥ सर्वा अनुष्टुभः । तृतीया त्रिष्टुप् । अद्भ्यः अपां कर्मणाम् । कर्मणस्सम्प्रदानत्वात् चतुर्थी । अपां तिरोधाः तिरोधाता छादकः । 'आतो मनिन्' इति विच्, कृदुत्तरपदप्रकृतिस्वरेण उत्तरपदान्तोदात्तत्वम् । जायत अजायत । 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । अनादिर्वैश्रवण आमन्त्र्यते कुबेरः । हे कुबेर ! त्वया निगृहीतो[1] यो वैश्रवणः विश्रवसोऽपत्यम् । शिवाद्यणन्तः । स खलु तव अद्भ्यः तिरोधा जायते । तव कर्मणां तिरोधायक आसीदिति हेतुना तं तिरोहितवानसि त्वं अतोऽस्माकमपि सपत्नान् शत्रून् तिरोधेहि नाशय । तिरश्शब्दे निपातत्वादाद्युदात्तः । ये नाम केचन अस्माकमपः कर्माणि अश्नन्ति तिरोदधति नाशयन्ति तेऽपि सर्वे त्वया निगृहीतव्याः । तदर्थं इमं अस्मद्यज्ञं आगच्छेति ॥

[2]त्वाष्ट्रीमिति ॥ त्वष्ट्रा निर्मितां मायाम् । अद्भुतत्वात् रथो मायेत्युच्यते । बहुमायत्वाद्वा । तादृशं रथमास्थाय । पुनश्च विशेष्यते—सहस्रबन्धुरं सहस्रवन्धुरं अराणां सहस्रं यस्मिन्नस्ति तच्चक्रं सहस्रम् । मत्वर्थीयोकारः । तादृशचक्रवती धूर्यस्य रथस्य स सहस्रवन्धुरः । वर्णव्यत्ययेन मतुप्सकारस्य नकारः ।

[1]निहितो.

*बन्धु.

**पुरु*श्चक्रं᳚ सहस्राश्वम् । आस्थायायाहि नो बलिम् । [3]यस्मै भूतानि बलिमावहन्ति । धनं गावो हस्ति हिरण्यमश्वान् ॥ १२२ ॥ असाम सुमतौ यज्ञियस्य । श्रियं बिभ्रतोऽन्नमुखीं विराजम् ।**

---

यद्वा—'छन्दसीवनिपौ' इति वनिप्प्रत्ययः, तलोपाभावः छान्दसः, नकारोपजनो वा व्यत्ययः । एवं ह्यन्तोदात्तत्वं उपपन्नं भवति । **पुरुश्चक्रं** बहुचक्रम् । त्रिचक्रादित्वात् उत्तरपदान्तोदात्तत्वम् । **सहस्राश्वं** गतम् । ईदृशं रथं **आस्थाय** अस्माकं **बलिं** प्रतिष्ठाहेतुं पूजा**मायाहि** आगच्छ वैश्रवण त्वम् ॥

[3]यस्मा इति ॥ **यस्मै** सर्वाणि **भूतानि बलिं** पूजां धनादिरूपां **आवहन्ति** उपहरन्ति **धनं** प्रीणनं[1] वस्त्रादि रत्नादि वा । **गावः** गाः । विभक्तिव्यत्ययः । कश्चिदाह—काः ? गाश्च वासश्चेति । वस्तेः क्विप् । स्वरस्तु नोपपद्यते । व्यत्ययो वाऽनुदात्तत्वम् । **हस्ति** हस्तिसंज्ञं वस्तु **हिरण्यं अश्वान्** गतम् । तस्य **यज्ञियस्य** यज्ञार्हस्य वैश्रवणस्य **सुमतौ** कल्याणमनने अनुग्रहबुद्धौ **असाम** भूयास्म । उत्तमस्य पित्त्वाद्धातुस्वरः । पादादित्वान्न निहन्यते । 'नञ् सुभ्याम्' इति सुमतिशब्दोन्तोदात्तः । 'यज्ञर्त्विग्भ्यां घखञौ' इति घः । पुनश्च विशेष्यते वैश्रवणः—**श्रियं बिभ्रतः अन्नमुखीं** अन्नप्रधानाम् । छान्दसः स्त्रीप्रत्ययः । **विराजं** विविधं राजमानां अस्मान् शीघ्रमायाहीति ॥

---

*पुर.

[1]कामप्रीणनं.

**[4]सुदर्शने च क्रौञ्चे च । मैनागे च महागिरौ । शत* द्वाट्टारगमन्ता । संहार्यं नगरं तव । [5]इति मन्त्राः । कल्पोऽत ऊर्ध्वम् । यदि बलिं हरेत् । हिरण्यनाभये वितुदये कौबेरायायं बलिः ॥१२३॥**

[4]सुदर्शन इति ॥ सुदर्शनादयः पर्वताः । शोभनदर्शनः सुदर्शनः । क्रौञ्चाकृतिः क्रौञ्चः । मेनकाया अपत्यं मैनागः । वर्णव्यत्ययेन गकारः । महान् गिरिः महागिरिः सुदर्शनादीनां विशेषणम् । ‘महान् व्रीह्यपराह्ण’ इति व्रीह्यादिग्रहणस्य उपलक्षणत्वात् छान्दसं पूर्वपदप्रकृतिस्वरत्वम् । तेषु सुदर्शनादिषु यत् **तव नगरं शतद्वाट्टारगमन्ता** शतद्वाट्टारगमन्तं द्वारः द्वाराणि अट्टाराः कक्ष्याविशेषाः गमन्ताः रथ्याः । गमेरौणादिको झच् वसन्तादिवत् । शतं द्वारादीनि यस्मिन् तत् शतद्वाट्टारगमन्ता । ‘सुपां सुलुक्’ इत्याकारः, छान्दसं त्र्युदात्तत्वम्[1] । तादृशं तन्नगरं इदानीं **संहार्यं** उपसंहृतव्यापारं कार्यम् । शीघ्रमिहागन्तव्यमिति भावः । इह हि त्वय्यागते तत्र द्वाराणि पिधीयन्ते अट्टाराश्च निषिध्यन्ते रथ्याश्च निवृत्तजनसंचारा भवन्ति ॥

[5]अतः परं ब्राह्मणम् ॥ **इति मन्त्राः** आवाहनमन्त्रा उक्ताः । **अत ऊर्ध्वं** वैश्रवणयज्ञस्य **कल्पः** प्रयोग उच्यते । **यदि बलिं हरेत्** । अनग्नौ बलिहरणस्य पाक्षिकत्वं वक्ष्यति । तस्मिन् पक्षे ‘हिरण्यनाभये’ इति बलिं दद्यात् । हिरण्यस्य नाभिः नहनं[2] हिरण्यनाभिः हिरण्यं सर्वमस्मिन् नद्धमिति । ‘समासस्य’

[1]द्व्युदात्तत्वं.　　　　*सत.　　　　[2]नहनः.

सर्वभूताधिपतये नम इति । अथ बलिꣳ हृत्वोपतिष्ठेत । क्षत्त्रं क्षत्त्रं वैश्रवणः । ब्राह्मणा वयꣴ स्मः । नमस्ते अस्तु मा मा हिꣳसीः । अस्मात्प्रविश्यान्नमद्धीति । [6]अथ तमग्निमादधीत । यस्मिन्नेतत्कर्म

---

इत्यन्तोदात्तत्वम् । विविधं तुदतीति वितुदिः शत्रूणाम् । 'इक्कृष्यादिभ्यः' इतीक्प्रत्ययः । यद्वा—सर्वानपि प्राणिनो हिरण्यं दुर्लभं कुर्वन् वितुदतीति वितुदिः गुह्यकाधिपतिः । **कौवेराय** कुबेरपुत्राय । शिवाद्यणन्तो द्रष्टव्यः । **अयं बलिः** उपह्रियते । सः इमं बलिं गृह्णातु । तस्मै **सर्वभूताधिपतये** अधिकं पालयित्रे **नमः** सर्वभूतानां यक्षगुह्यकानां वा स्वामिने नमः । **अथ** एवं **बलिं हृत्वोपतिष्ठेत** 'क्षत्रं' इति मन्त्रेण । अनुष्टुप्प्रकारोऽयम् । 'उपान्मन्त्रकरणे' इत्यात्मनेपदम् । क्षतात्त्रायते यत् तत् **क्षत्त्रं** तादृक्स्वभावं क्षत्त्रं क्षात्त्रियोनाम **वैश्रवणः वयं** च **ब्राह्मणास्स्मः** । ब्रह्मक्षत्त्रे च परस्पररक्षिते । अतो **नमः ते अस्तु मा मा हिंसीः** । गतम् । **अस्मात्** कारणात् इमं बलिमनु**प्रविश्य** एतत् **अन्नं अद्धि** भक्षय । एतदुक्तं भवति—यस्मादावां ब्रह्मक्षत्त्रे यस्माच्चाहं नमस्करोमि यस्माच्चाहिंस्योऽहं अस्मात्कारणात् उच्यसे प्रविश्य अन्नमद्धीति । अतः सोढव्यो नियोगार्थ इति ॥

[6]**अथ तमग्निं आदधीत** स्थापयेत् **यस्मिन्** अग्नौ **एतत्** बलिहरणाख्यं **कर्म प्रयुञ्जीत** । तस्यायं मन्त्रः—**तिरोऽधा भूः** इत्यादिः । **तिरः अधाः** धेहि । छान्दसो लुङ् । **भूः भूत्वा**

**प्रयुञ्जीत । तिरोऽधा भूः । तिरोऽधा भुवः॥१२४॥ तिरोऽधास्स्वः। तिरोऽधा भूर्भुवस्स्वः । सर्वेषां लोकानामाधिपत्ये सीदेति । [7]अथ तमग्निमिन्धीत । यस्मिन्नेतत्कर्म प्रयुञ्जीत । तिरोऽधा भूस्स्वाहा ।**

सर्वाणि भूतजातानि स्वमहिम्ना छादय । यद्वा—भूर्लोकं स्वतेजसा तिरोधेहि । एवं उत्तरे पर्याये गताः । तथा च कुर्वन् **सर्वेषां लोकानां आधिपत्ये सीद** वर्तस्वेति । यद्वा—तदर्थं **सर्वेषां लोकानां आधिपत्ये** अधिपतावस्मिन्नग्नौ **सीद** । अत्र तिरोधेहि च सर्वेषां लोकानामाधिपत्ये सीद च इति चार्थस्य विद्यमानत्वात् । 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । तेनाडागम उदात्तः ॥

[7]**अथ** आधानानन्तरं **तमग्निमिन्धीत** उद्दीपयेत् तिरोऽधा भूस्स्वाहा इत्यादिभिर्मन्त्रैः । ते च गताः । **यस्मिन् काले अस्य** आरुणकेतुकस्याग्नेरङ्गभूताः **सर्वा** आहुतयो **हुता भवेयुः अपि ब्राह्मणमुखीनाः** ब्राह्मणं मुखमुपायो यासां ताः ब्राह्मणमुखीनाः । स्वार्थिकः खः । 'रुद्रो वा एष यदग्निस्स एतर्हि जातः'* इत्यादिब्राह्मणप्रापिताश्शतरुद्रादयो[1] **ब्राह्मणमुखीनाः अपि यस्मिन्** काले हुता भवेयुः[2] **तस्मिन् काले अह्नः** सम्बन्धिनि एतद्वालिकर्म **प्रयुञ्जीत** । अथ कालान्तरं विधीयते—**परस्सुप्तजनाद्वेपीति** ॥ सुप्ता जना[3] यस्मिन् काले स सुप्तजनः तस्मात् **परः**

*सं. ५-४-३.    [1]रुद्रादयो.    [2]भवेयुस्तानपि

[3]......परस्सुप्तजनाद्वेपीति ॥ सुप्तजनाद्वाऽपीत्यर्थः. वर्णव्यत्ययेन ईकारः । अथवा परस्सुप्तजनं कालं प्राण इदं बालिकर्म प्रयुंजीत । सुप्ता जना.

ति॒रोऽधा॒ भुव॒स्स्वाहा॑ । ति॒रोऽधा॒स्स्व॑स्स्वाहा॑ । ति॒रो-ऽधा॒ भूर्भुव॒स्स्व॑स्स्वाहा॑ । यस्मि॑न्नस्य का॒ले सर्वा॑ आहु॑तीर् हु॒ता॑ भवे॒युः ॥ १२५ ॥ अपि॑ ब्राह्मणमु॒-खी॒नाः । तस्मि॑न्नह्नः का॒ले प्र॑यु॒ञ्जीत । पर॑स्सु॒प्तज॑-ना॒द्वे॒पि । मा स्म॒ प्रमा॒द्यन्त॑मा॒ध्या॒पये॑त् । सर्वा॑-र्थी॑स्सिद्ध्य॒न्ते॒ । य ए॒वं वे॒द । क्षुध्य॑न्नि॒दम॒ज्ञान॑ताम् । सर्वा॑र्थाः न॑ सि॒द्ध्य॒न्ते॒ । [8]यस्ते॒ वि॒घा॒तु॑को॒ भ्रा॒ता । म॒मान्त॑र्हृ॒द॑ये॒ श्रि॒तः ॥ १२६ ॥ तस्मा॑ इ॒मम॒ग्र*-

परस्सुप्तजनः । पारस्करादित्वात् सुट्, पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं च । ततो ल्यब्लोपे पञ्चमी । अन्य आह—वेपनमस्यास्तीति **वेपि** इदं बलिकर्म अतिपन्नं चेत् वेपनकर्म भवति । तस्मात् परस्सुप्तजनात् कुर्यात् शीघ्रं कुर्यादिति यावत् । इदं बलिकर्म **प्रमाद्यन्तं** अवधानहीनं न आध्यापयेत् सुवृत्तमेव ग्राहयेत् । अथ **य एवं** एतत् बलिकर्म वेद तस्य **सर्वार्थाः** सर्वेऽप्याभिमता अर्थाः **सिध्यन्ते** स्वयमेवाचिरात् सम्पद्यन्ते । अन्तर्भावितण्यर्थस्य कर्मकर्तर्यात्मनेपदम् । अथ **इदं** बलिकर्म **अजानतां** अविदुषां सम्बन्धिनः पुत्रादयः सर्वेऽपि क्षुध्यन्ति । यद्वा—इदमजानतां अत एव क्षुध्यन् क्षुध्यताम् । विभक्तिव्यत्ययः । एतदज्ञानेन क्षुधा पीडितानां सर्वेऽपि पुरुषार्था न **सिध्यन्ते** ॥

[8]अथ बलिहरणमन्त्राः—यस्ते विघातुक इति ॥ इयं चास्तारपङ्क्तिः । **यस्ते** तव **भ्राता** **विघातुकः** सर्वेषां हिरण्यलाभवि-

*मंग्र.

पिण्डं जुहोमि । स मेऽर्थान्मा विवधीत् । मयि स्वाहा । [9]राजाधिराजाय प्रसह्यसाहिने । नमो वयं वैश्रवणाय कुर्महे । स मे कामान्कामकामा-

घ्नकरणशीलः ममान्तर्हृदये ध्येयत्वेन श्रितः तस्मै इममग्रपिण्डं प्रथमपिण्डं प्रधानापिण्डं वा जुहोमि । अतः सभे अर्थान् अभिमतान् पुरुषार्थान् प्रयोजनानि वा मा विवधीत मा तेषां विघातुकोभूत् । अपि तु तान् मयि किं? सामर्थ्यात् अभिमतत्वाच्च दधातु । स्वाहेति प्रदानार्थः ॥

[9]अथोपस्थानमन्त्राः—राजाधिराजायेत्यादि ॥ इयं तु जगती । राज्ञामप्यधिराजो राजाधिराजः सर्वेभ्यो राजभ्योऽधिकं राजत इति । प्रसह्यसाहिने प्रसह्य सर्वानर्थान् साधयितुं यस्सहते अभिभवति वा तस्मै वैश्रवणाय वयं नमस्कुर्महे । स च वैश्रवणः कामकामाय काम्यानर्थान् हिरण्यादीन् कामयमानाय मह्यं कामान् ददातु काम्यानर्थान् प्रयच्छतु । कस्य काम्यान्? मे मम कामान् मया ये काम्यन्ते तानेव ददातु । अत्र यदि मे कामानिति न विशिंष्यात् तदा अन्यकामान् अनिष्टफलानप्यस्मै दद्यात् । अथ यदि मह्यमिति न ब्रूयात् एतदीयान् कामान् कस्मैचित्कामकामाय दद्यात् । कामकामायेति इदानीं किमर्थं? शीघ्रप्रदानार्थं; यदा कामान् कामये इदानीमेव ददात्विति । इतरथा इतरान्प्रति एतदीयान् कामान् अस्मा एव कदाचिद्दद्यात् । 'शीलिकामि' इत्यादिना णः; पूर्वपदप्रकृतिस्वरत्वं बाधित्वा पूर्वोत्तरपदयोर्युगपदाद्युदात्तत्वं छान्दसम् । कामानां काम्यानां हिरण्या-

य मह्यम् । कामेश्वरो वैश्रवणो ददातु । कुबेराय वैश्रवणाय । महाराजाय नमः । [10]केतवो अरुणासश्च । ऋषयो वातरशनाः । प्रतिष्ठाꣳ शतधा हि । समाहितासोऽसहस्रधायसम् । शिवा नश्शन्तमा भवन्तु । दिव्या आप ओषधयः । सुमृडीका सरस्वति । मा ते व्योम संदृशि ॥ १२७ ॥

अश्वान्बलिर्भुवो भवेयुश्श्रितश्च सप्त च ॥३१॥

दिधनानामीश्वरस्स्वामी । यद्वा—कामानामिच्छानामीश्वरः यथाकामं निर्वर्तयितुं क्षमः । केचिदाहुः—यथायथा कामयन्ते पुरुषाः सोऽर्थस्तथातथा सम्पद्यत एव । तस्य गृहीता[1] वैश्रवणः ईश्वरेण कृतः (?) । अतोऽसौ कामेश्वरः । स त्वनेन बलिकर्मणा आराधितः कामकामायैव कामान् प्रयच्छतीति । महाराजवेषो महाराजः दर्शनीयविग्रह इति । पदत्रयमप्यन्तोदात्तम् ॥

[10]केतवो अरुणासश्चेत्यादिरुपस्थानविशेषो व्याख्यातः* । सूत्रकारेण त्वन्यथा प्रयोग उक्तः । स इह ब्राह्मणविरोधाच्चिन्त्य इति नोक्तः । इदं च कर्मान्तरमारुणकेतुके व्याख्यातम् । तदन्यत्रापि ब्राह्मणोक्तं कर्तव्यम्; यथाऽग्निहोत्रादिष्ववीष्टकोपधानम् ॥

इत्यारण्यके प्रथमे एकत्रिंशोऽनुवाकः.

---

[1]तस्यागृहीता तस्य तु गृहीता. *आ. १—१.

[1]संवत्सरमेतद्व्रतं चरेत् । द्वौ वा मासौ । नियमस्समासेन । तस्मिन्नियमविशेषाः । त्रिषवणमुदकोपस्पर्शी । चतुर्थकालपानभक्तस्स्यात् । अहरहर्वा भैक्षमश्नीयात् । औदुम्बरीभिस्समिद्भिरग्निं परिचरेत् । पुनर्मामैत्विन्द्रियमित्येतेनानुवाकेन । उद्धृतपरिपूताभिरद्भिः कार्यं कुर्वीत ॥ १२८ ॥ अं-

---

[1]संवत्सरमेतदित्यादि ॥ **एतत्** वक्ष्यमाणं **व्रतं** नियमरूपं **संवत्सरं चरेत्** । संवत्सरे **द्वौ वा मासौ** । तुल्यत्वाद्विकल्पः । 'आरुणकेतुकं चेष्यमाणस्य पुरस्तादेतद्व्रतं विधीयते । स्वाध्यायेऽपि' इति सूत्रकारवचनात् अध्येष्यमाणानामपि भवति । अथ तद्व्रतस्वरूपमाह—नियमस्समासेनेति । **नियमः** कर्तव्यः नियतो वर्तेत इति **समासेन** संक्षेपेण समुदायरूपेण व्रतस्वरूपं जानीयात् । अथ **तस्मिन्** नियमसामान्ये **नियमविशेषाः** वक्ष्यमाणा ज्ञातव्याः । सामान्येन प्रतिज्ञातस्य नियमस्य 'को नियमः कथंलक्षणः' इत्याद्यपेक्षायां 'त्रिषवणं' इत्यादिना तत्प्रकारविशेषा उच्यन्त इति । यथा—'अथातो धर्मजिज्ञासा' इति सामान्येन धर्मो जिज्ञास्य इति प्रतिज्ञाय 'को धर्मः कथंलक्षणः' इत्याद्यपेक्षायां 'चोदनालक्षणोऽर्थः' इत्यादिना धर्मस्वरूपादिकं प्रतिपाद्यते; एवमिदं द्रष्टव्यम् । **त्रिषवणं** सवनत्रयेऽपि उदकोपस्पर्शी स्यात् । सूयतेऽस्मिन् सोम इति सवनम् । त्रयाणां सवनानां प्रातस्सवनादीनां समाहारः त्रिषवणम् । उदकोपस्पर्शनं स्नानम् । **चतुर्थकालपानभक्तस्स्यात्** यस्मिन् काले क्षीरादि पिबति भक्तं चाश्नाति ततश्चतुर्थे काले पानं भक्तं च यस्य स

**सं॒च॒यवा॑न् । अ॒ग्नये॑ वा॒यवे॒ सूर्या॑य । ब्रह्म॑णे प्र॒जा-प॑तये । च॒न्द्रम॑से नक्ष॑त्रेभ्यः । ऋ॒तुभ्य॑स्संवत्स॒रा-य । वरु॑णायारु॒णायेति॑ व्र॒तहो॑माः । प्र॒वर्ग्य॑वदा॒देशः॑। अरु॑णाः का॒ण्डऋ॑षयः । अर॑ण्ये॒ऽधीयी॑रन्न् । भ॒द्रं क-र्णे॑भि॒रिति॒ द्वे॑ ज॒पि॒त्वा ॥ १२९ ॥ महाना॒म्नीभि॑रु-द॒कꣳ सꣳ॒स्पृ॒श्य॑ । तमा॒चार्यो॑ द॒द्यात् । शि॒वा न-**

चतुर्थकालपानभक्तः । पीयत इति पानं क्षीरादि । भक्तमन्नम् । यस्य यद्विहितं तस्य तच्चतुर्थे काले भवति । यथा—आद्ये अह्नि भुक्त्वा उत्तरेद्युर्नक्तं भुञ्जीत । ततस्तृतीयमहोरात्रं लङ्घयित्वा चतुर्थस्याह्नि भुञ्जीतेत्यादि । अहरहर्वेति विकल्पः । भिक्षाणां समूहो भैक्षम् । **औदुम्बरीभिः** उदुम्बरावयवैः । 'अनुदात्तादेश्च' इत्यञ् । **समिद्भिः** प्रादेशमात्राभिः शुष्काभिः **अग्निं परिचरेत्** । **पुनर्मा मैत्विन्द्रियमित्येतेनानुवाकेन** । स च पूर्वत्र व्याख्यातः* । उद्धृताश्च परिपूताश्च वस्त्रादिना उद्धृतपरिपूताः । 'पूर्वकालैक' इति समासः । ताभिः **अद्भिः कार्यं** आचमानादिकं **कुर्वीत** । स्नानं च अवगाह्यैव । **असंचयवान्** भैक्षपक्षादन्यत्र पानादिसाधनस्य सङ्ग्रहवान्न स्यात् । असमर्थसमासः । 'अग्नये स्वाहा' इत्यादिभिः स्वाहाकारान्तैः मन्त्रैः व्रतहोमाः कर्तव्याः, होमा इति वचनात् 'जुहोतिचोदनस्स्वाहाकारप्रदानः'† इति । व्रतग्रहणं यावद्व्रतसमाप्ति होतव्या इति सूचनार्थम् । **प्रवर्ग्यवदादेशः** विधिस्स्यात् प्रवर्ग्यकार्याण्यत्र प्राप्यन्ते । यथा 'मदन्तीरुपस्पृश्य शान्तिं कृत्वा'§ इत्येवमादीनि । **अरुणाः**

*आ. १—३०. §आप. श्रौ. १५-५-४. †आप. प. ३-४.

श्शान्तमेत्योषधीराल॒भते । सुमृडीकेति भूमिम् । एवमंपव॒र्गे । धेनुर्द॒क्षिणा । क॒ꣳसं वासंश्च क्षौममम् । अन्यंद्वा शुक्लम् । यंथाश॒क्ति वा । एवꣳ स्वाध्यायंधर्मे॒ण । अरण्यें ऽधीयी॒त । तपस्वी पुण्यो भवति तपस्वी पुंण्यो भ॒वति ॥ १३० ॥

कु॒र्वीत जंपि॒त्वा स्वाध्यायंधर्मे॒ण द्वे चं ॥३२॥

---

काण्डऋषयः अरुणनामानः आरुणकेतुककाण्डस्य ऋषयः । तेन एभ्योऽपि व्रतहोमाः कर्तव्या इत्युक्तं भवति । तत्र 'प्रवर्ग्यवदादेशः' इति वचनात् प्रथमं काण्डमुपाकृत्य अनन्तरं 'उपाकरणे समापने च ऋषिर्यः प्रज्ञायते । सदसस्पतिर्द्वितीयः '* इति 'अरुणेभ्यस्स्वाहा' इति हुत्वा ततोऽग्न्यादिभ्यो हुत्वा 'अग्ने व्रतपते आरुणकेतुकव्रतं चरिष्यामि' इत्यादि कुर्यात् । उक्तं च—

काण्डोपाकरणेष्वेतान् पुरस्तात् सदसस्पतेः ।
जुहुयात्काण्डसमाप्तौ च श्रुतिरेषा सनातनी ॥ † इति

अरण्येऽधीयीरन् अरण्यमध्ये इत्यर्थः । भद्रं कर्णेभिरिति द्वे शान्त्यर्थं जपित्वा महानाम्नीभिः 'आपमापां'§ इत्यादिभिः उदकं मदन्तीं संस्पृश्य तं ब्रह्मचारिणा संस्पर्शयित्वा तं ब्रह्मचारिणे आचार्यो[1] दद्यात् व्रते नियुञ्जीत व्रतं कारयेदिति यावत् । चेष्यमाणस्य तु अध्वर्युः कारयेत् । शिवा नश्शन्त-

---

§आ. १-१. *आप. गृ. ८-१-२. †काण्डानु. [1]आचार्ये.

[1]भद्रꣳ स्मृतिस्साकंजानामक्ष्यतिताम्राण्यंत्यू-र्ध्वाक्ष आरोगः क्वेदमग्निश्च सहस्रवृत्पवित्रंवन्त आतंनुष्वाष्टयोनीं योसावथादित्यस्यारोगस्याथ वा-योरथाग्नेर्दक्षिणपूर्वस्याभिंन्द्रघोषा व आपंमापां योपामापो वै चतुष्टय्यो जानुदघ्नीमग्निं प्रणीये-मानुकं विशीर्ष्णीं पर्जन्याय पुनरब्ध्यस्संवत्सरं द्वा-त्रिꣳशत् ॥ ३२ ॥

भद्रं ज्योतिषा तस्मिन्राजानं कश्यपात्सहस्र-वृदियं नपुꣳसकमष्टयोनीमवपतन्तानामायतन-वान्भवति सतो बन्धुं ता उत्तरतो वज्रमेव पुनर्मामैतु त्रिꣳशदुत्तरशतम् ॥ १३० ॥

---

मेसोषधीः फलपाकान्ताः आलभते स्पृशति । सुमृडीकेति भूमिं आलभत इत्येव । एवमपवर्गे अपि कर्तव्यम् । फलप्राप्तौ अध्ययनक्रियासमाप्तिः अपवर्गः । धेनुर्दक्षिणा देया । कंसं भोजनपात्रं वासश्च क्षौमं क्षुमा अतसी तस्याः विकारः क्षौमम्। अन्यद्वा शुक्लं कार्पासविकारादि यथाशक्ति वा देयम् । अशक्तौ न धेन्वादिनिर्बन्धः । एवं उक्तप्रकारेण स्वाध्यायधर्मेण प्रवर्ग्यं मदन्तीः महानाम्नीभिः उपस्पृश्येत्यादिकमावर्त्यावर्त्य अरण्येऽधीयीत। यत् 'अरण्येऽधीयीत' इत्युक्तं तदेवं विशिष्टं कुर्यादिति । एवमधीयानः

भद्रं कर्णेभिश्शृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥

ओं शान्तिश्शान्तिश्शान्तिः ॥

हरिः ओं श्रीकृष्णार्पणमस्तु

तैत्तिरीयारण्यके

प्रथमः प्रपाठकस्समाप्तः.

---

**तपस्वी** भवति **पुण्यः** च भवति । तपस्वी स्वाध्यायवान् ' तपो हि स्वाध्यायः '* इति ब्राह्मणम्[1] । पुण्यस्सुकृती । अभ्यासो मङ्गलार्थः, मङ्गलान्तानि हि ब्राह्मणान्यध्येतॄणां पापक्षपणार्थानि भवन्तीति ॥

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये तैत्तिरीयारण्यकतन्त्रे आरुणकेतुके प्रथमप्रपाठके द्वात्रिंशोऽनुवाकः

प्रपाठकश्च समाप्तः.

---

*आ. २-१४. [1]इति श्रुतेः.

## अथ द्वितीयः प्रपाठकः.

हरिः ओं ॥ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥

ओं शान्तिश्शान्तिश्शान्तिः.

ओम् ॥ [1]सह वै देवानां चासुराणां च यज्ञौ प्रततावास्तां वयꣳ स्वर्गं लोकमेष्यामो व-

---

अथ स्वाध्यायब्राह्मणं काठकशेषमारभ्यते । उक्तं च—

स्वाध्यायब्राह्मणं काण्डं काठके पठितो विधिः । [1]इति ।

ऋषिर्ब्रह्मा स्वयंभूर्नाम । तत्र "स्वाध्यायोऽध्येतव्यः"[2] इत्यादौ यज्ञोपवीतविधानार्थोऽयमनुवाकः [दः] । एतेनैव सिद्धे "निवीतं मनुष्याणां"[3] इत्यादिविधानं तद्रूपे श्रौतप्रायश्चित्तार्थम् ।

[1]सह वा इति ॥ सह वै यज्ञौ प्रततौ आरब्धौ आस्तां देवानामसुराणां च वयं स्वर्गं लोकं स्वामित्वेन एष्याम इति कृत्वा । यदा देवानां प्रवृत्तिरासीत् तदा असुराणामपि वयं स्वर्गं लोकमेष्याम इत्यासीत् । एवमन्योन्याभिभवेनैव यज्ञौ युगपदास्ताम् । तत्र तेऽसुराः सन्नह्य कृतोत्साहाः कृतसन्नाहाः सहसा भुजबलमात्रेणैव आचरन् यागमारब्धवन्तः । ते देवाः तु ब्रह्मचर्यात्मना तपसा इत्थंभूता एव यथोक्तं यज्ञमाचरन् । ब्रह्म व्रतं शास्त्रीयो नियमः यज्ञोपवीती-

---

[1]काण्डानुक्रमणिकायाम्. [2]तै. आ. २-१५. [3]तै. सं. २-५-११.

**यमेष्याम इति तेऽसुरास्संनह्य सहसैवाचरन्ब्रह्म-चर्येण तपसैव देवास्तेऽसुरा अमुह्यꣳस्ते न प्राजा-नꣳस्ते पराऽभवन्ते न स्वर्गं लोकमायन्[2]प्रसृतेन वै यज्ञेन देवास्स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराऽभा-वयन्[3]प्रसृतो ह वै यज्ञोपवीतिनो यज्ञोऽप्रसृतोऽनुप-वीतिनो यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत**

---

त्यादि, तस्य चरणं ब्रह्मचर्यम् । 'गदमदचरयमश्चानुपसर्गे' इति यत् । ततः ते **असुराः** अयथोक्तमाचरन्तो **अमुह्यन्** वैचित्यमगमन् । मुह वैचित्ये । ततो न किंचित् कर्तव्याकर्तव्यं **अजानन्** । ततश्चैव ते **पराभवन्** विनष्टा अभवन्, प्रारब्धकर्मफलालाभो विनाशः । ततः ते **स्वर्गं लोकं नायन्** न गताः । अय गतौ ॥

[2]अथ कीदृशः पुनस्स यज्ञः येन देवास्स्वर्गं लोकमायन् यद्राहिताश्चासुराः पराभवन्? अत्राह—**प्रसृतेनेति** ॥ **प्रसृतेन** प्रकृष्टसरणेन प्रशस्तगमनेन **यज्ञेन** इष्ट्वा देवाः **स्वर्गं लोकं** गताः, **नप्रसृतेन** प्रसृतविपरीतेन यज्ञेनेष्टवतोऽसुरान् **पराभावयन्** । नप्रसृतमप्रसृतं नलोपाभावश्छान्दसः । असुराः पराभूता इत्यर्थः ॥

[3]कः पुनस्तर्हि प्रसृतो यज्ञ इत्याह—**यज्ञोपवीतिनो यज्ञः प्रसृतः** प्रसृतगुणकः । यज्ञोपवीतस्य लक्षणामिदानीमेव वक्ष्यते । **अनुपवीतिनः** अयज्ञोपवीतिनः यज्ञोपवीतिविपरीतस्य यो यज्ञः **सोऽप्रसृतः** प्रसृतगुणरहितः । 'देवलक्ष्ममेव तत् कुरुते'[1] इति श्रुतेः यज्ञोपवीतस्य यज्ञसाधनत्वात्तद्वतो यज्ञः प्रसृतः, इतरस्साधनवैकल्येन

---

[1] तै. सं. २-५-११.

**एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या [4]अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽव धत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतꣳ संवीतं मानुषम् ॥ १ ॥**

---

अयज्ञत्वादप्रसृतः । तस्मात् **यत्किञ्च ब्राह्मणो** यज्ञोपवीतवान् **अधीते** अध्ययनेनार्थमवबुध्यते तत्तेन **यजते एव,** न केवलमयमधीते नार्थं जानाति, अपितु यजत एव । **तस्माद्यज्ञोपवीत्येव** अध्ययनं यजनं याजनं च कुर्यात् **यज्ञस्य प्रसृत्यै** प्रसृतगुणकत्वाय ॥

[4]अथ कथं नाम यज्ञः प्रसृतस्स्यादिति—**अजिनं वासो वेति** द्रव्यविधिः । अथ यज्ञोपवीतस्य लक्षणमाह—**दक्षिणत उपवीय** देहस्य दक्षिणमर्धमुपवीय उपच्छाद्य । व्येञ् संवरणे, ल्यपि संप्रसारणे 'हलः' इति दीर्घः । स च न सर्वात्मना उपच्छाद्यः, अपि तु प्रागन्तावीतं दक्षिणमर्धं कृत्वा **दक्षिणं बाहुमुद्धरते** उपरि करोति **सव्यं अवधत्ते** अधस्तात्करोति स्थापयति इत्येतत् **यज्ञोपवीतं** यज्ञसाधनमुपवीतं देवसंबन्धीत्यर्थः । **एतदेव विपरीतं प्राचीनावीतं** यथा सव्यत उपवीय सव्यं बाहुमुद्धरते अवधत्ते दक्षिणमिति । संज्ञेयं 'प्राचीनावीती निर्वपति'* इत्याद्यर्थम् । अन्वर्था चेयं संज्ञा, प्राचीनस्य उपवीतस्य आवीतं आवेष्टनरूपं विपरीतात्मकत्वादिति । तेन पित्र्यमुक्तं भवति दैवविपरीतत्वात्पित्र्यस्य । **संवीतं** समं वीतं अंसद्वयावलम्बनेन वीतं संवीतम् । उभावपि बाहू यत्राधः क्रियते तत् संवीतं **मानुषं** मनुष्याणां स्वं भवति ॥

इत्यारण्यके द्वितीये प्रथमोनुवाकः.

---

*ब्रा. १-६-८.

[1]रक्षाꣳसि ह॒वा पु॒रो॑ऽनुवा॒के त॒पो॑ग्र॒मति॑ष्ठन्त॒ ता-न्प्र॒जाप॑ति॒र्वरे॑णो॒पाम॑न्त्रयत॒ तानि॒ वर॑मवृणीता॒दि-त्यो नो॒ योद्धा॒ इति॒ तान्प्र॒जाप॑तिरब्रवी॒द्योध॑यध्व-

[1]अथ स्वाध्यायात्प्राग्भावित्वादादावेव सन्ध्योपासनविधिं ताव-दाह—**रक्षांसीति** ॥ **पुरोऽनुवाके** पूर्वस्मिन्काले । अनु पश्चा-दुच्यत इत्यनुवाकः । इत्थं पूर्वमासीदिति यस्सर्वदाऽनूच्यते स कालः पुरोऽनुवाकः, पुराकल्प इति यावत् । तत्र **रक्षांसि हवा** हवार्थं युद्धार्थं 'सुपां सुलुक्' इति चतुर्थ्या आकारः। यद्वा—हवेति निपातसमुदायः प्रसिद्ध्यर्थः । वैशब्दसमानार्थो वा हवाशब्दः । **तपः अग्रं** श्रेष्ठं तीव्रं **अतिष्ठन्त** आस्थितवन्तः। आस्थाने तिष्ठतिर्वर्तते । व्यत्ययेनात्मनेपदम् । यद्वा—'प्रकाश-नस्थेयाख्ययोश्च' इत्यात्मनेपदम् । तीव्रं तपः प्रकाशितवन्तः। अन्तर्भावितण्यर्थोऽयम् । तपसश्च अनुष्ठेयत्वेनाज्ञीप्स्यमानत्वात् 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' इति चतुर्थ्यभावः । अन्य आह—पुरोऽनुवाकः प्रातरनुवाकः । तेन चाग्निष्टोमो लक्ष्यते—यज्ञे वर्त-मानास्तपः कृतवन्त इति । अपर आह—पूर्वस्यां दिश्यनूच्य-माने देशे पुरोऽनुवाके कुरुक्षेत्रे इति । अथ **तान्** तानि रक्षांसि । लिङ्गव्यत्ययः । यद्वा—शेर्लोपेऽपि नुम् प्रवर्तते । **प्रजापतिः वरेण** देयेन **उपामन्त्रयत** वरं वृणीध्वमिति रहस्युपच्छ-न्दितवान् । अथ **तानि वरमवृणीत** अवृणत । वर्णव्यत्ययेन ईकारः । वचनव्यत्ययो वा । वरमाह—**आदित्यो नः** अस्मान् **योद्धै** योधयेत्, वयं च तं योधयेम इति । **प्रजापतिः च अब्र-वीत् योधयध्वमिति** । युधेर्लेटि शपो लुकि 'छन्दस्युभयथा'

**मिति तस्मादुत्तिष्ठन्तꣳ ह वा तानि रक्षाꣳस्यादित्यं योधयन्ति यावदस्तमन्वगा[2]त्तानि ह वा एतानि रक्षाꣳसि गायत्रियाऽभिमन्त्रितेनाम्भसा शाम्यन्ति तदु ह वा एते ब्रह्मवादिनः पूर्वाभिमुखा-**

---

इति तिङ आर्धधातुकत्वाद्गुणः। टेरेत्वे 'वैतोऽन्यत्र' इति ऐकारे कृते संहितायामायादेशो 'लोपश्शाकल्यस्य' इति लोपः। ण्यन्तादेव वा लेटि पूर्ववदार्धधातुकत्वेन णिलोपः। 'बुधयुधनश' इति परस्मैपदं व्यत्ययेन न प्रवर्तते। यो मन्यते 'अस्तु' इत्यध्याहारेण आदित्योऽस्माकं योद्धाऽस्त्विति, तस्यापि संहितायां गुणाभावाय यतितव्यमिति नाश्वासः। यस्मादेवं वरमलभन्त तस्माद्वरबलेन **उत्तिष्ठन्तं**—ऊर्ध्वकर्मत्वेन परस्मैपदं—उद्यन्तमादित्यं **तानि रक्षांसि योधयन्ति**। हवेति व्याख्यातम्। **यावदस्तमन्वगात्** यावति कालेऽस्तं गच्छति तदाऽपीत्यर्थः। अस्तं यन्तं च योधयन्तीत्युक्तं भवति। छान्दसो लुङ्॥

[2]इदानीं तेषां रक्षसां शान्तिं विदधाति—**तानि** तथा युध्यमानानि **रक्षांसि एतानि गायत्र्या** सावित्र्या **अभिमन्त्रितेनाम्भसा** ऊर्ध्वं विक्षिप्तेन **शाम्यन्ति**। तस्मात्तथा कुर्यादिति विधिः। तदु ह वै तस्मादेव हि खलु **एते ब्रह्मवादिनः** ब्रह्मणो वेदितारो ब्राह्मणादयः **पूर्वाभिमुखास्तिष्ठन्तः सन्ध्यायां** प्रातः **गायत्र्या अभिमन्त्रिताः आपः** अपः—विभक्तिव्यत्ययः—**ऊर्ध्वं विक्षिपन्ति**। उपलक्षणत्वात्सायं प्रत्यङ्मुखा इत्यवगम्यते। **ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहा मन्देह-**

स्सन्ध्यायां गायत्रियाऽभिमन्त्रिता आपं ऊर्ध्वं विक्षिपन्ति ता एता आपो वज्रीभूत्वा तानि रक्षाꣳसि मन्देहाऽरुणे द्वीपे प्रक्षिपन्ति यत्प्रदक्षिणं प्रक्रमन्ति तेनं पाप्मानमवं धून्वन्त्युद्यन्तंमस्तंयन्तंमादित्यमंभिध्यायन्कुर्वन्ब्राह्मणो विद्वान्थ्सकलं भद्रमंश्नुतेऽसावांदित्यो ब्रह्मेति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेदं ॥ २ ॥

---

नाम्नां रक्षसां—"सुपां सुलुक्" इति षष्ठ्या आकारः—तेषां रक्षसां स्वभूते **अरुणे** अरुणनाम्नि **द्वीपे प्रक्षिपन्ति** पातयन्ति । **यत्प्रदक्षिणं प्रक्रमन्ति** दक्षिणप्रारम्भमावर्तन्ते **तेन पाप्मानं** आत्मस्थं **अवधून्वन्ति** । तस्मात् **उद्यन्तमस्तंयन्तश्चादित्यमभिध्यायन्** आभिमुख्येन चिन्तयन् **कुर्वंश्च** प्रदक्षिणं **विद्वांश्च असावादित्यो ब्रह्मेति** असावेवादित्यः परंब्रह्मेति ब्रह्मादित्ययोरभेदं आदित्येन चात्मन ऐक्यं जानन् **ब्राह्मणः सकलं भद्र** कल्याणं **अश्नुते** न केवलं स्वर्गादिकमेव, अपितु सकलं कल्याणम् । अथ य एवं वेद सोऽपि **ब्रह्मैव सन् ब्रह्माप्येति** ब्रह्मणा ऐक्यं प्रतिपद्यते, किं पुनस्स्वर्गादि सकलं भद्रमश्नुत इति । यद्वा—असावादित्यो ब्रह्मेति विद्वान् तेन चादित्येनात्मनः ऐक्यात् स्वयमपि **ब्रह्मैव** आदित्यः **सन् कुर्वन्** आचरन् एवं विशिष्टमादित्योपस्थानं आचरन् **सकलं भद्रमश्नुते** अपवर्गमपि प्राप्नोति । अथ य एवं वेदिता सोऽपि ब्रह्माप्येति प्राप्नोति ॥

इति द्वितीये द्वितीयोऽनुवाकः.

---

[1]यद्देवा देवहेळनं देवासश्चकृमा वयम् । आदित्यास्तस्मान्मा मुञ्चतर्तस्यर्तेन मामित । [2]देवा जीवनकाम्या यद्वाचाऽनृतमूदिम । तस्मान्न इह मु-

[1]अथ कूश्माण्डमन्त्राश्चत्वारोऽनुवाकाः । 'कर्मादिष्वेतैर्जुहुयात्'* इत्यादिषु विनियोगः। **यद्देवा** इति ॥ अच्छिद्रे सर्वा व्याख्याताः†। विशेषप्रदर्शनार्थं किञ्चिदुच्यते । सर्वा अनुष्टुभः । विशेषो वक्ष्यते—हे **देवाः**! **आदित्या** इत्युपरितनेन सम्बद्ध्यते । **देवहेळनं** देवानां क्रोधहेतुं कर्मभ्रेषम् । हेडृ क्रोधे, अत्र वर्णान्यत्वं प्रसिद्धम्—

**वर्णान्यत्वं स्वरान्यत्वं पञ्चप्रश्नेषु दृश्यते ।**
**आरण्यादौ द्वयोश्चान्ते त्रिष्वथैवं विधीयते** ॥ इति ।

**देवासः** देवनशीलाः, यद्वा दीव्यन्तः व्यवहरन्तः लौकिकवैदिककर्मानुष्ठायिनः वयं पुत्रादिभिस्सह । देवास इत्यत्र व्यत्ययेनाद्युदात्तत्वम् । **यच्चकृम** कृतवन्तः **तस्मात्तावतः** पापात् **मुञ्चत** । अपि च—**ऋतस्य** यज्ञस्यापि **ऋतेन** यज्ञेन सत्येन वा **मामित** प्राप्नुत येनाहं पुनः भ्रेषवान् न स्याम् । तथा ऋतयुक्तं यज्ञयुक्तं मां कुरुत । आत्मनः प्राधान्यान्मामित्युक्तम् ॥

[2]**देवा** इति ॥ हे **देवाः**! **जीवनकाम्या** जीवनकाम्यया तृतीयाया आकारः । यद्वा—**जीवनकाम्याः** वयम् । काम्यजन्तात् पचाद्यच् । प्राणधारणार्थं **यदनृतं वाचा ऊदिम तस्मात्** अधर्मात् **नः** अस्मान् इह अस्मिन् कर्मणि **मुञ्चत** एतत्कर्मसमृद्ध्यर्थं तत्पापमस्मत्तोऽपनयत । हे **विश्वेदेवाः**! **यूयं सजोषसः** अस्माभिः परस्परतो वा समानप्रीतयो भूत्वा वैमनस्यं

*आ. २-७. †ब्रा. ३-७-१२.

श्चत विश्वे देवास्सजोषसः । [3]ऋतेन द्यावापृथिवी ऋतेन त्वꣳ सरस्वति । कृतान्नः पाह्येनसो यत्किंचानृतमूदिम । [4]इन्द्राग्नी मित्रावरुणौ सोमो धाता बृहस्पतिः । ते नो मुञ्चन्त्वेनसो यदन्यकृतमारिम । [5]सजातशꣳसादुत जामिशꣳसाज्ज्यायसश्शꣳ-

---

विहाय तस्मान्नो मुञ्चत । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[3]**ऋतेनेति** ॥ हे **द्यावापृथिवी**! हे **सरस्वति**! ता यूयं **ऋतेन** इत्थम्भूताः **नः** अस्मान् **कृतात् एनसः** कायिकात् पापात् **पाहि** पात । विभक्तिव्यत्ययः । **यत्किंच** अन्यदपि **अनृतमूदिम** वाचकं पापं कृतवन्तः प्रमादात् प्रयोजनपारतन्त्र्याद्वा तस्माच्च नः पात ॥

[4]**इन्द्राग्नी** इति ॥ इन्द्राग्न्यादयश्च **ते नः** अस्मान् **एनसो मुञ्चन्तु** । कस्मादित्याह—**यदन्यकृतं** अन्यैश्शत्रुभिः प्रयुक्तं कृत्यादिकं पापं **आरिम** प्राप्तवन्तः । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—त इति विभक्तिवचनव्यत्ययः, तस्मादित्यर्थः ॥

[5]**सजातशंसा**दिति त्रिष्टुप् ॥ सजाताः समानजन्मानः तैरसत्कृतैः यत्पापं शंसनीयं, **उत** वा जामिभिः भगिन्यादिभिः अलब्धाभिमताभिः यच्छंसनीयमनिष्टं, तथा **ज्यायसः** प्रशस्ततरस्य अनभ्युत्थानादिना संजातक्रोधस्य यत्पापं शंसनीयं शापादिरूपं,

सोदुत वा कनीयसः । अनाधृष्टं देवकृतं यदेनस्त-
स्मात्त्वमस्माञ्जातवेदो मुमुग्धि । [6]यद्वाचा यन्मन-
सा बाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳ शिश्नैर्यदनृतं च-
कृमा वयम् । *अग्निर्मा तस्मादेनसः प्रमुञ्चतु

तथा **कनीयसः** बालतरस्य मनोरथालाभेन यत्पापं शंसनीयं, यच्चान्यदपि **अनाधृष्टं** अनाधर्षणीयं प्रबलमेनः प्राप्तं **देवकृतं** देवैः कृतं अपराधादिजन्मना कोपेन कृतमनर्थजननरूपम् "तृतीया कर्मणि" इति पूर्वपदप्रकृतिस्वरत्वम् । यद्वा—यत् देवेष्वस्माभिः कृतं निन्दारूपं पापम् । "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमान" इत्यादिना सप्तमीपूर्वपदप्रकृतिस्वरत्वम् । **तस्मात्** सर्वस्मादपि **अस्मान्** हे जातवेदः! जातानां वेदितः! **मुमुग्धि** मुञ्च । शपः श्लुः अन्तर्भावितण्यर्थः ॥

[6]**यद्वाचेति** ॥ सप्तपदेयं शक्वरी । वागादिभिर्यदनृतरूपमयुक्तरूपं पापं **वयञ्चकृम** कृतवन्तः, **वाचा** असत्याभिधानं, गुर्वादिषु च त्वंकारादि, **मनसा**ऽपराधोऽनिष्टचिन्तनं, **बाहुभ्यां** ब्राह्मणताडनादि, **ऊरुभ्याम**गम्यालिङ्गनादि, **अष्ठीवद्भ्यां** जानुभ्यां अगन्तव्यदेशगमनादि, **शिश्नैः** शिश्नेन अयोनौ रेतस्सेकादि । बहुवचनाच्चक्षुरादीन्द्रियाणां ग्रहणम् । चक्षुषा उद्यदर्कदर्शनादि, श्रोत्रेण गुरुदेवादिनिन्दाश्रवणादि, आस्येन अभक्ष्यभक्षणमित्यादि, **तस्मात्**

*अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु चकृम यानि दुष्कृता । इति द्राविडपाठः.

चकृम यानि दुष्कृता । [7]येन त्रितो अर्णवान्निर्ब्भूव येन सूर्यं तमसो निर्मुमोच । येनेन्द्रो विश्वा अजहादरातीस्तेनाहं ज्योतिषा ज्योतिरानशान आ-

---

सर्वस्मादस्मात् एनसः अग्निः गार्हपत्यः प्रमुञ्चतु । "गृहपतिना संयुक्ते ञ्यः"। यानि चान्यानि दुष्कृता दुष्कृतानि पापानि विहिताकरणादिरूपाणि चकृम तानि प्रमुञ्चतु । 'शेश्छन्दसि' इति शेर्लोपः ॥

[7]येनेति ॥ त्रिष्टुबेषा 'आनशानः' इति चतुरक्षराभिक्रान्ता 'तेनाहं ज्योतिषा ज्योतिराक्षि' इति अक्षरतः पादस्य समाप्तिः । त्रितः तृतीयाभिपातजन्मा अग्निविशेषः, यथा—'स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत'* इति । उपलक्षणञ्चैतदेकतादीनाम् । प्राधान्यात्त्रितस्य ग्रहणम् । येन ज्योतिषा तेजसा, द्योतनकारिणा वा धर्मेण, अर्णवात् गहनात् पापसमूहात् निर्बभूव निर्मुक्तो बभूव—'आप्त्या अमृजत सूर्याभ्युदिते।'* इत्यत्रेदमुक्तम्—येन यत् ज्योतिः—विभक्तिव्यत्ययः—सूर्यं तमसः अन्धकारत् निर्मुमोच निर्मुक्तं करोति। यद्वा—सूर्यं सूर्यः । विभक्तिव्यत्ययः । येन ज्योतिषा सूर्यो लोकं तमसो निर्मुमोच निर्मुञ्चति । यद्वा—येन ज्योतिषा तमसो निर्मुक्तं सूर्यं चकार ईश्वरः । येन च इन्द्रोऽपि विश्वा अजहात् अरातीः अदानशीलान् शत्रून् अजहात् अनाशयत् तेन ज्योतिषा धर्मेण आनशानः व्याप्यमानः अहं ज्योतिः अग्निं परं ज्योतिर्वा आक्षि अक्षुवीय । अक्षोतेश्छान्दसे लुङि 'स्वरति' इत्यादिना विकल्पादिडभावः, षत्वकत्वे । आनशान

---

*ब्रा. ३-२-८.

क्षि । [8]यत्कुसीदमप्रतीत्तं मयेह येन यमस्य निधिना चरामि । एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते दधामि । [9]यन्मयि माता [10]यदा-

इति ततश्छान्दसः कर्मणि लिट्, तस्य । कानच्, 'अत आदेः' इत्यभ्यासस्य दीर्घत्वं, 'अश्नोतेश्च' इति नुट् ॥

[8]**यत्कुसीदमिति** ॥ त्रिष्टुप्, मयेहेति प्रथमपादान्तः । **यत्कुसीदं** ऋणं **मया अप्रतीत्तं** उत्तमर्णेभ्यो न प्रत्यर्पितं **इह** लोके जन्मनि वा कार्यवशेन गृहीतं प्रमादालस्यादिना पुनर्न दत्तम् । ददातेर्निष्ठायां 'अच उपसर्गात्तः' इति तत्वं, 'दस्ति' इत्युपसर्गस्य दीर्घत्वम् । **येन** ऋणेन **यमस्य निधिना** निधानस्थानीयेन अवश्यदेयेन अहं ऋणी **चरामि** हे **अग्ने! एतत् तत्** तस्मात् एतस्मात् मुक्तोऽहं **अनृणो भवामि** भूयासम् । यद्वा—एतेन होमेन हेतुना तेन ऋणेन अनृणो[1] भूयासम् ' किमदत्त्वैवर्णमनृणत्वं प्रार्थयस इति चेत्तत्राह—**जीवन्नेव** अहं ते तव प्रसादेन **तत्** ऋणं **प्रतिददामि** । यदप्रतीत्तं तत्प्रतिपादनसमर्थं मां कुर्विति भावः ॥

[9]**यन्मयीत्यादिपञ्चानां** मन्त्राणां प्रतीकग्रहणम् ॥ तत्र **यन्मयीति** षट्पदा जगती । मयि गर्भे सति माता यत् एनश्चकार यच्च पिता चकार तस्मादेनसोऽयं गार्हपत्योऽग्निः मां प्रमुञ्चतु तेन पापेन मदर्थेनाप्यहं अस्पृष्टो भूयासम् । यानि चान्यानि दुरितानि दुष्कृतानि चकृम तेनैनसा मामनेनसं करोतु, तस्य यदेनस्तदपाकरोतु* ॥

*ब्रा. ३-७-१२. [1]मुक्तो.

पिपेष [11]यदन्तरिक्षं [12]यदाशसा [13]ऽतिक्रामामि [14]त्रिते

[10]**यदापिपेषेति** पुरस्ताज्ज्योतिस्त्रिष्टुप् ॥ **यत्** अहं मातरं पितरं च **आपिपेष** उत्सङ्गारोहणादिना सर्वतः पीडितवानस्मि केन हेतुना पुत्रः पुत्रत्वेन निर्विशङ्कः । तत्र विशेषमाह—प्रमुदितः ताभ्यामुपलालितत्वात् प्रकर्षेण हृष्टः । हेत्वन्तरमाह—धयन् मातुः स्तन्यपानार्थम् । हेतौ शतृप्रत्ययः । तत् तेन कर्मणा मया पितरौ मातापितरौ अहिंसितौ अपीडितौ, तस्य पेषणस्य तयोः प्रियतरत्वात् । हे अग्ने! तत् तत्र अहं अनृणो भूयासम् । असत्यपि तस्य पेषणस्य पापत्वे तत्क्षान्तेः प्रत्युपकाराकरणेन ऋणवानहं मा भूवं त्वत्प्रसादेनेति भावः* ॥

[11]**यदन्तरिक्षमिति** पद्पदा शक्करी ॥ यद्वा—संस्तारपङ्क्तिः । द्विपदा वा गायत्री । अन्तरिक्षादिस्थान् विहगान् मनुष्यान् देवांश्च मातरं पितरं वा यत् जिहिंसिम हिंसितवन्तः । मातापित्रोः पृथगुपादानं प्राधान्यख्यापनार्थम्, त्रैलोक्यहिंसाया अपि पापीयसी तद्धिंसेति दर्शयितुम् । अग्निर्मा तस्मादित्यादि । गतम्* ॥

[12]**यदाशसेति** ॥ पूर्ववच्छन्दः । आशसा प्रबलया हिंसया निशसा निकृष्टया अल्पया हिंसया पराशसा बुद्धिपूर्वया यदेनश्चकृम नूतनं इह जन्मनि भवं यच्च पुराणं प्राचीनेषु जन्मसु भवम् । अग्निर्मा तस्मादित्यादि । गतम्* ॥

[13]**अतिक्रामामि इति** त्रिष्टुप् ॥ दुरितं दुःखस्य हेतुभूतं यदेनः तत् अतिक्रामामि त्वत्प्रसादेन तदतिक्रमितुं शक्तो भूयासम् । अ-

*ब्रा. ३-७-१२.

## देवा [15]दिवि जाता [16]यदाप [17]इमं मे वरुण

करणमेवातिक्रमणं, यथा मृत्युमतिक्रामतीत्यमरणं गम्यते । अथ यदितः पूर्वं कृतं रिप्रं पापं तदपि परमे सधस्थे जहामि यत्र पुण्यापुण्यात्मकानि सर्वाणि कर्माण्यविभागापन्नानि सह तिष्ठन्ति तस्मिन् परमे उत्कृष्टे सधस्थे सहस्थाने आत्माख्ये प्रापय्य मदीयं कर्म नाशयामि महोदधाविव जलबिन्दुमिति । यथाऽऽहुः—सर्वकर्मणां परमगुरावर्पणमिति । किञ्च—यत्र सुकृत एव यन्ति गच्छन्ति न दुष्कृतोऽपि तं सुकृतां नु लोकं स्थानं शीघ्रमारोहामि यत् सुकृतिभिरेव लोक्यते तच्च तदेव परमं स्थानं, यत् क्षीणकर्मभिरारुह्यते* ॥

[14]**त्रित इति** ॥ प्रथमा त्रिपदा त्रिष्टुप्, द्वितीया अनुष्टुप्, अष्टिर्वा षट्पदा । **त्रितो** व्याख्यातः† । तस्मिन् **देवा एतदेनः अमृजत** शोधितवन्तः, 'अहं वस्तं जनयिष्यामि । यस्मिन् म्रक्ष्यध्वे'‡ इति त्रिते देवैः पापमार्जनस्य कृतत्वात् । त्रितस्तु एतत्पापं मनुष्येषु सूर्याभ्युदितादिषु **मामृजे** शोधितवान्, यथा—'आप्या अमृजत सूर्याभ्युदिते'‡ इत्यादि । मृजेर्व्यत्ययेन आत्मनेपदं, 'तुजादीनाम्' इत्यभ्यासस्य दीर्घत्वम् । एतत्सर्वं अग्नेर्महिम्ना संपन्नम् । ततो देवादिभिः मृज्यमानात्पापात् यत्किञ्चिदेकदेशभूतं मामानशे व्याप्नोति । यद्वा—तत एव भक्तरक्षणपरत्वाद्यत्किञ्चिदपि पापं मां प्राप्नोति तस्मादेनसोऽग्निर्मां प्रमुञ्चत्वित्यादि । गतम्* ॥

[15-16]**दिवि जाता यदाप इति** ॥ निगदव्याख्यानम्* ॥

*ब्रा. ३-७-१२. †आ. २-३७. ‡ब्रा. ३-२-८.

[18]तत्त्वां यामि [19]त्वं नो अग्ने [20]स त्वं नो अग्ने

[17]इमं म इति ॥ हे वरुण! इमं हवं आह्वानं श्रुधि शृणु। श्रुत्वा चाद्यैव मृडय सुखय । त्वामवस्युः पालनकामः आचके आगायामि स्तुवे* ॥

[18]तत्त्वेति ॥ हे वरुण! उरुशंस! बहुधा शंसनीय! स्तुत्य! नः अस्माकं आयुः मा प्रमोषीः अहेडमानः अक्रुद्ध्यंश्च भूत्वा इह कर्मणि मया उच्यमानं बोधि बुद्ध्यस्व। तत् त्वा यामि तदनन्तरमेवोक्तमर्थजातं त्वां याचामि ब्रह्मणा मन्त्रेण वन्दमानः स्तुवन् हविर्भिः यजमानः सर्वोऽपि तदेव आशास्ते प्रार्थयते । एवमियमृक् अर्थानुगुण्यात् व्युत्क्रमेण योजिता* ॥

[19]त्वं न इति ॥ हे अग्ने! विद्वान् सर्वस्य वेदिता त्वं नः अस्माकं उपरि देवस्य वरुणस्य यत् हेडः कोपः तत् अवयासिसीष्ठाः अवाचीनं यथा भवति तथा यासिसीष्ठाः यक्षीष्ठा इति । यजिष्ठः अतिशयेन यष्टा वह्नितमः अतिशयेन वोढा हविषां शोशुचानः देदीप्यमानः विश्वा विश्वानि अस्मद्विषयाणि शत्रूणां द्वेषांसि वधबन्धनादीनि प्रमुमुग्धि प्रमुञ्च अस्मत्तः† ॥

[20]स त्वमिति ॥ हे अग्ने! य एवमुक्तगुणः स त्वं अवमः मूलभूतो देवानां—'अग्निरवमो देवतानां विष्णुः परमः'‡ इति ब्राह्मणं—नः अस्माकं ऊती ऊत्यां पालने नेदिष्ठः अन्तिकतमो भव । कदा? अस्या उषसो व्युष्टौ अस्यामुषसि व्युष्टायां, उपलक्षणञ्चैतत्, सर्वदेत्यर्थः । अवयक्ष्व अवाचीनो यथा भवति तथा यक्ष्व—कं? वरुणं अस्मासु पाशं मुमुक्षुं नः अस्मभ्यं

*सं. २-१-११. †सं. २-५-१२. ‡सं. ५-५-१.

[21]त्वम॑ग्ने अ॒यासि॑ ॥ ३ ॥ मु॒मु॒ग्धि॒ स॒प्त च॑ ॥ ३ ॥

[1]यद॒दी॑व्यन्नृ॒णम॒हं ब॒भूवादि॑त्सन्वा सं॒ज॒गर॒ जने॑भ्यः। अ॒ग्निर्मा॒ तस्मा॒दिन्द्र॑श्च संविदा॒नौ प्र मु॑ञ्चताम्।

---

रराणः इष्टानि ददत् वीहि खाद मृडीकं सुखयितारं पुरोडाशादिकमस्माभिर्दत्तम् । सुहवः शोभनाह्वानः एधि भव* ॥

[21]त्वमग्ने इति ॥ हे अग्ने! त्वं अयासि छान्दसं सवर्णदीर्घत्वम्—भक्तानामेतव्यः, भक्तान्वा प्रति एतव्यः अयासन् अयास्सन् । छान्दसस्सकारलोपः । एवम्भूतस्त्वमस्माभिर्मनसा हितः प्रणिहितः, असीत्यनुषङ्गः, प्रणिहितोऽसि, त्वां प्रणिदध्मह इत्यर्थः । अयास्सन् हव्यमस्माभिर्दत्तं ऊहिषे देवेभ्यो हव्यं वहस्व अयाः त्वं नः अस्मभ्यं भेषजं धेहि देहि† ॥

इत्यारण्यके द्वितीये तृतीयोनुवाकः.

---

[1]यददीव्यन्निति ॥ सर्वास्त्रिष्टुभः । अदीव्यन् व्यवहर्तुमशक्नुवन्, यथा पुत्रादीनां रक्षणं कर्तुमसमर्थः अहं यत् ऋणं बभूव प्राप्तवानस्मि । भू प्राप्तौ । यद्वा—ऋणं ऋणवान् अहं बभूव । मत्वर्थीयो लुप्यते । यद्वा—ऋणं जनेभ्यः दातृभ्यः अदित्सन् दातुमनिच्छन्नेवाहं संजगर दास्यामीति संशब्दितवानस्मि । व्यत्ययेन 'समः प्रतिज्ञाने' इत्यात्मनेपदाभावः । यद्वा—जनेभ्यः आदाय सम्भक्षितवानास्मि तस्मात् ऋणात् अग्निश्चेन्द्रश्च संविदानौ संगतं जानन्तौ अविरुद्धमती भूत्वा मां प्रमुञ्चतां ताभ्यामेवाहमनृणः कार्य इति ॥

---

*सं. २-५-१२. †ब्रा. २-४-१.

[2]यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः । उग्रंपश्या च राष्ट्रभृच्च तान्यप्सरसावनुदत्तामृणानि । [3]उग्रंपश्ये राष्ट्रभृत्किल्बि-

---

[2]यद्धस्ताभ्यामिति ॥ यत् यानि **किल्बिषाणि** पापानि ऋणादानादिरूपाणि **हस्ताभ्यां चकर** कृतवानस्मि । बुद्धिपूर्वकत्वाद्धस्ताभ्यामित्युक्तम् । **अक्षाणां** इन्द्रियाणां चक्षुरादीनां **वग्नुं** गतिं शक्तिरूपां गतिं **उपाजिघ्नमानः** उपजिघ्नन् । ‘ हो हन्तेः ’ इति कुत्वं, द्विविकरणता श्लुश्च शप् च, शबेव वा, छान्दसं द्विर्वचनं, ‘ बहुलं छन्दसि ’ इत्यभ्यासस्येत्वम् । **उग्रंपश्या च राष्ट्रभृच्च अप्सरसौ तानि ऋणानि अनुदत्तां** आनुकूल्येन दत्तां यथोत्तमर्णास्तृप्येयुः तथा दत्ताम् ॥

[3]उग्रंपश्ये इति ॥ हे **उग्रंपश्ये** ! हे **राष्ट्रभृत्** ! । प्रथमस्यामन्त्रितस्य अविद्यमानत्वात् द्वितीयं न निहन्यते । यानि **किल्बिषाणि** पापानि ऋणादानादिरूपाणि **यच्चाक्षवृत्तं** अक्षे द्यूते वृत्तं पणादिरूपं प्रतिश्रुतं अप्रतीत्तम् । सप्तमीपूर्वपदप्रकृतिस्वरत्वम् । **एतत् सर्वं अनुदत्तं** आनुकूल्येन दत्तं प्रयच्छतं उत्तमर्णेभ्यः । इदं च प्रार्थये वाम् । **नः** अस्मान् **ऋणान्** ऋणवतः । मत्वर्थीयाकारान्तः । **यमस्य लोके अधि नेत् नैव ऋणवः** ऋणवत् पुरुषव्यत्ययः, ऋणुयात् । कः? **समानः** समानजातीयो जनउत्तमर्णः यो **यमस्य लोके अधि**—‘ अधिरीश्वरे ’ इत्यधिशब्दस्य कर्मप्रवचनीयत्वम्—ऐश्वर्येण समानः सर्वसाधारणो वा यमस्य लोके अस्मान्नैवाकर्षेत् **रज्जुराय** प्रहाररज्जुभूयिष्ठाय नरकविशेषाय तं प्रापयितुं नैवाकर्षेत् । केचिदाहुः—रज्जुरायेति

**षाणि यदुक्षवृंत्तमनुंदत्तमेतत् । नेन्नं ऋणानृणव इत्संमानो यमस्यं लोके अधिं रज्जुरायं । [4]अवं ते**

वर्णलोपः—रज्जुराय रज्जुर्भूत्वा अस्मानादाय बद्ध्वा यमस्य लोकं नैव प्रापयेत् । तस्मादेतदृणमनुदत्तमिति । ऋण गतौ तानादिकः, लेटि 'लेटोऽडाटौ' इत्यडागमः । द्वितीय इच्छन्दः पादपूरणार्थः, आदरार्थो वा । अधिरज्जुरिति बहुव्रीहिर्वा; तेन पूर्वपदप्रकृतिस्वरत्वम् । समानेति चात्रामन्त्र्यते । उ इति पादपूरणार्थः । हे **समान**! अस्मान् **ऋणवतः अधिरज्जुः** अधिगतरज्जुस्त्वमादाय **यमस्य लोके** नैवाकर्षेः । ऋणव इति सिप् मध्यमपुरुष एव । यस्मादाभ्यामप्सरोभ्यामस्मदीयमृणं तुभ्यं दीयते सर्वं तस्मादेतेन तृप्तो भवेति । अस्मिन् पक्षे समानेत्यस्य सर्वानुदात्तत्वमुपपन्नं भवति ॥

[4]**अव त** इत्यादिषण्णां प्रतीकग्रहणम् ॥ **अव त इति** द्वे व्याख्याते 'वैश्वानरो नः'* इत्यत्र । हे वरुण ! तव हेडः क्रोधं नमस्कारैः यज्ञैः हविर्भिश्च अवेमहे अवनयामः असुर! प्राणप्रद ! हे प्रचेतः! प्रकृष्टचेतन! हे राजन् ! अस्मभ्यं क्षयन् निवसन् अस्माभिः कृतानि एनांसि शिश्रथः श्रथय ॥

[5]**उदुत्तममिति** ॥ उत्तमं पाशं अस्मत्त उच्छ्रथाय श्रथय । अधमं पाशं अवश्रथाय अवश्रथय मध्यमं तु पाशं विश्रथाय विश्रथय । अथानन्तरं हे आदित्य! तव व्रते कर्मणि वर्तमाना वयमनागसस्स्याम अदितये अखण्डनार्थम् ॥

*सं. १-५-११.

**हेळ [5]उदुत्तम[6]मिमं मे वरुण [7]तत्त्वा यामि [8]त्वं नो अग्ने [9]स त्वं नो अग्ने । [10]संकुसुको विकुसुको निर्-**

[6]**इमं मे वरुणेति** द्वे इन्द्रं व इत्यत्र व्याख्याते* गायत्री त्रिष्टुभौ ॥ हे वरुण ! इमं मम हवं आह्वानं शृणु । अद्यैवास्मान् मृडय सुखय । त्वामवस्युः सुखयितुमिच्छन् आचके आभिमुख्येन स्तौमि ॥

[7]**तत्त्वा यामीति** ॥ त्वां मन्त्रेण हे वरुण ! वन्दमानः तदेवाहं यामि भजामि । यजमानश्च तदेवाशास्ते हविर्भिः । तदेव त्वं अहेडमानः अक्रुद्ध्यन् बुद्ध्यस्व । किं पुनस्तत् ? उरुशंस ! हे महद्भिः स्तुत ! शंसु स्तुतौ नः अस्माकं आयुर्मा प्रमोषीः ॥

[8]**त्वं नो अग्न इति** द्वे "आयुष्टे"† इत्यत्र व्याख्याते त्रिष्टुभौ ॥ हे अग्ने ! त्वं देवस्य वरुणस्य विद्वान् हेडः अवयासिसीष्ठः अपनय यजिष्ठः यष्टृतमः वह्नितमः अतिशयेन वोढा ६
शोशुचानः अतिशयेन दीप्यमानः विश्वान्यपि द्वेषांसि अस्मत्तः प्रमुमुग्धि ॥

[9]**स त्वं न इति** ॥ हे अग्ने ! अवमः प्रत्यासन्नः त्वं अस्माकं ऊत्यै भव नेदिष्ठः अन्तिकतमः अस्या उषसः व्युष्टिकाले रममाणः त्वं अस्माकं वरुणं वारकं पापं अवयक्ष्व अपनुद वीहि भक्षय मृडीकं सुखहेतुं हविः । अस्माकं च सुहवः स्वाह्वानश्च भव इति ॥

[10]**सङ्कुसुक** इत्यनुष्टुभास्तिस्रः ॥ **सङ्कुसुकः** परापवादशील इत्ये-

*सं. १-१-११. †सं. २-५-१२.

ऋथो यश्च निस्वनः । तेऽस्मद्यक्ष्ममनागसो दू-
राद्दूरमचीचतम् । [11]निर्यक्ष्ममचीचते कृत्यां निर्-
ऋतिं च । तेन योऽस्मत्समृच्छातै तमस्मै प्रसु-

के, नास्तिक इत्यन्ये । विकुसुकः तस्यैव विस्तारयिता तस्यैव प्रोत्साहकः । निर्ऋथः कृच्छ्रस्य प्रापयिता, छल इत्येके । **निस्वनः** पिशुनः । ते ये वयं **स्मः** तेभ्यः **अस्मत्** अस्मत्तः **यक्ष्मं** यक्ष्मरोगनिमित्तं पापं अनागसः देवाः **दूराद्दूरं** अतिदूरं **अचीचतं** अचीचतन्—वर्णव्यत्ययः—विनाशयन्त्वित्यर्थः । गत्यर्थो वा—अस्मत्तो दूरतरं देशं प्रापयन्त्विति । चतिर्याचनार्थो छान्दसो लुङ् । आगस्विनो मनुष्याः आगश्शब्देनोच्यन्ते—मत्वर्थीयो लुप्यते—ततोऽन्ये अनागसः । अव्ययपूर्वपदप्रकृतिस्वरत्वं, बहुव्रीहौ तु 'नञ् सुभ्याम्' इति । यथा 'अनागसस्त्वा वयं'* इति ॥

[11]**निर्यक्ष्ममिति** ॥ **यक्ष्मं निरचीचते** निष्कृष्य चीचये निश्चयेन वा—चयतिर्लुङ्, चङ् उत्तमः, इट्, अचीचते, आद्गुणः—चातयामि नाशयामि—वचनव्यत्ययः—निश्चातयामः अनेन कर्मणा । छान्दसो लुङ्, उत्तमैकवचनम् । **कृत्यां** परोत्पादितां **निर्ऋतिं** अलक्ष्मीं **च** निश्चातयामः । **तेन**† हेतुना **अस्मत्** अस्मासु **यः समृच्छातै** समृच्छेत विनाशमाचरेत् अस्माकं—'समोगमृच्छि' इत्यात्मनेपदं, 'वैतोऽन्यत्र' इत्यैकारः, 'लेटोऽडाटौ' इत्याडागमः—**अस्मै** अनिष्टमाचरते जनाय **तं** यक्ष्मं कृच्छ्रं **प्रसुवामसि** प्रसुवामः अनुजानीमः अमुमेव प्रापयामः,

*ब्रा. ३-७-९.

† "तेन तैर्यक्ष्मादिभिः योऽस्मत् अस्मासु समृच्छातै समधिगच्छति तान्यस्मासु प्रापयति" इति व्याख्यानं दृश्यते क्वचित् ।

वामसि । [12]दुश्शꣳसानुशꣳसाभ्यां घणेनानुघणेन च । तेनान्योऽस्मत्समृच्छातै तमस्मै प्रसुवामसि । [13]सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳशिवेन । त्वष्टा नो अत्र विदधातु रायोऽनु मार्ष्टु तन्वो यद्विलिष्टम् ॥

कृत्यां निरृतिं च पश्च च ॥ ४ ॥

---

तां च कृत्यां तां च निरृतिं प्रसुवामसीति । षु प्रसवैश्वर्ययोः, लेटचाडागमः 'इदन्तोमसि' । यद्वा—षू प्रेरणे । तमस्मै प्रेरयामः ॥

[12]**दुश्शंसानुशंसाभ्यां** इति ॥ **दुश्शंसः** अस्मद्दुष्कृतशंसी **अनुशंसः** अस्यैवान्येभ्यो विस्पष्टयिता **घणः** हननशीलः **अनुघणः** तस्यैवानुविधायी सहायः **तेन** दुश्शंसादिमूसहेन—वचनव्यत्ययो वा—तैर्दुश्शंसादिभिस्सह यः **अन्योऽपि अस्मत्** अस्मासु **समृच्छातै अस्मै तं** यक्ष्मादिकं **प्रसुवामसीति** गतम् ॥

[13]**संवर्चसा इति** ॥ त्रिष्टुप् । 'धाता रातिः'* इत्यत्रेयं व्याख्यातप्राया । एवमनेन कर्मणा निर्धूतपापा वयं **वर्चसा** बलेन **पयसा** क्षीरादिना **तनूभिः** शोभनैश्शरीरैः **मनसा** अस्खलितेन **शिवेन** कल्याणेन च **समगन्महि** सङ्गता अभूम भूयास्म । छान्दसो वा लुङ् । सङ्गता भूयास्म । **अत्र** कर्मणि **त्वष्टा नः** अस्माकं **रायः** धनानि **विदधातु** उत्पादयतु यच्च अस्माकं शरीरेषु **विलिष्टं** स्वल्पं पापं तदपि **अनुमार्ष्टु** शोधयत्विति ॥

इत्यारण्यके द्वितीये चतुर्थोऽनुवाकः.

---

*सं. १-४-४४.

[1]आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः । पुनस्ते प्राण आयाति परा यक्ष्मꣳ सुवामि ते । [2]आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयोनिरेधि । घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् । [3]इममग्न आयुषे वर्चसे कृधि तिग्ममोजो वरुण सꣳशिशाधि । मातेवास्मा अदिते शर्म यच्छ विश्वे देवा जरदष्टिर्यथाऽसत् । [4]अग्न आयूꣳ-

[1]आयुष्ट इत्यनुष्टुप्त्रिष्टुभौ व्याख्याते 'त्वमग्ने रुद्रः'* इत्यत्र । अयमग्निः वरेण्यः वरणीयः तव आयुः विश्वतो दधत् दधातु पुनरपि प्राण आयातीति विशेषः । या प्रापणे । तव यक्ष्मं परासुवामि नाशयामि ॥

[2]आयुर्दा इति ॥ हे अग्ने! अस्य हविषः जुषाणः घृतप्रतीकः घृतप्रारम्भः घृतयोनिः घृतहेतुः ईदृशस्त्वं आयुर्दा अस्माकं एधि भव । घृतं मधुरं चारु गव्यं पीत्वा इममभिरक्षतात् पिता पुत्रमिव ॥

[3]इममग्न इति ॥ त्रिष्टुप् † । हे अग्ने! इमं आयुषे वर्चसे कृधि कुरु तिग्ममोज इति विशेषः, तीक्ष्णं बलं पुनरपि संशिशाधि निशितं कुरु हे वरुण! । हे अदिते! अस्मै मातेव शर्म यच्छ देहि । हे विश्वेदेवाः! अयं यथा जरदष्टिः जरती अष्टिः शरीरं यस्य सः दीर्घायुः स्तुत्याऽष्टिर्वा यथा असत् स्यात् तथा कुरुत ॥

[4]अग्न आयूंषि इति गायत्र्यौ* ॥ हे अग्ने! अस्माकं आयूंषि

*सं. १-३-१४. †सं. २-३-१०.

षि पवस आसुवोर्जमिषं च नः । आरे बाधस्व दुच्छुनाम् । [5]अग्ने पवस्व स्वपा अस्मे वर्चस्सुवीर्यम् । दधद्रयिं मयि पोषम् । [6]अग्निर् ऋषिः पवमानः पाञ्चजन्यः पुरोहितः । तमीमहे महागयम् । [7]अग्ने जातान्प्रणुदानस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अस्मे दीदिहि सुमना अहेळञ्छर्मन्ते स्या-

पवसे प्रेरय शोधय वा । किंच—अस्मभ्यं इषमूर्जं च आसुव । अनुजानीहि प्रेरय वा अस्माकं दुच्छुनां अलक्ष्मीं च आरे दूरं बाधस्व ॥

[5]अग्ने पवस्वेति ॥ हे अग्ने! त्वं स्वपाः शोभनकर्मा अस्मदर्थं सुवीरं वर्चः पवस्व । दधद्रयिं मयि पोषमिति पदयोः स्थानविनिमयो विशेषः ॥

[6]अग्नि ऋषिरिति गायत्री ॥ अयं अग्निः ऋषिः ऋषिर्दर्शनात् पवमानः शोधनशीलः पाञ्चजन्यः निषादपञ्चमाः ब्राह्मणादयः पञ्चजनाः, देवमनुष्यासुररक्षोगन्धर्वा इत्येके, तेभ्यो हितः तेषु वा भवः पाञ्चजन्यः—'पञ्चजनादुपसङ्ख्यानम्' इति ञ्यः—पुरोहितः सर्वकर्मसु पुरस्ताद्विहितः । तं एवंगुणमग्निं महागयं महागृहं ईमहे भजामहे याचामहे वा । ई गत्यादिषु ॥

[7]अग्ने जातानिति ॥ त्रिष्टुभौ द्वे गते* । हे अग्ने! जातान् नः सपत्नान् प्रणुद नाशय, अजातांश्च सपत्नान् प्रतिनुदस्व उत्पत्तौ निवारय हे जातवेदः! अस्मान् सुमना भूत्वा अहेलन्

*सं. ४-३-१२.

स त्रिवरूथ उद्भौ । [8]सहसा जातान्प्रणुदानस्सपत्नान्प्रत्यजाताञ्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयꣳ स्याम प्रणुदानस्सपत्नान् । [9]अग्ने यो नोऽभितो जनो वृको वारो जिघाꣳसति । ताꣳस्त्वं वृत्रहञ्जहि वस्वस्मभ्यमा भर । [10]अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः । तं

---

अक्रुद्ध्यन् दीदिहि दीपय । दीदितिः दीप्तिकर्मा । शर्मन् ते स्यामेति विशेषः । तत्र शर्मणि गृहे त्रिवरूथे गार्हपत्याद्यायतनत्रयवति उद्भौ उद्गतभासि समन्ताद्विजृम्भमाणतेजसि सदा स्याम ॥

[8]सहसा जातानिति ॥ सहसा बलेन । गतमन्यत् । सुमनस्यमानः शोभनमनस्कोभवत् नः अस्मान् अधिब्रूहि पक्षपातेन वद । यद्वा—ऐश्वर्येण स्वभूतानस्मानाज्ञापय वयं स्याम सम्पन्ना भूयास्म ॥

[9]अग्ने यो न इत्यनुष्टुभौ* ॥ हे अग्ने! यो नः वृकः जनः अभितः वारः वारयिता एवम्भूतोऽस्मान् जिघांसति हन्तुमिच्छति हे वृत्रहन् तान् तादृशान् सर्वान् जहि नाशय अस्मभ्यं तु भूरि वसु आभर आहर ॥

[10]अग्ने यो नोऽभिदासतीति ॥ हे अग्ने! यो नोऽभिदासाति यो अस्मान् उपक्षेपयति समानः अस्मत्समानजन्मा यो वा निष्ट्यः अस्मत्सङ्घातान्निर्गतः । 'अव्ययात्त्यप्' इति निसस्त्यप् । तं वयमितिविशेषः । तं जनं समिधं समिन्धनस्थानीयं तव

---

*ब्रा. २-४-१.

वयꣴ स॒मिधं॑ कृ॒त्वा तुभ्य॑म॒ग्नेऽपि॑दध्मसि । [11]यो न॒श्शपा॒दशं॑पतो॒ यश्च॑ न॒श्शप॑त॒श्शपा॑त् । उ॒षाश्च॒ तस्मै॑ नि॒म्रुक्च॒ सर्वं॒ पा॒पꣳ समू॑हताम् । [12]यो न॑स्स॒पत्नो॒ यो रणो॒ मर्तो॑ऽभि॒दास॑ति देवाः । इ॒ध्मस्ये॑व प्र॒क्षाय॑तो॒ मा तस्योच्छे॑षि॒ किंच॒न । [13]यो मां द्वेष्टि॑ जा॒तवे॑दो॒ यं चा॒हं द्वेष्मि॒ यश्च॒ माम् । सर्वाꣳ॑स्तान॑ग्ने॒ संद॑ह॒ याꣳश्चा॒हं द्वेष्मि॒ ये च॒ माम् ।

---

कृत्वा हे अग्ने! तुभ्यमेव अपिदध्मसि तवैवास्ये प्रक्षिपामः । 'इदन्तोमसि' ॥

[11]यो नश्शपादिति ॥ यः नः अस्मान् अशपतः शपात् शपेत् यश्च शपतः अस्मान् शपेत् । उषाश्च निम्रुक् च अहश्च रात्रिश्च तस्मै सर्वं पापं समूहतां तस्मिन्नेव सङ्घीभूतं स्थापयताम्* ॥

[12]यो नस्सपत्न इति ॥ हे देवाः! यः अस्माकं सपत्नः शत्रुः यश्च रणः प्रथनकारी रण एव वा अस्मान् अभिदासति उपक्षेपयति मर्तः मर्त्यः मनुष्यः तस्य प्रक्षायतः त्वत्कोपात्प्रक्षीयमाणस्य । क्षैजैसै क्षये, शतरि रूपं, कर्मणि कर्तृप्रत्ययः । किञ्चन किञ्चिदपि मोच्छेषि सर्वात्मना विनष्टोऽस्तु इध्मस्येव* ॥

[13]यो मामिति ॥ हे जातवेदः! यो मां द्वेष्टि तं सन्दह । किं द्वेष्टारमेव नेत्याह—यं चाहं द्वेष्मि यश्च मां द्वेष्टि तावुभावपि द्वेष्टृद्वेष्यौ सन्दह । किमेकमेव द्वेष्टारं द्वेष्यं च ? नेत्याह—सर्वानपि तान् सन्दह यांश्चाहं द्वेष्मि ये च मां द्विषन्ति* ॥

---

*ब्रा. ३-७-६.

[14]यो अस्मभ्यंमरातीयाद्यश्चं नो द्वेषंते जनः । नि-
न्दाद्यो अस्मान्दिप्सांच्च सर्वा॑ᳪस्तान्मंष्मषाकुरु ।
[15]सᳪशितं मे ब्रह्म सᳪशितं वीर्या॒३ बलम् । स-
ᳪशितं क्षत्रं मे जिष्णु यस्याहमस्मि पुरोहितः ।
[16]उदेषां बाहू अंतिरमुद्वर्चो अथो बलम् । क्षिणो-

[14]यो अस्मभ्यमिति ॥ अस्मभ्यं अरातीयात् अरातित्व-मिच्छेत् यश्च अस्मान् द्वेषते द्वेष्टि यो वा अस्मान् निन्दात् निन्देत् यो वा अस्मान् दिप्सात् दिप्सेत् वञ्चयितुमिच्छेत् । दम्भु दम्भने, 'दम्भ इच्च' इति इत्वं; भषूभावाभावश्छान्दसः । हे अग्ने! सर्वानपि तान् मष्मषाकुर्विति विशेषः—अनुकरण-शब्दोऽयं—ईदृशं शब्दं कुर्वाणः तान् सन्दह* ॥

[15]संशितमिति ॥ संशितं तीक्ष्णं मे मम ब्रह्म ब्रह्मवर्चस-मस्तु वीर्यं बलं चास्तु । 'वीर्या आम्' इति स्वरितकम्पः । संशितं क्षत्रं मे इति विशेषः मत्सम्बन्धि क्षत्रं संशितं जिष्णु चास्तु यस्याहं पुरोहितः सर्वकर्मणां पुरस्तान्निहितः अस्मि ॥

[16]उदेषामिति ॥ एषां आत्मीयानां बाहू उदतिरं अनेन कर्मणा उत्कर्षेण वर्धयामि । छान्दसो लुङ् । उद्वर्चो अथो इति विशेषः । वर्चो दीप्तिः अथो अपि च बलं च वर्ध-यामि अमित्रान् शत्रून् क्षिणोमि नाशयामि स्वान् आत्मीयान् जनान् पुत्रपौत्रादीन् उन्नयामि ब्रह्मणा अनेन परिबृढेन कर्म-

*सं. ४-१-१०.

मि ब्रह्मणाऽमित्रानुन्नयामि स्वाँ२ अहम् । [17]पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनश्श्रोत्रं म आगात्पुनः प्राणः पुनराकूतं म आगात्पुनश्चित्तं पुनराधीतं म आगात्* । वैश्वानरो मेऽदब्धस्तनूपा अवबाधतां दुरितानि विश्वा ॥ ५ ॥

पोषं दध्मसि पुरोहितश्चत्वारि च ॥ ५ ॥

---

णा । ' स्वाँ ' इति सानुनासिको दीर्घः ' दीर्घादटि समानपदे ' इति रुत्वं, 'भोभगो' इति यत्वं, 'लोपश्शाकल्यस्य' इति तस्य लोपः† ॥

[17]पुनर्मन इति ॥ शक्करी पञ्चपदा । पुनर्मे मम मनः आगात् आगच्छतु आयुश्च पुनरागच्छतु मम चक्षुरादि, प्राणाश्च आधीतं अध्ययनादि च मे मम पुनरागच्छतु, क्षतिहेतुषु पापेषु क्षाळितेषु इदानीं अक्षतान्येव मनआयुरादीनि आगच्छन्त्विति । तदेवाह—वैश्वानरः अग्निः मम अदब्धः केनचिदप्यनुपहिंसितः तनूनां शरीराणां पाता तद्विरोधीन्यपि सर्वाणि दुरितानि पापानि अवबाधताम् । ततस्तेन बाधितेषु मनआदीन्यागच्छन्तु ॥

इत्यारण्यके द्वितीये पञ्चमोनुवाकः.

---

*'प्राणः पुनराधीतं म आगात्' । इति द्राविडपाठः.

†सं. ४-१-१०.

[1]वैश्वानराय प्रतिवेदयामो यदीनृणꣳ संगरो देवतासु । स एतान्पाशान्प्रमुचन्प्रवेद स नो मु-

[1]वैश्वानरायेति त्रिष्टुभौ ॥ वैश्वानराय अग्नये प्रतिवेदयामः । कर्मणस्संप्रदानत्वम् । किम्पुनस्तदित्याह—यदीनृणं यदेव ऋणम् । ईमित्यवधारणे, तस्य नकारान्तादेशश्छान्दसः । देवतासु देवताविषये अस्माकं वर्तते, "यज्ञेन देवेभ्यः"* इति । उपलक्षितत्वात् त्रिप्रकारमृणं गृह्यते "त्रिभिरृणवा जायते"* इति, एतान् पाशानिति बहुवचनं चोपपद्यते । यद्वा—प्रजाब्रह्मचर्ययोरपि परम्परया देवर्णत्वं, तद्रहितस्य यज्ञानुत्पत्त्या देवर्णादमुक्तेः । सङ्गरः प्रतिज्ञारूपः, "त्रिभिरृणवा जायते"* इति श्रुत्या प्रतिज्ञातत्वात् । सङ्गीर्यत इति सङ्गरः, कर्मणि 'ऋदोरप्,' थाथादिना उत्तरपदान्तोदान्तत्वम् । यद्वा—गिरतेः करणे अप्, येन पुरुषो भक्ष्यते नाश्यते अनपकर्ता । यत् देवर्णं एवं प्रबलं सङ्गरत्वात् देवताविषयत्वाच्च, तद्वैश्वानरायैव प्रतिवेदयामः । यद्वा—यदिति हेतुः यस्मादेव हेतोः देवताविषयमृणं सङ्गरत्वेन प्रबलं, तस्मादेतस्मादेव प्रतिवेदयामः । कः पुनरस्य विशेष इति चेत्तत्राह—स एव खलु एतान् ब्रह्मचर्यादीन् बन्धकत्वेन पाशस्थानीयान् प्रमुचन् प्रमोक्तुं प्रवेद प्रकर्षेण जानाति । तुमर्थे छान्दसः कमुल्प्रत्ययः मकारस्य च नकारः । तस्मात् सः नः अस्मान् दुरितात् दुरितनिमित्तादृणात् मुञ्चातु मुञ्चतु, तन्निमित्ताच्च अवद्यात् मुञ्चातु मोचयतु । अव्ययपूर्वपदप्रकृतिस्वरत्वम्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वमित्येके, उभयमित्यपरे । यद्वा—दुरितादिति द्वितीया, आदादेशः, पाशान्मुञ्चतु दुरितानि च अवद्यात्

*सं. ६-३-१०.

**श्वातु दुरितादवद्यात् । वैश्वानरः पवयान्नः पवित्रैर्यत्संगरमभिधावाम्याशाम् । अनाजानन्मनसा याचमानो यदत्रैनो अव तत्सुवामि । [3]अमी ये सुभगे दिवि विचृतौ नाम तारके। प्रेहामृतस्य य-**

---

अवखण्डयतु मोचयतु । अवद्यादित्यत्र ‘ओतश्श्यनि’ इत्योकारलोपः, द्यतेर्लेट्याडागमः, वर्णव्यत्ययो वा ॥

[2]**वैश्वानर** इति ॥ **वैश्वानरः** अस्मान् **पवित्रैः** पावनैः मन्त्रहोमादिभिः **पवयात्** पुनातु । छान्दसात् पवयतेर्लेट्याडागमः । कथं पुनात्वित्याह—**यत्** येन पवनेन **सङ्गरं** पूर्वोक्तां प्रतिज्ञां ऋणनिर्मोचनात्मिकां **अभिधावामि** आभिमुख्येन प्राप्नोमि **आशां** बुद्धौ विपरिवर्तमानाम् । तात्स्थ्यात् ताच्छब्द्यम् । तच्च कथमित्याह—**यत्** येनैनसा अहं **अनाजानन्** ऋणनिर्मोचनोपायं सर्वप्रकारमजानन् तथाऽपि तं **मनसा याचमानः** अनृणो भूयासमिति मनसा प्रार्थयमानः एवंविधोऽस्मि संजातः **तत् एनः** पापं **अत्र** कर्मणि **अवसुवामि** नाशयामि, यथैवमेतद्भवति तथा अस्मान् पुनात्विति ॥

[3]**अमी** इति द्वे अनुष्टुभौ ॥ **अमी** अमू । लिङ्गवचनयोर्व्यत्ययः । **ये** उभे **सुभगे** शोभनरूपे शोभनधने वा । आद्युदात्तत्वं, ‘द्व्यचश्छन्दसि’ इत्युत्तरपदाद्युदात्तत्वम् । **दिवि** आकाशे ये अमू दृश्येते—इत्यङ्गुल्या दर्शयति—**विचृतौ** विचृन्नामधेये ये तारके मूलाख्ये—आभ्यां च पितरो लक्ष्यन्ते ‘विचृतौ नक्षत्रं पितरो देवता’* इति—**ते** एते **इह** कर्मणि आ-

---

*सं. ४-४-१०.

च्छतामेतद्बद्धकमोचनम् । [4]विजिहीर्ष्व लोकान्कृधि बन्धान्मुञ्चासि बद्धकम् । योनेरिव प्रच्युतो ग-

गत्य अमृतस्य प्रयच्छतां अमृतं प्रजातिः 'प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम्'* इति । कर्मणस्संप्रदानत्वात् चतुर्थ्यर्थे 'बहुलं छन्दसि' इति षष्ठी । एतत् खलु प्रजातिलक्षणममृतं बद्धकमोचनं सर्वलौकिकवैदिककुत्सितऋणात्मकबन्धनमुक्तिहेतु बन्धनं बद्धम् । कुत्सायां कन् । यद्वा—बन्धकानां पुरुषाणां ऋणात् मोचनं पितरः स्वयमागत्य प्रजातिप्रदानद्वारेण सर्वस्माद्दणान्मोचयन्त्वित्यर्थः ॥

[4]विजिहीर्ष्वेति ॥ बन्धान्मुमुक्षुं ऋषिरनुशास्ति—विजिहीर्ष्व बन्धादस्मादात्मानं मोचयित्वा विविधं विहर[1] पुण्येषु लोकेषु स्थापय । यद्वा—ऋणात्मकानि बन्धनानि विश्लेष्य हर विश्लथय । हरते र्लोट्, शपः श्लुः, धातोरीकारोऽन्तादेशश्छान्दसः । यद्वा—सन्नन्तस्य लोटि रूपं, 'छन्दस्युभयथा' इत्यार्धधातुकत्वादतो लोपः, शपो लुक्, विहर्तुमिच्छ । अथ विहरणार्थं लोकान् पुण्यान् कृधि कुरु । अथ तदर्थं बन्धात् ऋणात्मकादात्मानं बद्धकं मुञ्चासि मुञ्च । 'अनुकम्पायाञ्च' इति कः । ततश्चैवंकृते बन्धान्मोक्षे योनेः मातुरुदरात् प्रच्युतो गर्भ इव सर्वान् पथः पुण्यलोकमार्गान् अनुष्व वनुष्व सेवस्व । यद्वा—अनु या-चने, तानादिकोऽनुदात्तेत् । उभयत्रापि छान्दसो वर्णलोपः इष्कर्तारमितिवत् । याच्ञया तत्फलप्राप्तिर्लक्ष्यते । यद्वा—सर्वान् पथः मार्गान् अनुष्व अनुभव बन्धान्मुक्तः सर्वपथीनो भव । अस्तेर्व्य-

*ब्रा. १-५-५.

[1] 'उद्धर' इति पाठान्तरम्.

भ॑स्स॒र्वान्प॒थो अ॑नुष्व । [5]स प्र॑जा॒नन्प्रति॑ गृभ्णीत वि॒द्वान्प्र॒जाप॑तिः प्रथम॒जा ऋ॒तस्य॑ । अ॒स्माभि॑र्द॒त्तं ज॒रस॑ः प॒रस्ता॒दच्छि॑न्नं॒ तन्तु॒मनु॒ सञ्च॑रेम । [6]त॒तं

त्ययेनात्मनेपदम्, एकारावस्थायामेव 'उपसर्गप्रादुर्भ्यामस्तिर्यच्परः' इति षत्वं, 'श्नसोरल्लोपः' इति लोपः । अनितेर्वा विकरणादिव्यत्ययः, सर्वान् पथः अनुष्व प्राणय । यद्वा—सर्वान् पथो अनुवस । वसेर्लेटि सम्प्रसारणे उपसर्गान्तलोपः । यद्वा—सर्वान् पथः समन्तात् शब्दय सर्वत्र ख्यातो भव । वनोतेः 'आङि नुप्रच्छ्योरुपसङ्ख्यानम्' इत्यात्मनेपदम्, उपसर्गः ह्रस्वः ॥

[5]**स प्रजानन्** इत्यादयः षट् त्रिष्टुभः ॥ **सः प्रजापतिः प्रजानन्** अस्मत्प्रार्थनां प्रकर्षेण निरूपयन् **विद्वान्** सर्वार्थसाधनोपायज्ञः* **ऋतस्य** परमाक्षरस्य **प्रथमजाः** प्रथमः पुत्रः । 'जनसनखनक्रमगमः' इति विट्, 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । सः **अस्माभिर्दत्तं** हविरादिकं **प्रतिगृभ्णीत** प्रतिगृह्णातु । 'हृग्रहोर्भः' इति भत्वम् । किमर्थं? आह—यथा वयं **जरसः परस्तात्** देहपातोत्तारकाले **अच्छिन्नं** अविच्छिन्नं **तन्तुं** प्रजासन्तानं, तायतेऽस्मिन् पितेति तन्तुः, तं **अनुसंचरेम** अनुप्रविश्य अमृता वर्तेमहि । तदिदमुक्तं 'प्रजामनु प्रजायसे । तदु ते मर्त्यामृतम्'† इति 'प्रजाभिरग्ने अमृतत्वमश्याम्'‡ इति च जीवन्नेव पिता स्वप्रजासु तायमानो भवति, स कदाचित् प्रजादेहेष्वेव तायमानो निजदेहं जीर्णं जहाति वृक्ष इव जीर्णपर्णमिति सूचनार्थं जराग्रहणम् ॥

[6]ततमिति ॥ **एके** केचित् **ततं तन्तुं** अविच्छिन्नां पुत्रपौत्रा-

*'सर्वज्ञः' इति पाठान्तरम्. †ब्रा. १-५-५. ‡सं. १-४-४६.

तन्तुमन्वेके अनु संचरन्ति येषां दत्तं पित्र्यमायनवत्। अबन्ध्वेके ददतः प्रयच्छाद्दातुं चेच्छक्नवांꣳ-

दिपरम्परां अनु लक्षीकृत्य अनुसंचरन्ति अनुप्रविश्यामृता एव संचरन्ति सम्यक् चरन्ति यथाऽभिमतदानभोगयागसम्पादिनो भवन्ति । के पुनस्ते इत्याह—**येषां दत्तं पित्र्यं** श्राद्धादि विद्यते । विभक्तिव्यत्ययो वा—यैर्दत्तं पित्र्यम् । यद्वा—पित्र्यमित्युपलक्षणं, ऋषिपितृदेवानामृणत्रयं यैर्दत्तं प्रजाये । यद्वा—'अनुर्लक्षणे' इति हेतावनोः कर्मप्रवचनीयत्वं, यथा 'शाकल्यस्य संहितामनु प्रावर्षत्' इति तायमानं **तन्तुमनु** तायमानेन तन्तुना हेतुना केचित् सम्यक् चरन्ति पुण्येषु*लोकेषु येषां पुत्रादिभिर्दत्तं पित्र्यं विद्यते किमिव? **आयनवत्** आयनं अयनसाधनं पाथेयस्थानीयं तदिव । यद्वा—आयनं आगमः तद्वत् यथाशास्त्रं दत्तम् । यद्वा—आयनं अविच्छेदः तद्वत्, अविच्छेदेन दत्तम् । अथ **एके अबन्धु** अबन्धवः पुत्रादिरहिताः पितृऋणमोचनासमर्थाः अवस्तुभूता भवन्ति तामेवावस्तुतां द्योतयितुम्—अर्थवल्लक्षणविभक्त्यनुत्पादः—तेऽपि **ददतः** धनं दत्तवते उत्तमर्णाय तत् **चेत्** ऋणं **प्रयच्छात्** प्रयच्छन्ति—लेटि वचनव्यत्ययः—'अबन्धु' इत्यनेन वा सम्बद्ध्यते—**दातुं शक्नवांसः** शक्नुवन्तः, यदृणं दातुं शक्ताः तच्चेत्प्रयच्छन्ति, स्यादेवैषां स्वर्गः । एतदुक्तं—न पितृभ्यः किञ्चिद्गृहीतमृणं तेषामग्रहणपूर्वकमेव बन्धनाय भवति, अशक्यप्रतिपादनं च । अतस्तिष्ठतु तत् । यत्तु उत्तमर्णाद्गृहीतं तद्दातुं शक्यमेव यदि न प्रयच्छन्ति तदा सर्वात्मना न पुण्यलोकालोकनम् । ये तु दातुं शक्नुवन्तो दत्तवते धनं

*'अन्येषु' इति पाठान्तरम्.

सस्स्वर्ग एषाम् । [7]आरभेथामनु सꣳरभेथाꣳ समानं पन्थामवथो घृतेन । यद्वां पूर्तं परिविष्टं यदग्नौ तस्मै गोत्रायेह जायापती सꣳरभेथाम् । [8]यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहि-

प्रतिदद्युः तेषां यथाशक्ति ऋणमोक्षणे प्रवृत्तानां स्वर्गो भवत्येवेति । शकेर्लेटो व्यत्ययेन क्सुरादेशः, श्नोश्चाकारः ॥

[7]**आरभेथा**मिति ॥ अत्र चतुर्थे पादे 'जायापती' इति चत्वार्यक्षराण्यभिक्रान्तानि, विनैव च तेन ऋचः पूर्णत्वात् विशेष्याकाङ्क्षायां आमन्त्रितं पदमध्याहृत्य पठितम् । इदमेव च अभिक्रान्तत्वम् । अत एव पदात्परत्वेऽपि निघाताभावे षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । हे **जायापती ! आरभेथां** यज्ञादिकां पुण्यक्रियां घृतादिना । **अनुसंरभेथां** अवियुक्ताविव सन्ततं भवतम् । **समानं** साधारणं **पन्थां** पन्थानं देवयानं पितृयाणं वा अवथः रक्षतं, प्राप्नुतं वा । **यद्वां** युवयोः **पूर्तं** पितृभ्यो दत्तं अन्नादि **यदग्नौ परिविष्टं** उपरिप्रापितं हुतं भोजितं वा देवैः **तस्मै** तदर्थं तदविच्छेदेन यथा क्रियेतेत्येवमर्थं **संरभेथां** त्वरेथां न तूष्णीमासाथाम् । तदपि कुत्रोपयुज्यत इत्याह—**गोत्राय** गोत्रार्थं सर्वेऽपि गोत्रसम्भवाः पूर्वे च परे च सुकृतिनो यथा स्युः न युवामेवेति ॥

[8]**यदन्तरिक्ष**मिति पूर्वानुवाके गता पञ्चपदा ॥ *'उन्नो नेषत्' इति विशेषः । यदन्तरिक्षादिहिंसाप्रभवमेनः तस्मात् गार्हपत्योऽग्निः

*आ. २-३.११

**ऽसिम । अग्निर्मा तस्मादेनसो गार्हपत्य उन्नो-नेषद्दुरिता यानि चकृम । [9]भूमिर्माताऽदितिर्नो ज-नित्रं भ्राताऽन्तरिक्षमभिशस्त एनः । द्यौर्नः पिता पितृयाच्छं भवासि जामि मित्वा मा विवित्सि लोकात्* । [10]यत्र सुहार्दस्सुकृतो मदन्ते विहाय रो-**

मां मदीयांश्च **उन्नोनेषत्** उन्नयतु । यद्वा—नः अस्मान् उन्नयतु मां च विशेषेण । नयतेर्लेटि 'सिब्बहुळं लेटि' इति सिप् । यानि दुरितानि चकृम तेभ्यश्च उन्नयतु ॥

[9]**भूमिर्मातेति** ॥ **भूमिः** अस्माकं **माता** अधोभावात्, सर्व-पुष्टिनिर्माणाच्च, **अदितिः** देवानां माता **नः** अस्माकं **जनित्रं** आविर्भावहेतुः, **अन्तरिक्षं** भ्राता नित्यसहजत्वात्, **एनः** पापं **अभिशस्तः** शत्रुः द्वेष्यत्वात्, **द्यौः पिता** उपरिभावात्, निषे-कस्थानीयवृष्टिकारित्वात् । एवं पितृत्वस्य वैशिष्टयं प्रतिपादि[1]-तं, मात्रादिकीर्तनं तु प्रासङ्गिकम् । यथा द्यौरस्माकं सर्वेषां पिता, वयं तस्य प्रजाः, स सर्वेषां चास्माकं सुखस्थानं भवति एवं त्वमपि हे आत्मन् ! **पितृयात्** पितृत्वमिच्छन् बह्वीनां पिता भवन् **शं भवासि** सुखं प्राप्नुहि यद्वा—द्यौरिव सुखरूपो भव । पि-तृशब्दात् 'छन्दसि परेच्छायामपि' इति क्यच्, शतुश्छान्दसो नुमभावः शमित्येतत्सम्बन्धाद्वा । इदानीमपुत्राणां सुखाभावमाह—**जामि मित्वा** तूष्णीमनपत्य एव मित्वा मृत्वा **मा विवित्सि** नैव लप्स्यसे **लोकान्** पुण्यान् । मीञश्छान्दसं ह्रस्वत्वं, विन्दतेर्लेटि शपश्श्लुः ॥

[10]**यत्रेति** ॥ **सुहार्दः** शोभनाभिप्रायाः । हृदये भवो हार्दः,

*लोकानिति भट्टभास्करभाष्यानुसारी पाठः.

[1]प्रकृ.

**गं तन्वा२ स्वायाम् । अश्लोणाङ्गैरह्रुतास्स्वर्गे तत्र पश्येम पितरं च पुत्रम् । [11]यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत वा करिष्यन् । यद्देवानां चक्षुष्यागो अस्ति यदेव किंचं प्रतिजग्राहमग्निर्मा**

---

'हृदयस्य हृल्लेख' इति हृद्भावः, वचनव्यत्ययः । **सुकृतः** सुष्ठु कर्तारः । 'सुकर्मपापपुण्यमन्त्रेषु कृञः' इति क्विप् । एवम्भूता यत्र **मदन्ते** माद्यन्ति तृप्यन्ति **रोगं** हृद्रोगं **विहाय** त्यक्त्वा **स्वायां** आत्मीयायामेव **तन्वां** शरीरे पुत्राख्ये । 'उदात्तस्वरितयोः' इति स्वरितत्वे तस्य कम्पः 'उदात्तयणः' इति व्यत्ययेन न प्रवर्तते । **अश्लोणाङ्गैः** श्लोणो रोगविशेषः, तद्रहितैरङ्गैरित्यम्भूताः । विभक्तिव्यत्ययो वा, अश्लोणाङ्गाः । **अह्रुताः** केनचिदप्यवञ्चिताः । ह्वृ कौटिल्ये 'ह्रुह्वरेश्छन्दसि' इति ह्रुभावः । यत्रैवम्भूता एवमुक्तप्रकारं माद्यन्ति **तत्र स्वर्गे** स्वर्गस्थानीये आयुष्मत्पुरुषे सन्ताने जनित्वा **पितरं पुत्रं** च युगपत् **पश्येम** 'अच्छिन्नं तन्तुमनु सञ्चरेम'* इति यावत् ॥

[11]**यदन्नमद्मीति** द्वे पञ्चपदे शाक्वर्यौ ॥ हे **देवाः! यदन्नं अनृतेन** अन्यायेन **अद्मि** भुक्तवानस्मि । कथमनृतत्वमित्याह— **दास्यन्निति** प्रतिदास्यामीत्युक्त्वा किंचिद्धनमादाय भुक्त्वा न प्रतिददाति किञ्चिदप्रतिदास्यन्नेव बलादादाय भुङ्क्ते, किंचित्तु प्रत्युपकरिष्यामीत्युक्त्वा गृहीत्वा तमर्थं भुक्त्वा न किंचित्प्रत्युपकरोति, एवमनृतेन यदन्नं भुक्तवानस्मि यच्च **आगः** अपराधः पापलक्षणं **देवानां चक्षुष्यस्ति** देवानां चक्षुर्गतमासीत् मामकम् ।

---

*आ. २-६.५

**तस्मा॑दनृ॒णं कृ॑णोतु । [12]यद॒न्नम॒द्मि बहु॒धा वि॒रूपं॒ वास॑ो हि॒र॑ण्यमु॒त गाम॒जामवि॑म् । यद्दे॒वानां॒ चक्षु॒ष्याग॑ो अस्ति॒ यद्दे॒व किंचं॑ प्रतिज॒ग्राह॒मग्निर्मा॒ तस्मा॑दनृ॒णं कृ॑णोतु । [13]यन्म॒यां मन॑सा वा॒चा**

किम्पुनस्तदित्याह—**यदेव किंच** किंचित् अप्रतिग्राह्यमपि शूद्रादिधनं **प्रतिजग्राहं** प्रत्यगृह्णां तदकृतप्रायश्चित्तं देवानां चक्षुषि 'यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः'* इति अविस्मृतमेवास्मदपराधत्वेनाद्यापि तिष्ठतीति भावः । गृह्णातेर्लिटि उत्तमपुरुषैकवचने छान्दसो मकारोपजनः, लिट्स्वरप्रसङ्गस्तु †.... । यद्वा—छान्दसो लङ्, शपः श्लुः, वर्णव्यत्ययेन धातोर्दीर्घत्वं, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावः । तस्मात्सर्वस्मादपि पापान्मामनृणं करोतु । ल्यब्लोपे पञ्चमी । तस्मान्निर्मुच्य मामनृणं करोत्विति ॥

[12]**यदन्नमिति** ॥ **यदन्नं बहुधा विरूपं** बहुप्रकारं दुष्टं, किञ्चित्स्वयं दुष्टं यदप्रतिग्राह्यं यच्चोच्छिष्टादि, किञ्चिच्च दुष्टात्प्रतिगृहीतं, एवं बहुधा विरूपं यदन्नं भुक्तवानस्मि । अथोदाहरणार्थं कानिचिद्दर्शयति—**वासो हिरण्यं** वा अपि वा **गामजां** वा **अविं** वाऽन्यद्वा । **यद्देवनामित्यादि** । गतम् ॥

[13]**यन्म** इत्यनुष्टुप् ॥ **यत् मे** मम सम्बन्धिना **मनसा वाचा** वा **कदाचन** जन्मान्तरे वा इहैव वा जन्मनि **कृतमेनः** पापमिदानीं विद्यते तस्मात्**सर्वस्मात् मा मोग्धि मुञ्च ईळितः** अस्माभिस्सर्वैर्वा स्तुतः । मुचेर्लेटि शपो लुक्, 'वा छन्दसि' इति अपि-

*श्रीमद्रामायणे (२-१०२-३०,१०३-१५.) †अत्र ग्रन्थो गळित इव भाति.

कृतमेनः कदाचन । सर्वस्मात्तस्मान्मेळितो मोग्धि*
त्वँ हि वेत्थ यथातथम् ॥ ६ ॥

चरेम पुत्रँ षट्च ॥ ६ ॥

[1]वातरशना ह वा ऋषयश्श्रमणा ऊर्ध्वमन्थिनो बभूवुस्तानृषयोऽर्थमायꣳस्ते निलायमचरꣳ-

---

त्त्वाभावेन ङित्त्वाभावात् गुणः । हे अग्ने! त्वं हि यथातथं वेत्थ जानासि वस्तु । तथात्वमनतिक्रम्य यथातथं, 'यथासादृश्ये' इत्यव्ययीभावः; 'अव्ययीभावश्च' इति नपुंसकत्वात् ह्रस्वत्वम् ॥

इत्यारण्ये द्वितीये षष्ठोऽनुवाकः.

---

[1]अथैतेषां कूश्माण्डानां ब्राह्मणं—**वातरशना** इति ॥ **वातरशना** नाम ऋषयः दर्शनवन्तो **बभूवुः** । रशनाशब्देन बन्धनत्वाच्छरीरमुच्यते। बलवत्त्वाद्वा । तनुत्वाद्वाततुल्यशरीराः वातरशनाः । यद्वा—वाताशनाः वातरशनाः । रेफोपजनश्छान्दसः । 'ततोऽरुणाः केतवो वातरशना ऋषय उदतिष्ठन्'† इति ये पूर्वमुक्ताः त एव गृह्यन्ते । **श्रमणाः** श्रमवन्तः महातपसः । पामादिर्द्रष्टव्यः । यद्वा—श्रमेः छान्दसो युच्, श्रमशीलाः **श्रमणाः** । **ऊर्ध्वमन्थिनः** ऊर्ध्वं मथ्नन्तीत्यूर्ध्वमन्थिनः अधोमन्थनरहिताः ऊर्ध्वरेतस

---

*'यन्मे मनसा वाचा कृतमेनः कदाचन । सर्वस्मान्मेळितो मोग्धि' इति भट्टभास्करभाष्यानुसारी द्राविडपाठः.

†आ. १-२३.

स्तेऽनुप्रविशुः कूश्माण्डानि ताꣳस्तेष्वन्वविन्दञ्छ्रद्धया च तपसा च [2]तानृषयोऽब्रुवन्कथा निलायं चरथेति त ऋषीनब्रुवन्नमो वोऽस्तु भगवन्तोऽस्मि-

इत्यर्थः । 'णिनि' इति पूर्वपदप्रकृतिस्वरत्वम्, विभक्त्युदात्तत्वं तु छान्दसम् । अथ **तान्** अन्ये **ऋषयः अर्थं** अर्थयितुं **आयन्** प्राप्ताः । अर्थयतेर्णमुलि णिलोपे उदात्तनिवृत्तिस्वरेण णमुल उदात्तत्वम् । अथ ते वातरशनाः तानृषीन् समागतान् दृष्ट्वा **निलायं** निलीय कुत्रचिदन्तर्हिताः **अचरन्** । निलीयतेर्णमुल् । क्व निलीनाः ? इत्याह—ते वातरशनाः **कूश्माण्डानि** 'यद्देवाः'* इत्यादीननन्तरोक्तांश्चतुरोऽनुवाकान् **अनुप्रविशुः** । लिटि द्विर्वचनाभावश्छान्दसः । सूक्ष्मदेहत्वात्तत्र अनुप्रविश्य स्थिताः । यद्वा—तपोबलेन कूश्माण्डानि देहत्वेन अनुप्रविश्य तदभिमानिनोऽभवन् । कूश्मितं प्रतापितं[1] ब्रह्माण्डं यत्तेजसा तानि कूश्माण्डानि । अथ **तान्** वातरशनान् **तेष्वन्वविन्दन्** तेष्ववस्थितानन्विष्यानन्तरमलभन्त **श्रद्धया च तपसा च** ब्रह्मचर्यानशनादिना कथञ्चिदन्वविन्दन् ॥

[2]अथ **तान्** वातरशनान् **ऋषयोऽब्रुवन् कथा** कथं **निलायं** निलीय अदृश्यमानदेहाः **चरथ** एतेषु **इति** । 'था हेतौ च' इति था । केन प्रकारेणास्माकमदृश्या एतावन्तं कालं चरथस्म ? । यद्वा—केन हेतुना निलीनाः चरथस्म ? । प्रश्नद्वयमपि स्तुत्यर्थमेव । अथ ते वातरशनाः **ऋषीन्** तथावादिनः **अब्रुवन्—नमो वोऽस्तु** युष्मभ्यं महात्मभ्यः यैः स्मो विदिताः हे

*आ. २ ;३-६.

[1]प्रकम्पितं.

न्धाम्नि केनं वस्सपर्यामेति तानृषयोऽब्रुवन्पवित्रं नो ब्रूत येनारेपसस्स्यामेति त एतानि सूक्तान्यपश्यन् [3]यद्देवा देवहेळनं यददीव्यन्नृणमहं बभूवायुष्टे विश्वतो दधदित्येतैराज्यं जुहुत वैश्वानराय प्रतिवेदयाम इत्युपतिष्ठत यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मोक्ष्यध्व इति [4]त एतैरजुहवुस्तेऽरेपसोऽ-

---

भगवन्तः! ऐश्वर्यादिमन्तः । अस्मिन्धाम्नि स्थाने वर्तमाना वयं वः युष्मान् केन सपर्याम किमभिमतं कृत्वा युष्मान् पूजयेम । सपर पूजायां कण्ड्वादिः । अथ तान् वातरशनान् ऋषयोऽब्रुवन् अर्थनीयमाविष्कृतवन्त इति । किं तदिति—पवित्रं नो ब्रूत पवित्रं व्याचक्षत, येन अरेपसः अपापाः स्याम तत् पवनसाधनं नो ब्रूतेति । अथ तैरेवं प्रार्थिताः ते वातरशनाः एतानि सूक्तान्यपश्यन् किमेभ्यो ब्रूयामेति विचारयन्तोऽनन्तरमेव एतानि सन्निहितानि सूक्तानि कूश्माण्डाख्यान्यपश्यन् । तानि च 'यद्देवाः'* इत्यादयश्चत्वारोऽनुवाका इत्युक्तम् ॥

[3]अथ एतद्दर्शनानन्तरमेभ्य एतानि वक्तव्यानीति कृतनिश्चयाः तत्प्रयोगक्रमं दर्शयन्ति—यद्देवा इत्यादिभिस्त्रिभिरनुवाकैः आज्यं जुहुत । वैश्वानरायेति चतुर्थेनोपतिष्ठध्वम् । एवं कृत्वा यत् भ्रूणहत्याया अर्वाचीनं एनः पापं तस्मान्मोक्ष्यध्व इति प्रयोगक्रमं फलं च ऊचुरिति । वेदत्रयभृत् भ्रूणः, वेदवेदाङ्गविदित्यन्ये ॥

[4]अथ तेऽपि एतैः हुत्वा अरेपसोऽभवन् ॥

---

*आ. २; ३-६.

भवन्क[5]र्मादिष्वेतैर्जुहुयात्पूतो देवलोकान्थ्समश्नु-
ते ॥ ७ ॥

[1]कूश्माण्डैर्जुहुयाद्योऽपूत इव मन्येत [2]यथा स्तेनो

---

[5]कर्मादिषु आरप्स्यमानकर्मारम्भेषु । काठकप्रकरणात् काठकाग्निष्वित्यन्ये । बोधायनमतात्तु सर्वेष्वपि, यथा 'अग्न्याधेये पूर्णाहुतिं हुत्वा, अग्निहोत्रे दशहोतारं हुत्वा, दर्शपूर्णमासयोश्चतुर्होतारं, चातुर्मास्येषु पञ्चहोतारं, पशुबन्धे षड्ढोतारं, सौम्ये सप्तहोतारं हुत्वा कूश्माण्डैः जुहुयात्' इति । अथ पूतो देवलोकान् समश्नुते यस्यादावेतानि हूयन्ते तस्य कर्मणः फलं सम्यक्प्राप्नोति* ॥

इत्यारण्यके द्वितीये सप्तमोनुवाकः.

---

[1]कूश्माण्डैर्जुहुयादिति ॥ उक्तं 'कर्मादिष्वेतैर्जुहुयात्'† इति । इदानीमन्यत्रापि विधातुमाह—तत्तत्कर्मयोग्यमात्मानं सन्देहात् यो ज्ञातुं न शक्नुयात् सोऽप्येतैर्जुहुयात् । क्षपितसर्वपापः पूतो देवलोकान् समश्नुत इत्येवमर्थो होमः कर्तव्यः, न कर्मादिष्वेवेति ॥

[2]अथैषां महापापशमनसामर्थ्यं दर्शयितुमाह—यथा स्तेनः ब्राह्मणस्वर्णापहारी यथा च भ्रूणहा व्याख्यातः† एवं एताभ्यां

---

*"शकारस्य नकारेण पाठस्स्यात्काठके सदा ।
अन्यत्र तु ञकारेण तैत्तिरीये व्यवस्थितः ॥"
इत्यधिकपाठः क्वचित् दृश्यते.

†आ. २-७.[3]

यथा भ्रूणहैवमेष भवति योऽयोनौ रेतस्सिञ्चति [3]यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते [4]यावदेनो दीक्षामुपैति दीक्षित एतैस्सततिं जुहोति [5]संवथ्सरं दीक्षितो भवति संवथ्सराद्देवात्मानं पु-

---

तुल्य एनसा **एष भवतीति** । कः? **योऽयोनौ रेतस्सिञ्चति**, नञिवयुक्तन्यायेन योनिसदृशी योनिरयोनिः योनिरात्मीया, तत्सदृशी सवर्णा योनिः अयोनिः, तत्र रेतस्सेक्ता भ्रूणहतुल्य इति । सोऽपि पूतो देवलोकान् समश्नुत इत्येव ॥

[3]यस्मादेवं तस्माद्यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते कर्ता । ननु यद्यर्वाचीनो भ्रूणघ्नो मुच्यते कथमयोनौ रेतस्सेक्ता मुच्यते तस्यापि ह्यातिदेशिकं भ्रूणहत्वमस्ति । अथ वचनान्मुच्यते अर्वाचीनो मुच्यत इति व्याहन्येत । नैष दोषः; निषेधे मुख्यस्यैव ग्रहणात्, तदातिदेशिको भ्रूणहा मोक्ष्यत इति ॥

[4]ननु कथं अतुल्यानां* महतां च पाप्मनां तुल्यं प्रायश्चित्तं स्यादित्यत आह—**यावदिति** ॥ यावत्प्रमाणमस्य **एनो** भवति स्वल्पं महद्वा तदनुरूपां वक्ष्यमाणां संवत्सरादिकालां **दीक्षां** स्वल्पां महतीं वा उपेयात्, स्वल्पे स्वल्पां महति महतीं दीक्षामुपेयादिति यावत् । ततो दीक्षितः दीक्षाऽनुगुणं संवत्सरं त्र्यहं वा **एतैः सतति** सन्ततं दिनेदिने **जुहोति** आज्येन । ततिरविच्छेदः तत्सहितं सतति । यद्वा—समाना ततिः सततिः तद्वत् सतति । मत्वर्थीय इकारः, अन्तोदात्तत्वात् संहितायामादिस्वरितत्वम् ॥

[5]अथ दीक्षाभेदान्विदधाति—**संवत्सरमिति** ॥ एषामेव होमानां

---

*‘ स्वल्पानां ’ इति पाठान्तरम्.

नीते [6]मासं दीक्षितो भवति यो मासस्स संवथ्स-
रस्संवथ्सरादेवात्मानं पुनीते चतुर्विꣳशतिꣳ रा-
त्रीर्दीक्षितो भवति चतुर्विꣳशतिरर्धमासास्संवथ्स-
रस्संवथ्सरादेवात्मानं पुनीते द्वादश रात्रीर्दीक्षितो
भवति द्वादश मासास्संवत्सरस्संवत्सरादेवात्मानं
पुनीते षड्रात्रीर्दीक्षितो भवति षड्वा ऋतवस्संवथ्स-
रस्संवथ्सरादेवात्मानं पुनीते तिस्रो रात्रीर्दीक्षितो
भवति त्रिपदा गायत्री गायत्रिया एवात्मानं
पुनीते [7]न माꣳसमश्नीयान्न स्त्रियमुपेयान्नोपर्या-
सीत जुगुप्सेतानृता[8]त्पयो ब्राह्मणस्य व्रतं य-

---

दीक्षाभेदाद्भेदः । संवत्सरादिति ल्यब्लोपे पञ्चमी, संवत्सरमेवानुप्रविश्य यावत्संवत्सरपदार्थं पूतो भवति ॥

[6]मासमित्यादि ॥ गतम् ॥

[7]**न मांसमश्नीयादित्यादि** दीक्षाव्रतलक्षणम् । मांसस्य अनुमतस्य निषेधः । ऋतावपि **स्त्रियं नोपयात्** । **उपरि** खट्वादौ नासनादि **कुर्यात्** । **अनृतात्** आत्मानं **जुगुप्सेत**, नानृतं वदेदिति यावत् ॥

[8]ब्राह्मणादीनां दीक्षितानां पयआदीनि व्रतानि भोजनानि ॥

वाग् शंऽन्यस्यामिक्षा वैश्यस्या[9] थौ सौम्येऽप्यध्वर एतद्व्रतं ब्रूया[10]द्यदि मन्येतोपदस्यामीत्योदनं धाना-स्सक्तून्घृतमित्यनुव्रतयेदात्मनोऽनुपदासाय ॥ ८ ॥

[1]अजान्ह वै पृश्नीꣳस्तपस्यमानान्ब्रह्म स्वय-म्भ्वभ्यानर्षत्त ऋषयोऽभवन्तदृषीणामृषित्वं तां दे-

[9]सौम्येऽपीत्यादि स्तुत्यर्थम् । एवं नाम प्रशस्तं पयआदि यत् सौम्येऽप्यध्वरे एतदेव व्रतं वक्तु*मर्हतीति ॥

[10]अथ **यदि मन्येत** दीक्षमाणः **उपदस्यामीति** अनेन व्रतेन वर्तमानोऽहं उपक्षीये इति तदा **ओदनादिकं अनुव्रतयेत्** पय-आदेरनन्तरमभ्यवहरेत् ॥ व्रताद्भोजने "मुण्डमिश्र" इति णिच् । **अनुपदासाय** अनुपक्षयाय । दसु उपक्षये ॥

इति द्वितीये अष्टमोनुवाकः.

---

[1]अत्र स्वाध्यायब्राह्मणमिति समाख्यानात् स्वाध्याये एव विधातव्ये तदपेक्षितयोर्यज्ञोपवीतसन्ध्योपासनयोराद्ययोरनुवाकयोर्वि-धानम् । ततः शुचिनाऽध्येतव्यमिति शुचित्वाय प्रायश्चित्तानि कूश्माण्डानि विहितानि । इदानीं प्रधानभूतमध्ययनात्मकं ब्रह्मयज्ञं विधातुमाह—**अजानिति** ॥ न कदाचिदपि जायन्त इत्यजाः नित्याः पृश्नयः शुक्लाः निर्मलाः **तपस्यमानान्** तपश्चरतः ब्रह्म वेदः, तत् **स्वयंभु** स्वेन रूपेण स्वयमेव भवति न कदाचिदपि

*'कर्तुमर्हमिति' इति पाठान्तरम्.

वतामुपातिष्ठन्त यज्ञकामास्त एतं ब्रह्मयज्ञमपश्यन्तमाऽहरन्तेनायजन्त [2]यदृचोऽध्यगीषत ताः पयआहुतयो देवानामभवन् यद्यजूꣳषि घृताहुतयो यत्सामानि सोमाहुतयो यदथर्वाङ्गिरसो मध्वाहुत-

भिद्यते, तत् **अभ्यानर्षत्** आभिमुख्येन प्रत्यक्षमागच्छत् । ऋष गतौ । लिटि तकारोपजनश्छान्दसः, "तस्मान्नुड्द्विहलः" इति नुट् । यद्वा—लङि आड्गो नकारोपजनः । ततः प्रभृति ते **ऋषयोऽभवन्** सा ऋषिजातिरासीत् । **तत्** एतत् **ऋषीणां ऋषित्वं**, अर्षणादृषयः ब्रह्मणा अभ्यागतत्वात् । ऋषेः कर्मणि "इक्कृष्यादिभ्यः" इति इक्प्रत्ययः[1] । अथ ते **तां देवतां** ब्रह्मात्मिकां यज्ञकामाः ब्रह्मयज्ञं कामयमानाः **उपातिष्ठन्त** आराधयन् । अथ ते उपतिष्ठमानाः **एतं ब्रह्मयज्ञं** स्वाध्यायात्मकं **अपश्यन्, तमाहरन्** अन्वतिष्ठन्, **तेनायजन्त** तेन देवान् अपूजयन् । यद्वा—**तेनायजन्त,** अविशेषात् स्वाध्यायाध्ययनात्मना यागेन सर्वयज्ञफलान्यवाप्नुवन्, सर्वैर्यागैरिष्टवन्तोऽभवन्नित्यर्थः, 'यं यं क्रतुमधीते तेनतेनास्येष्टं भवति'* इति ॥

[2]इदानीं स्वाध्यायाध्ययनं यज्ञत्वेन रूपयति—**यदृचोऽध्यगीषत** अधीतवन्तः । इङो 'विभाषा लुङ्लृङोः' इति गाङादेशः, 'गाङ् कुटादिभ्यः' इति ङित्त्वम् । **ताः पयआहुतयः** क्षीराहुतयः **देवानामभवन्** इज्यमानानां देवतानां पयआहुतिवत्तृप्तिहेतवोऽभवन् अधीयमाना ऋचः । सर्वत्र दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्, मेदाहुतिवर्जम् । **यद्यजूंषि** अध्यगीषतेत्येव **घृताहुतयः** देवानामभवन्नित्येव । एवं सर्वत्र । **सामानीति** तद्योनय

[1]इन्प्रत्ययः नित्त्वं च.

*आ. २-१५.

यो यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथां नाराशꣳसीर्मेदाहुतयो देवानामभवन्ताभिः क्षुधं पाप्मानमपाघ्नन्नपहतपाप्मानो देवास्स्वर्गं लोकमायन्ब्रह्मणस्सायुज्यमृषयोऽगच्छन् ॥ १ ॥

---

ऋचः । अथर्वाङ्गिरस इति अथर्वाङ्गिरोभिः प्रोक्ता अथर्वाङ्गिरसः अथर्ववेदमन्त्राः । **ब्राह्मणानि** कर्मचोदनाः 'वायव्यं श्वेतमालभेत'* इत्येवमादयः । तच्छेषश्चार्थवादः निन्दा प्रशंसा परकृतिः पुराकल्पश्च ब्राह्मणग्रहणेन गृह्यन्ते । **इतिहासाः** महाभारतादयः । **पुराणानि** ब्रह्माण्डादीनि । यद्वा—**इतिहासाः** परकृतयः 'देवासुरास्संयत्ता आसन्'[1] इत्यादयः । **पुराणानि** पुराकल्पाः 'इदं वा अग्रे'[2] इत्यादयः । **कल्पाः** कल्पसूत्राणि प्रयोगप्रतिपादकानि । **गाथाः** गायतिचोदिता मन्त्रविशेषाः 'यमगाथाभिः परिगायति'[3] इत्यादिभिः । ताश्च 'योऽस्य कौष्ठ्यजगतः'[4] इत्यादयः । पृथग्वचनं फलविशेषार्थम् । एवं नाराशंसीष्वपि । नराशंसस्येमा नाराशंस्यः, 'होता यक्षन्नराशंसं'[5] इत्याद्याः । **मेदाहुतय** इति छान्दसस्सलोपः । ततः **ताभिः** आहुतिभिः **क्षुधं पाप्मानं** च देवाः **अपाघ्नन्** । यद्वा—क्षुधात्मकं पाप्मानं अपाघ्नन् । **अपहतपाप्मानश्च** स्वर्गं गताः, **ऋषयश्च** **ब्रह्मणस्सायुज्यं** गताः ॥

इति द्वितीये नवमोनुवाकः.

---

*सं. २-१-१.

[1] सं. १-५-१. [2] ब्रा. २-२-९. [3] सं. ५-१-८. [4] आ. ६-५. [5] ब्रा. २-६-११.

[1]पञ्च॒ वा ए॒ते म॑हाय॒ज्ञास्स॑त॒ति प्रता॑यन्ते सत॒ति सं॑तिष्ठन्ते देवय॒ज्ञः पि॑तृय॒ज्ञो भू॑तय॒ज्ञो म॑नुष्य॒य॒ज्ञो ब्र॑ह्मय॒ज्ञ इ॒ति [2]यद॒ग्नौ जु॒हो॑त्य॒पि स॒मिधं॒ तद्दे॑वय॒ज्ञस्सं॑तिष्ठते॒ [3]यत्पि॒तृभ्यं॑स्स्व॒धाक॒रो॑त्यप्य॒प-

[1]एवं ब्रह्मयज्ञं स्तुत्वा इदानीं तं विधित्सन् प्रसङ्गेन पञ्चमहायज्ञान् विदधाति—**पञ्च वा** इति। नित्या **एते** यज्ञाः। महत्त्वविशेषणं स्तुतिमात्रम्। यथाऽऽहुः 'तेषां महायज्ञा महासत्राणीति संस्तुतिः'* इति। **सतति** सततं दिनेदिने **प्रतायन्ते** क्रियन्ते, दिनेदिने **सन्तिष्ठन्ते** समाप्यन्ते च, न यज्ञान्तरवदन्यस्मि-न्नहन्यारभ्यन्ते अन्यस्मिन्नहनि समाप्यन्ते। अथ तान् दर्शयति—**देवयज्ञ** इत्यादि॥

[2]अथ तेषां लक्षणमाह—**यदग्नावित्यादि**॥ **अपिसमिधमिति**। मुख्यस्यान्नस्य घृतादेर्हविष्यस्याभावे समिधमपि जुहोतीति भावः, भावे तु तदेव प्रशस्तमिति। प्रयोगश्च देवेभ्यः स्वाहेति, यथाऽऽहुः 'देवेभ्यस्स्वाहाकार आकाष्ठात्'† इति॥

[3]**स्वधाकरोतीति**॥ स्वधाशब्देन होमद्रव्यस्य प्रदानम्‡। यद्वा—होमद्रव्येण पितृभ्यस्स्वधाकरणं अमृतसम्पादनम्। **अप्यप** इति। मुख्याभावे उदकमपीति। पितृभ्यस्स्वधाऽस्त्विति प्रयोगः॥

[4]**भूतेभ्यो** बलिमिति। वैश्वदेवव्यतिरिक्तमिदम्§। भूतेभ्योऽस्त्विति प्रयोगः॥

*आप. ध. १-१२-१४. †आप. ध. १-१३-१.

‡'स्वधाकरणम्' इत्यधिकः पाठः क्वचित्.

§'अयं बलिर्वैश्वदेवानुष्ठानादूर्ध्वं बहिर्देशे श्ववायसादिबोधकबलिप्रदानं, तद्भूतयज्ञः'। इत्यधिकः पाठः माधवीयादुद्धृत इव भाति.

स्तत्पितृयज्ञस्संतिष्ठते [4]यद्भूतेभ्यो बलिꣳ हरति त-
द्भूतयज्ञस्संतिष्ठते [5]यद्ब्राह्मणेभ्योऽन्नं ददाति तन्मनु-
ष्ययज्ञस्संतिष्ठते [6]यत्स्वाध्यायमधीयीतैकामप्यृचं
यजुस्साम वा तद्ब्रह्मयज्ञस्संतिष्ठते [7]यदृचोऽधीते
पयसः कूल्या अस्य पितॄन्थ्स्वधा अभि वह-
न्ति यद्यजूꣳषि घृतस्य कूल्या यत्सामानि
सोम एभ्यः पवते यदथर्वाङ्गिरसो मधोः कू-
ल्या यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा
नाराशꣳसीर्मेदसः कूल्या अस्य पितॄन्थ्स्वधा अ-

---

[5]'ब्राह्मणेभ्यः' इति त्र्यवरेभ्यो यथाशक्ति दद्यात्, वैश्वदेवोत्तरकालं अग्रदानव्यतिरिक्तं यत् 'अतिथीनेवाग्रे भोजयेत्'* इत्युच्यते ॥

[6]**यत्स्वाध्याय**मिति ॥ वक्ष्यमाणेन ब्रह्मयज्ञविधिना । **एका**मिति । प्रश्नानुवाकादिमुख्यासम्भवे, यथोक्तं 'आसूक्तादानुवाकाद्वा ब्रह्मयज्ञो विधीयते' इति । **यजुस्साम वे**ति । एकमपीति गम्यते ॥

[7]**यदृच** इत्यादि पृथक्त्वेन स्तुतिः ॥ **पयस** इत्यादि । पयसा पूर्णाः **कूल्याः** कूलार्हाः महानद्यः स्वधा भूत्वा **अस्य** अध्येतुः **पितॄन्** अभिलक्ष्य वहन्ति यत्र पितरः तत्र वहन्ति । 'अभिरभागे' इति कर्मप्रवचनीयत्वम् । **यद्यजूंषी**ति, 'अधीते' इत्येव । **घृतस्य कूल्या** इति, 'पितॄन् स्वधा अभिवहन्ति'

---

*आप. ध. २-४-११.

भि वंहन्ति [8]यदृचोऽधीते पयंआहुतिभिरेव तद्दे-
वाꣳस्तर्पयति यद्यजूꣳषि घृताहुतिभिर्यत्सामानि
सोमाहुतिभिर्यदथर्वाङ्गिरसो मध्वाहुतिभिर्यद्ब्राह्म-
णानीतिहासान्पुराणानि कल्पान्गाथा नाराशꣳसी-
र्मेदाहुतिभिरेव तद्देवाꣳस्तर्पयति त एनं तृप्ता आ-
युषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेना-
न्नाद्येन च तर्पयन्ति ॥ १० ॥

[1]ब्रह्मयज्ञेनं यक्ष्यमाणः प्राच्यां दिशि ग्रामादच्छ-

---

इत्येव । एवं सर्वत्र । सोम इति पितृभ्यः सोमो धारावान् भूत्वा प्रवहति । गतमन्यत् ॥

[8]पुनरपि यदृचोऽधीते इत्यादि स्तुत्यन्तरार्थम् ॥ ते इति पितरो देवताश्च पयःप्रभृतिभिः तृप्ताः एनं अध्येतारं आयुरादिप्रदानेन तर्पयन्ति । तस्माद्ब्रह्मयज्ञः कर्तव्य इति विधिरनुमीयते ॥

इति द्वितीये दशमोनुवाकः.

---

[1]अथ ब्रह्मयज्ञस्य प्रयोगक्रममाह—ब्रह्मयज्ञेनेति ॥ अच्छदिर्दर्श इति । छदिर्दृश्यते यत्र स छदिर्दर्शो देशः ततोऽन्योऽच्छदिर्दर्शः । छान्दसमाद्युदात्तत्वम् । यद्वा—असमास एवायं, छदिर्दर्शनेति (?) । छान्दसो नलोपः । अकार एव वा प्रतिषेधवा-

दि॒ग्दृ॒॑श उदी॑च्यां प्रागुदी॒च्यां वो॑दि॒ते आ॑दि॒त्ये द॑क्षिण॒त उ॑प॒वीयो॑पवि॒श्य हस्ता॑ववनि॒ज्य त्रिराचा॑मे॒द्विः परि॑मृ॒ज्य स॒कृदु॑प॒स्पृश्य॒ शिर॒श्चक्षु॑षी नासि॑के॒ श्रोत्रे॒ हृद॑यमा॒लभ्य॒ [2]यत्त्रि॒राचा॑म॑ति॒ तेन॒ ऋच॑ः प्रीणा॑ति॒ यद्विः परि॑मृ॒जन्ति॒ तेन॒ यजू॑ꣳषि॒ यत्स॒कृदु॑प॒स्पृश॑ति॒ तेन॒ सामा॑नि॒ यत्स॒व्यं पाणिं॑ पा॒दौ

ची । प्रागुदीच्यामिति । कोणदिशि, ग्रामादित्येव । 'दिङ्नामान्यन्तराळे' इति समासः । उदित इति । अह्न्येव कर्तव्यं प्रातराशात् प्रागेव । दक्षिणत इति । यज्ञोपवीतं कृत्वा । कुत एतत्? प्रथमानुवाकोक्तं यज्ञोपवीतलक्षणं 'दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतं'* इति । तदनेन स्मार्यते 'दक्षिणत उपवीय' इति । उपविश्य आसित्वैव । हस्तावपि आमणिबन्धाद्धस्तौ तावत् अवानिज्य प्रक्षाळ्य । पादयोरप्युपलक्षणम् । सामान्यप्राप्तव्यतिरेकेण क्षाळनान्तरमिदं हस्तपादस्यैतत्कर्माङ्गम् । त्रिरिति । त्रिरपः पिबेत्, अन्तश्शुद्ध्यर्थम् । द्विःपरिमृज्येति । ओष्ठाविति शेषः, ताभ्यामेव पानात् । सकृदुपस्पृश्येति । सकृदपां स्पर्शनमात्रं कृत्वा । शिर इति । शिरआदीनि पृथगनेन क्रमेण आलभ्य स्पृष्ट्वा । हृदयमिति । सामर्थ्यात् हृदयप्रदेशो लक्ष्यते । अत्र च शिरआदिषु प्रत्येकं सकृदुपस्पृशेदपः शुद्ध्यर्थं अदृष्टार्थं वा ॥

[2]अथ 'त्रिराचामेत्' इत्यादि यदुक्तं तस्यार्थवादः, विशिष्टा-

*आ. २-१.

प्रोक्षति यच्छिरश्चक्षुषी*नासिके श्रोत्रे हृदयमालभते तेनाथर्वाङ्गिरसो ब्राह्मणानीतिहासान्पुराणानि कल्पान्गाथा नाराशꣳसीः प्रीणाति [3]दर्भाणां महदुपस्तीर्योपस्थं कृत्वा प्राङासीनस्स्वाध्यायमधीयीतापां वा एष ओषधीनाꣳ रसो यद्दर्भास्सरसमेव ब्रह्म कुरुते [4]दक्षिणोत्तरौ पाणी पादौ*कृत्वा सपवित्रावोमिति प्रतिपद्यत [5]एतद्वै यजुस्त्रयीं विद्यां

र्थज्ञानविधानं वा कर्माङ्गतया विधीयते—यदित्यादि ॥ सुबोधः ॥

[3]दर्भाणामिति ॥ महत् प्रभूतं यथातथा आसनत्वेन दर्भानुपस्तीर्य । कर्मणस्सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । उपस्थमिति । दक्षिणपूर्विणं सव्योत्तरिणमासनविशेषं कृत्वा प्राङ्मुख आसीनः तत्रापि द्यावापृथिव्योस्सन्धिमीक्षमाणः समाहितः स्वाध्यायमधीयीत आत्मीयं वेदं पठेत् । मुख्योऽयं विधिः । अशक्तिविषये 'व्रजंस्तिष्ठन्'[1] इत्येवमादयो गौणकल्पा भविष्यन्ति । अपां वा इत्यादि दर्भस्तुतिः दर्भासनस्य अवश्यकर्तव्यतार्थम् । अपामोषधीनां च रसो दर्भा नाम । तस्मात्तत्रासित्वाऽधीयानः सरसं सवीर्यं ब्रह्म वेदं कुरुते ॥

[4]दक्षिणोत्तराविति ॥ दक्षिणो हस्त उत्तरः उपरिभूतो ययोस्तौ दक्षिणोत्तरौ । बहुव्रीहिस्वराभावश्छान्दसः । केचित् द्वन्द्वमाहुः

*'तेन सामानि यच्छिरश्चक्षुषी' इति, 'दक्षिणोत्तरौ पाणी कृत्वा' इति च भट्टभास्करभाष्यानुसारी द्राविडपाठः. [1]आ. २-१५.

**प्रत्येषा वागेतत्परममक्षरं तदेतदृचाऽभ्युक्त[6]मृचो अक्षरे परमे व्योमन् यस्मिन्देवा अधि विश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त**

दक्षिणोत्तरावस्थानाविति । एवंभूतौ **सपवित्रौ पाणी** उत्सङ्गवर्तिनौ कृत्वा समावप्रच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे कुरुते । एवंभूतः प्राङासीन इति पूर्वस्यैवायं विशेषः । अथ **यदुक्तं** 'स्वाध्यायमधीयीत' इति तत्र विशेषमाह—**ओमिति प्रतिपद्यते** आरभत इति ॥

[5]अथोङ्कारः स्तूयते—**एतदिति** ॥ **एतत्** प्रणवाख्यं **यजुः त्रयीं विद्यां प्रति** त्रय्या विद्यायाः प्रतिनिधिरित्यर्थः । 'प्रति प्रतिनिधिप्रतिदानयोः' इति कर्मप्रवचनीयत्वम्, पञ्चम्यभावश्छान्दसः । त्रयोऽवयवा अस्यास्त्रयी । 'द्वित्रिभ्यां तयस्यायज्वा' । वेदत्रयसारभूतत्वात् तत्प्रतिनिधित्वमस्य । किञ्च—**एषा वाक्** वाङ्मयस्य एतत् सूक्ष्मरूपं अविभागावस्थत्वात् । **एतत्परममक्षरमिति** यत् परमं सर्वोत्तीर्णं अक्षरं अविनाशि आत्मवस्तु तदेवेदं, तस्य वाचकत्वात्, अभेदाच्च 'ओमितीदं सर्वम्'* इति । **तदेतदर्थस्वरूपमृचाऽभ्युक्त**मिति ॥

[6]ऋचं **दर्शयति—ऋच** इति ॥ व्याख्याता चेयं त्रिष्टुप् सावित्रेऽग्नौ† । सर्वेऽपि मन्त्रा **अक्षरे परमे व्योमनि** सर्वेषां विविधं रक्षके वाचकत्वेन निषीदन्ति । यद्वा—तत्रैवाधेयत्वेन वर्तन्ते । **यस्मिन्** व्योमनि अधिकरणभूते **विश्वे देवा निषेदुः** निषीदन्ति अंशत्वेन सर्वे च देवा अभिमन्तारः, सर्वे च अभिमन्तव्यादयः‡ य-

*उ. १-८. †ब्रा. ३-१०-९. ‡'अभिमन्तव्या मन्त्राः' इति पाठान्तरम्.

इमे समांसत इति [7]त्रीनेव प्रायुङ्क भूर्भुवस्स्वरित्यां-
हैतद्वै वाचस्सत्यं यदेव वाचस्सत्यं तत्प्रायुङ्क्ता[8]थ
सावित्रीं गायत्रीं त्रिरन्वाह पच्छोऽर्धर्चशोऽनवानꣳ
सविता श्रियः प्रसविता श्रियमेवाप्नोत्यथो प्रज्ञा-

दंशाः यत्रैव निषीदन्ति तत् **वस्तु यो न वेद स किमृचा करिष्यति ?** मन्त्रकृत्यं तस्य नास्ति अनर्हत्वात् । ये पुनः **तद्विदुः त इमे** महात्मान एव **समासते** सम्यगासते विदुषः प्रशंसार्थमेकस्मिन्नेव बहुवचनमिति ॥

[7]ओमिति प्रतिपद्य अनन्तरं **भूर्भुवस्सुवरित्याह** व्याहृतित्रयं पठति । किं कृतं भवति? **त्रीनेव** वेदान् प्रयुक्तवान् भवति । पूर्वमोमिति त्रयीसारभूतं प्रतिपद्यतेस्म, इदानीं तु तामेव त्रयीं प्रयुक्तवानिति । **एतदेव** व्याहृतित्रयं **वाचस्सत्यं** सर्वस्य वाङ्मयस्य वेदात्मिकायाः वाचः सम्बन्धि सत्यं सति भवं सारभूतं, त्रिभ्यस्सारत्वेन प्रभूतत्वात्, दध्नो नवनीतमिव । तस्मात्तदेतत्पठन् त्रयीसारमेव पृथगवस्थितं प्रयुक्तवान् भवति ॥

[8]**अथ** व्याहृत्यनन्तरं **सावित्रीं** सवितृदेवत्यां **गायत्रीं** गायत्रीच्छन्दस्कां 'तत्सवितुः'* इत्यृचं **त्रिरन्वाह** अनुक्रमेण पठति **पच्छः** पादंपादं अथ **अर्धर्चशः** अर्धमर्धम् । 'सङ्ख्यैकवचनाच्च' इति शस् । अथ **अनवानं** अनवसानं† अर्धर्चेऽप्यनुपरमन् । अत्र केचित् व्याहृतीर्विहृताः त्रिष्वनुवचनेषु कुर्वन्ति । **सविता** खलु सर्वस्याः **श्रियः प्रसविता** उत्पादयिता । अतस्तद्देवत्यां

*सं. १-५-६. †'अनुच्छ्वासं' इति पाठान्तरम्.

तयैव प्रतिपदा छन्दांसि प्रतिपद्यते ॥ ११ ॥

[1]ग्रामे मनसा स्वाध्यायमधीयीत दिवा नक्तं वेति ह स्माह शौच आह्नेय उतारण्येऽबल उत वाचोत तिष्ठन्नुत व्रजन्नुतासीन उत शयानोऽधीयीतैव स्वाध्यायं तपस्वी पुण्यो भवति य एवं वि-

गायत्रीमधीयानः **श्रियं** प्राप्नोति । अथ सावित्र्यन्ते 'स्वाध्यायमधीयीत' इति विधिः । पूर्वस्यैवायं विशेषः । एवमेकस्मिन्नहनि विधानमुक्तम्; **अथो** अनन्तरेषु[1] दिवसेषु **प्रज्ञातयैव प्रतिपदा** उपक्रमेण **छन्दांसि** छन्दोवयवान् **प्रतिपद्यते** आरभते । अव्यवधानेन अवस्थितत्वं प्रज्ञातत्वम् । पूर्वेद्युर्यावत्यवसितं तत एवारभ्य उत्तरेद्युरधीयीत, न तु यंकंचिद्वेदभागमिति ॥

इत्यारण्यके द्वितीये एकादशोऽनुवाकः.

---

[1]एवं मुख्यो विधिरुक्तः । अथ आपत्कल्पा उच्यन्ते । यदुक्तं 'अच्छदिर्दर्शे'* इति तत्राह—**ग्रामे मनसा स्वाध्यायमधीयीत** इति । यदुक्तं 'उदित आदित्ये'* इति तत्राह—**दिवा नक्तं** वा इति । मनसेत्येव । कश्चिदाह—सबलोऽपि वा **इति ह स्माह शौचः** शुचेरपत्यं शौच **आह्नेयः** अह्नी नाम माता तस्या अपत्यं आह्नेयः । अयमनापद्यप्येवमाह । **उतारण्य** इति, अरण्येऽपि **अबलः** अशक्तश्चेन्मनसा अधीयीत । **उत वाचा** अरण्ये अबल इत्येव अव्यक्ताक्षरं जिह्वास्पन्दमात्रेणाधी-

[1]अनन्तरादिषु. *आ. २-११.

द्वान्थ्स्वाध्यायमधीते [2]नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ १२ ॥

[1]मध्यन्दिने प्रबलमधीयीतासौ खलु वावैष

यीत । कश्चिदाह—सबलोऽपि वाचैवाधीयीत, नात्युच्चैः । उत तिष्ठन्निसादि । अबल इत्येव । आसनाशक्तौ स्थानाद्यनुज्ञायते । अधीयीतैवेति । अशक्तश्चेद्यथाकथञ्चिदध्ययनमेव कुर्यात्, उपस्थकरणादिकमपि न श्रद्धेयमिति । तपस्वीति । य एवं स्वाध्यायमाहात्म्यं विद्वान् विजानन् स्वाध्यायमधीते स एव तपस्वी भवति अध्ययनफलं प्राप्नोति; पुण्यः पङ्क्तिपावनश्च भवति ॥

[2]नमो ब्रह्मण इति परिधानीया त्रिष्टुप् । अस्यास्तु उत्तरत्रानुवाके विनियोगो वक्ष्यते । ब्रह्म वेदः प्रजापतिरेव वा । अन्ये प्रसिद्धाः । वाक्शब्दाभिमानिनी देवता वाचस्पतिः । परमात्मा विष्णुः व्यापी यज्ञात्मा बृहन् महान्, ब्रह्मादिभ्योपि प्रशस्तत्वात् । एभ्यो ब्रह्मयज्ञोत्पत्तिहेतुभ्यो नमस्कारं करोमीति ॥

इति आरण्यके द्वितीये द्वादशोनुवाकः.

---

[1]मध्यन्दिन इति ॥ प्रबलं प्रभूतम् । असाविति । योऽयं ब्राह्मणो नाम एषः असावादित्यः, स्वयमादित्य एवायं, तयोरेकत्वात् 'स एकः'* इति श्रुतेः । तस्मादिति । यस्मात्

*उ. २-८.

आदित्यो यद्ब्राह्मणस्तस्मात्तर्हि तेक्ष्णिष्ठं तपति [2]तदेषाऽभ्युक्ता । चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवी अन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्चेति [3]स वा एष यज्ञस्सद्यः प्रतायते सद्यस्सन्तिष्ठते [4]तस्य प्राक्सा-

---

ब्राह्मणाख्य आदित्यो मध्यन्दिने अध्ययनं तपस्स्थानीयं प्रबलं करोति **तस्मात् तर्हि** तस्मिन्काले मध्यन्दिने मुख्यादित्यं **तेक्ष्णिष्ठं** तीक्ष्णतरं **तपति** । छान्दसो गुणः ॥

[2]**तत्** एतदादित्यमाहात्म्यं पुरुषैकत्वलक्षणमभिलक्ष्य **एषा** वक्ष्यमाणा ऋक् **उक्ता** । **चित्रं देवानामिति** त्रिष्टुप् । व्याख्यातेयं 'उदु त्यं'* इत्यत्र । **चित्रं** चायनीयं **देवानामनीकं** सङ्घ आदित्यमण्डलात्मकं **उदगात्** उद्गच्छति मित्रादीनां चक्षुस्स्थानीयम् । अयं **सूर्यो जगतस्तस्थुषश्च आत्मा** आत्मभूतः । **द्यावापृथिवी** द्यावापृथिव्यौ **अन्तरिक्षं च** आप्राः तेजसा आपूरयतीति ॥

[3]**स वा एष** ब्रह्मयज्ञः **सद्यः** समानेऽह्नि **प्रतायते** । **सद्यः** समानेऽह्नि **सन्तिष्ठते** च । यस्मिन्नहन्यारभ्यते तस्मिन्नेव समाप्यते । नैवमन्ये यज्ञा इति ॥

[4]**तस्येति** ॥ प्रातरेवारब्धस्य **तस्य सायमवभृथः** समाप्तिः । अहरित्यनुवर्तते । 'उदित आदित्ये'† इत्यारम्भकालस्योक्तत्वात् समाप्तिमात्रमेवात्र विधीयते । अन्य अह—सायमिति लुप्तपञ्चमीकं,

---

*सं. १-४-४३. †आ. २-११.

यमवभृथो [5]नमो ब्रह्मण इति परिधानीयां त्रिरन्वाह[6]प उपस्पृश्यं गृहानेति ततो यत्किंच ददाति सा दक्षिणा ॥ १३ ॥

[1]तस्य वा एतस्य यज्ञस्य मेघो हविर्धानं वि-

सायंकालात्प्राक् तस्य अवभृथ इति । केचिदाहुः—प्रातश्च सायं च अवभृथ इति । अनापद्यपि कालद्वयेऽपि ब्रह्मयज्ञविधानार्थमिति । अन्य अह—ब्रह्मयज्ञोऽयमग्निहोत्रवदुभयकालानुसन्ततो भवति । तस्य प्राक् प्रथमं सायमवभृथो मुख्यः, ततो मध्यरात्रादिष्वपि समाप्तिर्भवति प्रातरेवारब्धस्येति ॥

[5]अध्ययनान्ते **नमो ब्रह्मण** इति पूर्वोक्तामृचं **परिधानीयां** परिसमापनीयां **त्रिरन्वाह** । आदावपीति केचित्, 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्'* इति न्यायात्[1] ॥

[6]**अप उपस्पृश्येति** ॥ अत्राप्यादावन्ते चेति वेदितव्यं, 'यक्ष्यमाणो वेष्ट्वा वा'† इति वचनात् । तत्रादौ 'विद्युदसि'† इति । अन्ते 'वृष्टिरसि'† इति । ततो **गृहानेति** । गृहं गत्वैव दानार्थं वचनम् । **ततो** गृहं गत्वा यत्किंचिदपि गृहस्थो दद्यात् **सा दक्षिणा** अस्य यज्ञस्याङ्गम् । तस्माद्यत्किञ्चिद्दद्यादिति विधिः ॥

इति द्वितीये त्रयोदशोऽनुवाकः.

[1]**तस्य वा इति** ॥ अनध्ययनहेतवो विद्युदादयो ब्रह्मयज्ञे न सन्तीति प्रतिपादनार्थमिदमारभ्यते । अस्य यज्ञरूपत्वात् कर्मणि चा-

1 'यज्ञस्य अप्रध्वंसनस्य अपेक्षितत्वात्' इत्यधिकः पाठः क्वचित्.

*सं. २-५-७. †ब्रा. ३-१०-९.

**विद्युद॒ग्निर्व॒र्ष॑ꣳ ह॒विस्स्त॒नयि॒त्नुर्व॑षट्का॒रो यद॑व॒स्फूर्जा॑ति॒ सो॑ऽनु॒वषट्का॒रो वा॒यु॒रा॒त्माऽमा॑वा॒स्या॑ स्वि॑ष्ट॒कृ[2]द्य ए॒वं वि॒द्वान्मे॒घे व॒र्ष॑ति वि॒द्योत॑माने स्त॒नय॑त्यव॒स्फूर्जा॑ति॒ पव॑माने वा॒याव॑मावा॒स्या॑याꣳ स्वाध्या॒यम॒धी॑ते॒ तप॑ ए॒व तत्त॑प्यते॒ तपो॒ हि स्वाध्या॒य इत्यु॒-**

---

नध्यायाभावात् । तदेव च कर्मत्वं स्पष्टयितुं मेघादयो हविर्धानादिरूपेण रूप्यन्ते । **तस्यैतस्य** ब्रह्मयज्ञस्य अध्ययनात्मनो मेघादयो हविर्धानादिस्थानीयाः अनिवृत्तिहेतवो वेदितव्याः । उदकाधारत्वेन **मेघो** हविर्धानस्थानीयः । उदकस्य च हविष्ट्वं वक्ष्यति ‘वर्षं हविः’ इति । हविर्धाने हि सोमादीनि हवींषि निधीयन्ते । **विद्युत्** अग्निस्थानीया, प्रकाशवत्त्वात्, वृष्टिहेतुत्वाच्च । **वर्षं** हविस्स्थानीयं, सस्याद्युत्पत्तिहेतुत्वात् । **स्तनयित्नुः** स्तनितं कुर्वन् मेघः वषट्कारस्थानीयः, तदनन्तरं वर्षलक्षणस्य हविषः प्रवर्तनात्* । अवस्फूर्जः अशनिशब्दः सः अनुवषट्कारस्थानीयः, पश्चाद्भावसाम्यात् । **वायुः** आत्मस्थानीयः, प्राणत्वात् । **अमावास्या** स्विष्टकृत्स्थानीया, यजनसम्पत्तिहेतुत्वात् ॥

[2]**य एवं** मेघादीनां अध्ययनाङ्गत्वं **विद्वान्** मेघादिसद्भावेऽपि **वायौ** च **पवमाने अमावास्यायां** च **अधीते तत्तप एव तप्यते,** नित्यस्वाध्यायाध्ययनलक्षणं हि तपः अविगुणमेव चरति । तदेवाह—**तपो हि स्वाध्याय** इति, सर्वतपःफलहेतुत्वात्, नातः परंतपोऽस्तीति । तस्मादेतेष्वपि निमित्तेषु कर्तव्यमेवेति विधीयते ।

---

*‘प्रवचनात्’ इत्यपि पाठः.

त्तमं नाकꣳ रोहत्युत्तमस्समानानां भवति याव- न्तꣳ ह वा इमां वित्तस्य पूर्णां ददथ्स्वर्गं लोकं जयति तावन्तं लोकं जयति भूयाꣳसं चाक्ष- य्यं चाप पुनर्मृत्युं जयति ब्रह्मणस्सायुज्यं गच्छ- ति ॥ १४ ॥

[1]तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदाऽऽ-

---

एवं कुर्वन् उत्तमं नाकं सुखैकरूपं स्थानं रोहति आरोहति, समानानां तुल्यजन्मनां च मनुष्याणां उत्तमो भवति । कि- ञ्च—इमां पृथिवीं वित्तस्य पूर्णां धनेन सम्पूर्णां ददत् याव- न्तं स्वर्गं लोकं जयति तावन्तं लोकं जयति । किमुच्य- ते तावन्तामिति ? भूयांसं च लोकं जयति; ततोऽपि बहुत- रफलप्रदमित्यर्थः । अक्षय्यं च लोकं प्राप्नोति, क्षेतुमशक्यं अक्षय्यम् । 'क्षय्यजय्यौ शक्यार्थे' इत्ययादेशः, 'ययतोश्चात- दर्थे' इत्युत्तरपदान्तोदात्तत्वम् । पुनर्मृत्युं भूयोमरणं अपज- यति निस्तरति, अमृतत्वं प्राप्नोतीत्यर्थः । एवं जननमरणरहितः ब्रह्मणस्सायुज्यं सयुग्भावं गच्छति एकीभवति ॥

इत्यारण्यके द्वितीये चतुर्दशोऽनुवाकः.

---

[1]तस्येत्यादि ॥ उक्तं न कश्चिदप्यनध्यायोऽस्याध्ययनयज्ञस्येति । इदानीमस्यापि द्वावनध्यायौ स्त इति दर्शयति । यदाऽऽत्मा छर्दनाशनपानादिना[1] आशौचेन अशुचिः एकोऽनध्यायः अनध्या-

---

[1]'शावादिलक्षणेन वा' इत्यधिकः पाठः क्वचित्.

त्माऽशुचिर्यद्देशस्समृद्धिर्दैवतानि य एवं विद्वान्महारात्र उषस्युदिते व्रजꣳस्तिष्ठन्नासीनश्शयानोऽरण्ये ग्रामे वा यावत्तरसꣳ स्वाध्यायमधीते सर्वान्लोकाञ्जयति सर्वान्लोकाननृणोऽनु संचरति [2]तदेषाऽभ्युक्ता । अनृणा अस्मिन्ननृणाः परस्मिꣳस्तृतीये लोके अनृणास्स्याम । ये देवयाना उत पि-

---

यहेतुः । यद्देश इति, अशुचिरित्येव । मूत्रपुरीषाद्याकीर्णतया अशुचिर्देशोऽनध्यायहेतुर्द्वितीयः । समृद्धिर्दैवतानि अस्य यज्ञस्य । यज्ञान्तरवत् न द्रव्यार्जनादिना अस्य यज्ञस्य सामग्रीसम्पत्तिः अपितु दैवतान्येव फलस्य दातॄणि अस्य समृद्धिः । य एवं देवतातृप्तिमेवास्य समृद्धिमावश्यकतया विद्वान् कालादिनियमानादरेण यावत्तरसं यावद्बलं शक्तिमेव नियामिकां मन्यमानः स्वाध्यायमधीते सर्वान् लोकान् जयति सर्वान् लोकान् अनृण एव सञ्चरति, अपाकृतसर्वयज्ञाद्यृणत्वात्, 'जप्येनैव तु संसिध्येत्' इति स्मृतेः, 'स्वाध्यायप्रवचने एव'* इति च श्रुतेः । यज्ञादीन् समर्थः कुर्यात्, असमर्थः स्वाध्यायेनैव सिध्यतीति ॥

[2]तदिदमर्थरूपमभिलक्ष्य एषा ऋगुक्ता । अनृणा अस्मिन्निति त्रिष्टुप् । व्याख्यातेयं 'अनागसस्त्वा'† इत्यत्र । सर्वेषु लोकेषु अनृणास्स्याम । देवयानान् पितृयाणांश्च सर्वान् पथः अनृणा आक्षीयेम अश्नुवीमहीति ॥

---

*उ. १-९. †ब्रा. ३-७-९.

तयाणाहस्सर्वान्मृधो अनृणा आसीमे³त्यग्निं वै जातं पाप्मा जग्राह तं देवा आहुतीभिः पाप्मान-मपाघ्नन्नाहुतीनां यज्ञेन यज्ञस्य दक्षिणाभिर्दक्षिणानां ब्राह्मणेन ब्राह्मणस्य छन्दोभिश्छन्दसाꣳ स्वाध्याये-नापहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्तं योऽ-

---

[3]अग्निं वा इति ॥ अग्निं जातमात्रमेव **पाप्मा** जन्मनिमित्तो **जग्राह** । तं अग्नेः **पाप्मानं देवाः आहुतीभिः अपाघ्नन्** आहुतिसम्बन्धेन अपापमकुर्वन् । अथ आहुतिनिमित्तं पापं **यज्ञेनापाघ्नन्**, यज्ञसम्बन्धेनाहुतयोऽपापा अभूवन् । एवं सर्वत्र। दक्षिणासम्बन्धेन यज्ञोऽपापोऽभवत् । ब्राह्मणसम्बन्धेन दक्षिणा अपापा अभवन् । अथ ब्राह्मणश्छन्दोभिर्गायत्र्यादिभिस्सम्बन्धाद-पापोऽभवत् । छन्दांसि च स्वाध्यायेन वेदेन सम्बन्धाद-पापान्यभवन् । अथ **स्वाध्यायो**ऽधीयमानस्स्वयमेवाप**हतपाप्मा** स्वस्याध्येतुः पापं स्वयमेवापहन्ति, न घातकान्तरमपेक्षते । अत्र हेतुमाह—**देवपवित्रं वा एतत्** देवानामपि पवनसाधनमेतत् । दासीभारादिर्द्रष्टव्यः । यद्वा—देवैः पवित्रं पावयितृत्वमस्येति । देवाः पवित्रमस्येति वा **देवपवित्रम्** । स्वरो लभ्यते लिङ्गं तु व्यत्येति । तं तादृशं स्वाध्यायमारभ्य **योऽनूत्सृजति** पश्चात् विच्छेदेन त्यजति स **वाचि** वेदात्मिकायां **अभागो भवति** फल-भाङ् भवति । 'नञ्सुभ्याम्' इति व्यत्ययेन न प्रवर्तते । यद्वा—तस्य **वाचि अभागो भवति** भागो न भवति । अत एव नाकेऽपि अभागो भवति ॥

नूंर्थ्सृजत्यभागो वाचि भंवत्यभांगो नाके [4]तदेषाऽ-भ्युंक्ता । यस्तित्याजं सखिविदं॑ सखांयं न तस्यं वाच्यपिं भागो अंस्ति । यदीं॑ शृणोत्यल्कं॑ शृणोति न हि प्रवेदं सुकृतस्य पन्थामिति [5]तस्मा-थ्स्वाध्यायोऽध्येतव्यों [6]यंयं क्रतुमधीते तेनंतेना-

---

[4]तदिदमर्थरूपमभिलक्ष्य एषा ऋगुक्ता । **यस्तित्याजे**ति त्रिष्टुप् । व्याख्यातेयं 'साकंजानां'* इत्यत्र । समानख्यानविदं समानख्यानत्वस्य ज्ञापयितारं **सखायं** समानख्यानस्थानं वेदं **यः तित्याज तस्य वाचि** वाङ्निमित्ते श्रेयसि अल्पोऽ**पि भागो नास्ति** । **यदीं शृणोति** तत् **अलकं शृणोति** नैव शृणोति, अश्रुतसममेव तत् **नहि सुकृतस्य पन्थां** मार्गं **प्रवेद**, वेदाभावात् । यद्वा—सुकृतस्य पन्थानं वेदं न प्रवेद । तस्माद्वाचि नाके च अभागः स्यादनधीतवेदः ॥

[5]**तस्मात्स्वाध्यायोऽध्येतव्यः**, वाचि नाके च अभागो नाभूवं, अपितु सर्वत्र भागी भूयासमित्यध्येयस्स्वाध्यायः । केचित्तु—प्रथमाध्ययनविधानमिदमित्याहुः ॥

[6]**यंयं क्रतुं** क्रतुप्रतिपादकग्रन्थं **अधीते तेनतेन** प्रतिपाद्येन क्रतुना इष्टमनेन **भवति** । तेन वाङ्निमित्तस्य सकलस्य श्रेयसो भागी भवतीत्युक्तम् । ततश्चाग्न्यादिसायुज्यं गच्छत्यध्येता । नाके भागित्वं एतेन दर्शितम् ॥

---

*आ. १-३.

स्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति [7]तदेषाऽभ्युक्ता । ये अर्वाङुत वा पुराणे वेदंविद्वाꣳसमभितो वदन्त्यादित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हꣳसमिति [8]यावतीर्वै देवतास्तास्सर्वा वेदविदि ब्राह्मणे वसन्ति [9]तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति ॥ १५ ॥

---

[7]तदिदमर्थरूपमध्येतृमाहात्म्यमभिलक्ष्य **एषा** ऋगुक्ता ॥ **ये अर्वाङिति** त्रिष्टुप् अनवसाना । अर्वाङ् पुराण इति द्वयोरपि विभक्तिव्यत्ययः । अर्वाचीनं इदानीन्तनं पुराणं पुरातनं व्यासादिकृतं **वेदंविद्वांसं** वेदार्थस्य वेदितारं **अभितो वदन्ति** परिवदन्ति ये ते **सर्वेऽपि** आदित्यमेव **परिवदन्ति,** अपि च अग्निं द्वितीयं वायुं तृतीयं हंसमादित्यं च परिवदन्ति नैकमेवादित्यम् । अभितोवादः परिवादश्च स्तुतिरिति केचित् ॥

[8]उक्तमग्न्यादित्रितयात्मकत्वं वेदविदः । इदानीं सर्वदेवतामयत्वमाह—**यावतीरिति** ॥ यावत्यो देवतास्सन्ति **तास्सर्वा** अपि **वेदविदि** वेदार्थज्ञे **ब्राह्मणे वसन्ति,** सर्वदेवतासामर्थ्यात्मकत्वाद्वेदार्थस्य । एतेन च अर्थज्ञानपर्यन्तत्वमध्ययनस्य सूचितम् ॥

[9]**तस्मादित्यादि** ॥ गतम् । **दिवेदिवे** दिनेदिने । दिनशब्दपर्यायात् दिवुशब्दाद्व्यत्ययेन चतुर्थी । **अश्लीलं** अशुभं,

[1]रिच्यंत इव वा एष प्रेव रिच्यते यो याजयंति प्रतिं वा गृह्णाति याजयित्वा प्रतिगृह्य वाऽनंश्नन्त्रिस्स्वाध्यायं वेदमधीयीत त्रिरात्रं वा सावित्रीं गायत्रीमन्वातिरेचयति वरो दक्षिणा वरेणैव वरꣳ स्पृणोत्यात्मा हि वरः ॥ १६ ॥

---

अश्रीकमिति यावत् । कपिलकादित्वाल्लत्वविकल्पः, मत्वर्थीयो लः। एवंवर्तमान एतास्सर्वा देवताः प्रीणाति ॥

इति द्वितीये पञ्चदशोऽनुवाकः.

---

[1]रिच्यत इवेति ॥ देहक्षयो रेकः, पुण्यक्षयः प्ररेकः, वेदार्थस्यापि विस्मृतिहेतुत्वात्[1] प्रकृष्टत्वं पुण्यक्षयस्य सामर्थ्याच्च याजनप्रतिग्रहावयोग्यविषयौ निन्द्येते । त्रिरिति । स्वाध्यायशब्दवाच्यमात्मीयं सर्वमपि वेदं त्रिरावृत्तं अधीयीत अनश्नन् अभुञ्जानः । अशक्तश्चेत् त्रिरात्रं वेत्यादि । अनश्नन्नित्येव । सावित्रीं सवितृदेवत्यां गायत्रीछन्दस्कां "तत्सवितुः"* इत्येतामृचमधीयीत त्रिरात्रमनश्नन् । ततस्तेन कर्मणा आत्मानमन्वातिरेचयति । अनन्तरमेव रेकान्निवर्त्य[2] मर्यादया अतिरेचयाति वर्धयति, रिक्त इति वाच्यो न भवति । वरो गौः । वरेणैव वरं स्पृणोति प्रीणयति । आत्मा हि वरः ॥

इति द्वितीये षोडशोऽनुवाकः.

---

1 "देहस्यापि स्थितिहेतुत्वात्" इति पाठान्तरम्. *सं. १-५-६.

2 "कार्श्यान्निवर्त्य" इति पाठान्तरम्.

[1]दुहे ह वा एष छन्दाꣳसि यो याजयति स येन यज्ञक्रतुना याजयेथ्सोऽरण्यं परेत्य शुचौ देशे स्वाध्यायमेवैनमधीयन्नासीत तस्यानशनं दीक्षा स्थानमुपसद आसनꣳ सुत्या वाग्जुहूर्मन उ-

[1]दुहे ह वा इति ॥ दुहे दुग्धे छन्दांसि निस्साराणि करोति यो याजयति अयाज्यम् । अविशेषेणेत्येके, आपदि तु वृत्तिस्स्यादिति । "लोपस्त आत्मनेपदेषु" इति तलोपः । प्रपूरणं पूरणाभावः, यथा प्रस्मरणं प्रस्थानमिति धात्वर्थाभावः प्रशब्देनोच्यते । स येन यज्ञक्रतुना अग्निष्टोमादिना याजयेत् अयाजयत् तस्य प्रतिपादकमेनं स्वाध्यायैकदेशं अरण्ये शुचौ देशे अधीयन् अकृच्छ्रेण अधीयानः समाहित आसीत । "इङ्-धार्योश्शत्रकृच्छ्रिणि" इति शतृप्रत्ययः । इदानीं तस्य तादृशीं स्थितिं यज्ञक्रतुत्वेन रूपयति—तस्येत्यादि । "त्रिरात्रं वा"* इत्यधिकारात् त्र्यहमेवं कुर्यादिति । अनशनं दीक्षास्थानीयं, देहकार्श्यहेतुत्वात् । स्थानं उपसत्स्थानीयं, उपपत्तिरूपतपोरूपत्वात् । आसनं सुत्यास्थानीयं, प्राणाख्यस्य हविषोऽभिषवरूपत्वात् । वाक् जुहूस्थानीया अध्ययनबलस्य हविस्स्थानीयस्य आधारत्वात् । मनः उपभृत्स्थानीयं, एतत्पूर्वभावित्वात् । धृतिः अध्यवसायात्मा सा ध्रुवास्थानीया, सर्वोपादानत्वात् । प्राणः अध्ययनबलं स हविस्स्थानीयः, देवतातृप्तिहेतुत्वात् । साम अध्ययननियमः सः अध्वर्युस्थानीयः, अध्वररूपानिवृत्तिहेतुत्वात् । यद्वा—अध्ययनशान्तिः साम । सोऽयं यज्ञः प्राणदक्षिणः प्राणो बलं तत्समाप्तिरेव दक्षिणा दानमस्य, चतुर्थे ह्यह्नि प्राणपीडाऽ-

*आ. २-१६.

प्रभृद्धूतिर्ध्रुवा प्राणो हविस्सामाध्वर्युस्स वा एष यज्ञः प्राणदक्षिणोऽनन्तदक्षिणस्समृद्धतरः ॥ १७ ॥

[1]कतिधाऽवकीर्णी प्रविशति [2]चतुर्धेत्याहुर्ब्रह्मवादिनो मरुतः प्राणैरिन्द्रं बलेन बृहस्पतिं ब्रह्म-

---

तीवास्य भवतीति । एवमयं प्राणदक्षिणो यज्ञस्समृद्धः । **अनन्तदक्षिणस्तु समृद्धतरः**—अनन्तं अनन[1]साधनं अन्नं अन्तहीन[2]त्वाद्वा, तद्दक्षिणः प्राणदक्षिणादप्यतिशयेन समृद्धः । तस्माद्यज्ञसमाप्तौ प्रभूतमन्नं देयमिति ॥

इति द्वितीये सप्तदशोऽनुवाक.

---

[1]**कतिधेति** ॥ अवकीर्णं भग्नं व्रतं यस्य ब्रह्मचारिणः सः **अवकीर्णी** । रेतस्कन्दनादिकमव्रत्यं चरित्वा अवकीर्णी भवति । स **कतिधा** कतिभिः प्रकारैः विशीर्णशरीरः **प्रविशति**, सामर्थ्याच्च कान् प्रविशति विशीर्णस्य बहुविषयत्वात्, इति प्रश्नः ॥

[2]उत्तरं **चतुर्धेति** ॥ एवं पृच्छद्भ्यः उत्तरं **ब्रह्मवादिन आहुः चतुर्धा** अवकीर्णी चतुर्धा प्रविशतीति । इदानीं तान् प्रकारान् ब्रह्मवादिन एव दर्शयन्ति—**मरुतः प्राणै**रित्यादि । अयं **प्राणै**रात्मीयैः **मरुतः** प्रविशति, स्वयं विनष्टप्राणो भवतीति यावत् । एवं सर्वत्र । **इतरेण सर्वेणेति** शरीरेण ॥

---

1 " अदन " इति पाठान्तरम्  2 " अन्तर्हित " इति पाठान्तरम्.

वर्चसेनाग्निमेवेतरेण सर्वेण [3]तस्यैतां प्रायश्चित्तिं विदाञ्चकार सुदेवः काश्यपो यो ब्रह्मचार्यवकिरेद्-मावास्यायाꣳ रात्र्यामग्निं प्रणीयोपसमाधाय द्विरा-ज्यस्योपघातं जुहोति कामावकीर्णोऽस्म्यवकीर्णो-ऽस्मि कामकामाय स्वाहा कामाभिद्रुग्धोऽस्म्यभि-द्रुग्धोऽस्मि कामकामाय स्वाहेत्यमृतं वा आज्य-ममृतमेवात्मन्धत्ते [4]हुत्वा प्रयताञ्जलिः कवातिर्य-ङ्ङग्निमभि मन्त्रयेत [5]सं मा सिञ्चन्तु मरुतस्सामि.

---

[3]**तस्येत्यादि** ॥ तस्य एवं विशीर्णदेहस्य **सुदेवो** नाम कश्यपपुत्रः **प्रायश्चित्तिं विदांचकार** ज्ञातवान् । "उपविद्-जागृभ्यः" इत्यामप्रत्ययः । **य** इत्यादि । **उपघातं** उपहत्यो-पहत्य सकृदेव गृहीत्वा आज्यं **जुहोति** अनेन मन्त्रेण । **कामे-ति** । हे **काम** कामात्मन् अग्ने **अवकीर्णोऽस्मि** भग्नव्रतोऽस्मि। त्वमेव कामात्मा मां अवकीर्णमकरोः । अनुतापप्रकटनार्थं द्विर्वच-नम् । हे **काम** ! तस्मै कामात्मने तुभ्यं स्वाहुतमिदमाज्यमस्तु । एवं अभिद्रोहेऽपि योजनीयं, आत्मनैवाहं अभिद्रुग्धोऽस्मीति । **अ-मृतं वा** इत्यादि । गतम् ॥

[4]**हुत्वेत्यादि** ॥ **प्रयताञ्जलिः कवातिर्यङ्** ईषत्तिरश्चीनशरीरः नाभिमुखो न पराङ्मुखः, अपितु पार्श्वेन अग्निमभिमन्त्रयेत । कोः कवादेशश्छान्दसः ॥

[5]अथाभिमन्त्रणमन्त्रः—**सं मा सिञ्चन्त्विति** ॥ मरुदादयो **मां संसिञ्चन्तु** बहुधा विशीर्णप्राणादिकं एकत्र **सिञ्चन्तु** स्थापयन्तु,

न्द्रस्सं बृहस्पतिः । सं माऽयमग्निस्सिंञ्चत्वायुषा च बलेन चायुष्मन्तं करोतमेति [6]प्रति हास्मै मरुतः प्राणान्दधाति प्रतीन्द्रो बलं प्रति बृहस्पतिर्ब्रह्मवर्चसं प्रत्यग्निरितरꣳ सर्वꣳ सर्वतनुर्भूत्वा सर्वमायुरेति [7]त्रिरभिमन्त्रयेत त्रिषत्या हि देवा [8]योऽपूत इव मन्येत स इत्थं जुहुयादित्थमभिमन्त्रयेत पुनीत एवात्मानमायुरेवात्मन्धत्ते [9]वरो दक्षिणा वरेणैव वरꣳ स्पृणोत्यात्मा हि वरः ॥ १८ ॥

---

आयुषा च बलेन च अपूर्वेण, न केवलं विशीर्णैरेव प्राणादिभिस्सहितं किन्तु दीर्घेणायुषा आयुष्मन्तं मां कुरुतेति ॥

[6]प्रतिहेत्यादि ॥ एवं कृते मरुतोऽस्मै प्राणान् पूर्वविशीर्णान् प्रतिदधति अस्मिन् स्थापयन्ति । प्रतीन्द्र इत्यादि । गतम् । ततश्चायं सर्वतनुः प्रतिलब्धसर्वशरीरस्सन् सर्वं सम्पूर्णं आयुः प्राप्नोति शतायुर्भवति ॥

[7]त्रिरित्यादि ॥ गतम् ॥

[8]य इत्यादि ॥ योऽन्योऽपि अपूत इव सङ्कीर्णमिव पापैरात्मानं मन्येत सः अपि इत्थं होमं अभिमन्त्रणं च कुर्यात्, द्विराज्यस्योपघातं 'कामावकीर्णः' इति मन्त्रेण जुहुयात्, सं मा सिञ्चन्त्विति त्रिभिरभिमन्त्रयेत । आत्मानं पुनीते आयुश्चात्मनि स्थापयति ॥

[9]वरो दक्षिणेत्यादि ॥ गतम् ॥

इति द्वितीये अष्टादशोऽनुवाकः.

---

[1]भूः प्रपद्ये भुवः प्रपद्ये स्वः प्रपद्ये भूर्भुवस्स्वः प्रपद्ये ब्रह्म प्रपद्ये ब्रह्मकोशं प्रपद्येऽमृतं प्रपद्येऽमृतकोशं प्रपद्ये चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यंति तं प्रपद्ये देवान्प्रपद्ये देवपुरं प्रपद्ये परीं-

[1]इदानीं सर्वयागारम्भेषु आयुष्करं ब्रह्मोपस्थानं विधित्सुः तन्मन्त्रमाह—**भूः प्रपद्य** इति ॥ अत्र च सर्वात्मभूतमेव वस्तु ब्रह्माख्यं भूरादिभेदाध्यारोपेण स्तूयते, भूरादिभेदानां काल्पनिकत्वात् । अन्य आहुः—परमार्था एव भूरादिभेदाः ब्रह्मण एवांशा इति । भूरादिभेदभिन्नस्य प्रथमं प्रपत्ति[1]र्भजनं, ततो **ब्रह्म प्रपद्ये** इत्यभिन्नस्य, **ब्रह्मकोश**मिति तत्स्थानस्य । **अमृत**मिति न विद्यते मृत्युर्यत्र तापत्रयलक्षणः । **अमृतकोश**मिति यत्रस्थानपि[2] मृत्युर्न पश्यति । तद्व्याचष्टे—**चतुर्जाल**मिति ॥ अन्नमयप्राणमयमनोमयविज्ञानमयैश्चतुर्भिर्जालैः आवरणैः आवृतं मुख्यं ब्रह्मस्थानम् । **देवा**निति तत्रस्थात् देवनशीलान् सर्वानप्यात्मनः । **देवपुर**मिति ॥ सर्वेषमापपि देवानां देवनस्थानं तदेव ब्रह्मस्थानम् । एवं भूरादिप्रपत्त्या[3] न मे मृत्युरित्युक्तम् । इदानीं तु अशक्यमेव मृत्युना मत्पार्श्वे प्रवेष्टुमिति दर्शयितुमाह—**परीवृत** इति । अहं सर्वतो वृतः परिवारस्थानीयेन गुप्तः । किंच **वरीवृतः** अत्यर्थं वृतः रक्ष्यत्वेन स्वीकृतः । केन? वर्मस्थानीयेन **ब्रह्मणा**ऽपि विश्वोपादानात्मना[4] **कश्यपस्य** च **तेजसा** कश्यपस्यात्मनः—"कश्यपः पश्यकः"[1] इति न्यायात् सर्वसाक्षी ईश्वरः कश्यपः **तस्य**—तेजसा प्रकाशात्मना रूपेण अहं परीवृतो वरीवृत इत्येव ।

[1]"प्रतिपत्तिः" इति पाठान्तरम्. [2]"स्थानमपि" इति पाठान्तरम्.
[3]"प्रतिपत्त्या" इति पाठान्तरम्. [4]"स्वोपादानात्मना" इति पाठान्तरम्.

**वृतो वरीवृतो ब्रह्मणा वर्मणाऽहं तेजसा कश्यपस्य [2]यस्मै नमस्तच्छिरो धर्मो मूर्धानं ब्रह्मोत्तरा हनुर्यज्ञोऽधरा विष्णुर् हृदयꣳ *संवथ्सरः प्रजननमश्विनौ पूर्वपादावत्रिर्मध्यं मित्रावरुणावपरपादावग्निः पुच्छस्य प्रथमं काण्डं तत इन्द्रस्ततः**

---

पूर्वत्रोपसर्गस्य दीर्घत्वम्; उत्तरत्र यङ्लुकि अभ्यासस्य रीगागमः ॥

[2]अधुना ईश्वरस्य शरीरस्थानीयं अंशपरिणामं विश्वोपादानं शिशुमारदेहत्वेन रूपयति—**यस्मा** इति ॥ यस्मा एव नमस्कारः कर्तव्य इति प्रश्नान्ते वक्ष्यते स एवेश्वरोऽस्य शरीरस्य **शिर** इव प्रधानभूतः यथा "मखस्य शिरोसि"[1] इति, आत्मेति यावत्, ममेदमित्यभिमन्तृत्वात् । **धर्मो मूर्धानं**, विभक्तिव्यत्ययः, मूर्धा, आगळादुत्तमाङ्गस्य शरीरस्य उत्तमत्वादेव । **ब्रह्मा** च **यज्ञश्च** हनुद्वयं, ग्रसनीयाकर्षणात् । **विष्णुर्हृदयं** आन्तरस्थानविशेषः, व्यापकत्वात्, पवित्रत्वाच्च । **अश्विनौ पूर्वपादौ**, आदानशक्तिहेतुत्वात् । **अत्रिर्मध्यं**, मृत्युरेवोदरं, अत्ता अत्रिः । **मित्रावरुणावपरपादौ**, प्रतिष्ठाहेतुत्वाज्जगतः । **अग्न्यादयः पुच्छस्य प्रथमादीनि** काण्डानि पर्वाणि । अग्नीन्द्रौ गतौ । **प्रजापतिः** कश्यपाख्योष्टमस्सूर्यः । **अभयमिति** ध्रुवात्मकं ब्रह्मैव, यतः प्रभृति उपाधिभयं नास्ति ॥

---

*"संवत्सरः प्रजननं" इत्येष मन्त्रावयवो भाष्यग्रन्थपर्यालोचने अधिक इव भाति. [1]आ. १-८. [2]आ. ४-१.

प्रजापतिरभयं चतुर्थꣳ [3]स वा एष दिव्यश्शाक्वरश्शिशुमार[4]स्तꣳ ह य एवं वेदाप पुनर्मृत्युं जयति जयति स्वर्गं लोकं नाध्वनि प्रमीयते *नाग्नौ प्रमीयते नाप्सु प्रमीयते नानपत्यः प्रमीयते लघ्वान्नो भवति [5]ध्रुवस्त्वमसि ध्रुवस्य क्षितमसि त्वं भूतानामधिपतिरसि त्वं भूतानाꣳ श्रेष्ठोऽसि त्वां भूतान्युप

[3]**स वा एष दिव्यः** दिवि भवः **शाक्वरः** महाशक्तिः । यद्वा—**शाक्वरः** वृषभः तद्वान् स एव वा । यद्वा—सप्तव्यूहव्याप्तविश्वः शिरोमूर्धहनुहृदयपादमध्यपुच्छात्मकत्वात् । **शिशुमारो** ग्राहविशेषः, तदाकारेण रूपितत्वादेवमुच्यते । अन्य आह—शिशून् अज्ञानेव अयं मारयति न विदुष इति ॥

[4]**तं** विश्वात्मानमीश्वरं **एवं** अनेन रूपेणावस्थितं **यो वेद** स **पुनर्मृत्युमपजयति, जयति** च **स्वर्गम्** । अध्वादिविषयं पापमरणं तस्य नास्ति । अनपत्यमरणं च पापं, सन्तानोच्छेदेन पितॄणां शोकहेतुत्वात् । **अलघ्वान्न** इति सर्वदा सर्वत्र सुलभत्वात् । छान्दसं दीर्घत्वम् ॥

[5]**ध्रुव** इत्यादि पूर्वस्यैव मन्त्रस्य शेषः । हे शिशुमारात्मन्! ईश्वर! **ध्रुवस्त्वमसि** ध्रुवोऽविनाशः । **ध्रुवस्य** चात्माकाशादेः **क्षितं** निवासस्थानं **त्वमसि** । **भूतानां** च सर्वेषां **त्वमधिपतिः** अधिकं पालयिता स्वामी **असि** । त्वमेव च **भूतानां श्रेष्ठः** प्रशस्यतरोऽसि । **त्वामेवोपेत्य** सर्वाणि भूतानि **पर्याव-**

*नाप्सु प्रमीयते नाग्नौ प्रमीयते इति द्राविडपाठः.

पर्यावर्तन्ते नमस्ते नमस्सर्वं ते नमो* नमश्शिशुकुमाराय नमः ॥ १९ ॥

†नमः प्राच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो दक्षिणायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमः प्रतीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम उदीच्यै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नम ऊर्ध्वायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽधरायै दिशे याश्च देवता एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमोऽवान्तरायै दिशे याश्च देवता

र्तन्ते परितः उपासते, त्वामेवोपजीव्य वर्तन्ते । यद्वा—त्वामेवोपेत्य परितः सर्वतः मर्यादया वर्तन्ते, त्वदाज्ञामुद्रिता वर्तन्ते । 'गतिर्गतौ' इति परिशब्दो निहन्यते; उपशब्दोऽसमस्त एव आद्युदात्तः, कर्मप्रवचनीयत्वात् 'प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधः' इति । **नमस्ते नम** इति नमस्कारस्तस्मै तुभ्यमेव नान्यस्मै कस्मै चिदपि, आराध्याधीनात्मसम्पादनत्वान्नमस्कारस्य । सर्वेषां च त्वमेव आराध्य इति । यस्मादेवं तुभ्यमेव नमः तस्मात् नमस्तुभ्यमिति गम्यते । तस्मात्तुभ्यमेव नमस्कारं कुर्मः । यदुक्तं त्वमेव नमस्कार्य इति तदुपपादनार्थमाह—**सर्वं ते नम** इति ।

*नमस्ते नमस्सर्वं ते नमः. इत्येतावदेव द्राविडपाठः.

† नमः प्राच्यै इत्यनुवाकस्थ भाष्यं भट्टभास्करीये न दृश्यते ।

एतस्यां प्रतिवसन्त्येताभ्यश्च नमो नमो गङ्गायमुनयोर्मध्ये ये वसन्ति ते मे प्रसन्नात्मानश्चिरं जीवितं वर्धयन्ति नमो गङ्गायमुनयोर्मुनिभ्यश्च नमो नमो गङ्गायमुनयोर्मुनिभ्यश्च नमः ॥ २० ॥

सह रक्षाꣳसि यद्देवास्सप्तदश यद्दीव्यन्पश्चेदशायुष्टे चतुस्त्रिꣳशद्वैश्वानराय षड्विꣳशतिर्वातरशना ह कूश्माण्डैरजान् ह पश्च ब्रह्मयज्ञेन ग्रामे मध्यन्दिने तस्य वै मेघस्तस्य वै द्यौ रिच्यते दुहे ह कतिधाऽवकीर्णी भूर्नमः प्राच्यै विꣳशतिः ॥२०॥

सह ब्रह्मयज्ञेन विꣳशतिः ॥ २० ॥

ओम् ॥ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥

॥ ओं शान्तिश्शान्तिश्शान्तिः ॥

हरिः ओम् श्रीकृष्णार्पणमस्तु.

---

यस्मात् सर्वं तवैव स्वं भवति त्वमेव च स्वामी तस्मात् तुभ्यमेव नमः, स्वामित्वात् त्वमेव सर्वैर्नमस्कार्य इति ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये स्वाध्यायब्राह्मणे एकोनविंशोऽनुवाकः.

समाप्तश्च द्वितीयः प्रपाठकः.

## तृतीयप्रश्नप्रारम्भः

ओम् ॥ तच्छंयोरावृणीमहे । गातुं यज्ञाय । गातुं यज्ञपतये । दैवी स्वस्तिरस्तु नः । स्वस्तिर्मानुषेभ्यः । ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे । शं चतुष्पदे ॥ ओं शान्तिश्शान्तिश्शान्तिः.

हरिः ओम् ॥ [1]चित्तिस्स्रुक् । चित्तमाज्यम् ।

---

[1]अथ चातुर्होत्रियमग्निमधिकृत्योच्यते । तत्राग्रेण दर्भस्तम्बं दशहोतारं प्रतिमन्त्रं उदञ्चं उपदधाति चित्तिस्स्रुगित्यादिभिर्दशभिर्मन्त्रैः दशेष्टका उपदधाति, । "ब्रह्म वै चतुर्होतारः"* इति काठके ब्राह्मणमाम्नातम् । अत्र मन्त्रा आम्नायन्ते । सर्वत्रेष्टकाः स्तूयन्ते । "चित्तिस्स्रुक्, तया देवतया" इत्यादिरुपधानक्रमः। आदौ सिसृक्षुः प्रजापतिः सृष्ट्यर्थं केन चिद्यागेन आध्यात्मिकेन इष्टवान् । तस्य यागस्य चित्तिस्स्रुक् । सिसृक्षोः या बुद्धिः सृष्टिसङ्कल्पात्मिका सा चित्तिः । सा अस्य यागस्य स्रुग्बभूव, सर्वस्य मूलत्वात् । सा सर्वयागसाधनस्रुग्भावेन रूप्यते । यथा जुह्वा विना यागो न निर्वर्तयितुं शक्यते, एवं चित्त्या विना न शक्यते जगत्स्रष्टुम् । सैव स्रुक्कार्यमकरोदि[1]त्यर्थः । चित्तमाज्यमिति सर्वध्येयतत्त्वाश्रयो[2] महान् चित्तं, तदेवाज्यं, प्रधानोपकरणत्वात्, चित्तिस्रुक्स्थितत्वाच्च । वाग्वेदिः वाक् अभिलापात्मिका वेदिः, सर्वाभिधेयाधारत्वात् । आधीतं बर्हिः । आधेयं आधीतम् ।

---

*ब्रा. ३-१२-५.

[1]'मनुकरोति' इति च पाठः. [2]'सर्वचैत्राश्रयो' इत्यपि पाठः.

**वाग्वेदिः । आधीतं बर्हिः । केतो अग्निः । विज्ञातमग्निः* । वाक्पतिर् होता । मन उपवक्ता । प्रा-**

हिभावाभावश्छान्दसः । रूपमुच्यते । यद्वा—आधीतं आवाञ्छितं, तदेव रूपं, तद्बर्हिः, वाग्वेद्यां स्तीर्णत्वात् । एवं नामरूपे उक्ते । **केतो अग्निः** केतयिता व्याकर्ता येन ते व्याकृते नामरूपे, तेषु सृष्टेषु अनुप्रविष्टो जीवात्मा अग्निराहवनीयः, चितिर्वा । यथोक्तं "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि"† इति । **विज्ञातमग्निः**, विविधं ज्ञातं विज्ञातं सृष्टं विविधनामरूपं विश्वं अग्निः । यद्वा—सृष्टं विश्वं मयेति या तुष्टिः प्रजापतेः सा अग्निः । यद्वा—केतो अग्निः हुतभुक्, विज्ञातमग्निः आग्नीध्रः । तथाऽन्येषां 'अग्नीत्' इत्येव पाठः। **वाक्पतिः** वाचः प्रसवितृ प्राजापत्यं वागिन्द्रियं, स **होता । मन उपवक्ता,** मनः प्राजापत्यं उपवक्ता ब्रह्मा, सर्वकर्महेतुत्वात् । **प्राणो हविः** प्राजापत्यः प्राणः बललक्षणः स एव हविः इष्टसाधनं, अग्निर्वा, हविषां अग्निरूपत्वात् । **सामाध्वर्युः**, समत्वं साम माध्यस्थ्यम् । यद्वा—सृष्ट्यर्थं तपस्साम कष्टवत्त्वात्, तदेवाध्वर्युः, जगत्सृष्टिलक्षणाध्वरनिर्वर्ति‡हेतुत्वात् । एवमयं दशहोता दशभूतो यज्ञात्मा प्रजापतिरेव । "ब्रह्मात्मन्वदसृजत"§ इत्यादि ब्राह्मणम् । सर्वेषां चैषां चतुर्होतृत्वादेभिः कृतोऽग्निः चातुर्होत्र उच्यते । उक्तं च—"दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । अथ कस्माच्चतुर्होतार उच्यन्त इति । इन्द्रो वै चतुर्होता ।"¶ इत्यादि ॥

*मग्नीत् इति केचित्. †छा. उ.

‡'लक्षणाध्वरतिरार्ति' इति च पाठः. §आ. २-३-११' ¶आ. २-३-१.

**णो ह॒विः । सा॒मा॑ध्व॒र्युः । [2]वाच॑स्पते विधे नामन्न् । वि॒धेम॑ ते॒ नाम॑ । वि॒धेस्त्वम॒स्माकं॒ नाम॑ । वा॒चस्पति॒स्सोम॑ पिबतु । आऽस्मासु॒ नृ॒म्णं धा॒त्स्वाहा॑ ॥ १ ॥**

**अ॒ध्व॒र्युः पञ्च॑ च ॥ १ ॥**

[2]अथ ग्रहेष्टकामुपदधाति—**वाचस्पत** इति ॥ 'तं ग्रहेणागृह्णात्'* इति ब्राह्मणम् । वाचस्पतिः प्रजापतिः । तदात्मना इष्टकैवामन्त्र्यते । हे वाचस्पत्यात्मिके! इष्टके! विधे! विधानात्मिके! विधातृत्वाल्लोकानां, नामन्! नमनकारिन्! लोकानां वशीकरणं नमनम् । 'नामन्त्रिते समानाधिकरणे' इति अविद्यमानवत्त्वस्य निषेधः । **ते** तव **नाम** नमनं अनुग्राहकत्वं वयं **विधेम** परिचरेम, त्वमप्यस्माकं **नाम** नमनं अनुग्राहकत्वं **विधेः** विधेहि अनुमन्यस्व । इदं च प्रार्थयामहे—**वाचस्पतिर्**यजमानः सम्यक्क्रियायां निर्वर्तितायां **सोमं पिबतु** सोमपानयोग्यस्सम्पद्यताम् । यद्वा—**वाचस्पतिः** प्रजापतिः **सोमं** सोमवत् प्रीणनं दशहोत्रात्मकं वागमृतं **पिबतु** शृणोत्विति यावत् । हे इष्टके! **अस्मासु नृम्णं** धनं नृणां मननीयं यागाख्यं **आधात्** आधेहि । दधातेर्लेटि शपो लुक् । स्वाहाकारो व्याख्यातः । 'अग्निमादधानो दशहोत्राऽरणिमवदध्यात्'† इत्यादिषु विनियोगः । सर्वत्र प्रजापतियज्ञस्मरणादिदमभिमतं तत्र क्रियासिद्धिरिति ॥

इत्यारण्यके तृतीये प्रथमोऽनुवाकः.

———

*ब्रा. ३-२-२, †ब्रा. २-३-१,

[1]पृ॒थि॒वी होता॑ । द्यौर॑ध्व॒र्युः । रु॒द्रोऽग्नीत् । बृ॒ह॒स्पति॑रुपव॒क्ता । [2]वाच॑स्पते वा॒चो वी॒र्ये॑ण । संभृ॑तत॒मेनाय॑क्ष्यसे । यज॑मानाय॒ वार्य॑म् । आ सु॒वस्क-

[1]दक्षिणतः प्राञ्चं चतुर्होतारमुपदधाति—**पृथिवी होतेति** ॥ पृथिव्या होतृत्वं आसीनत्वसाम्यात् । होताऽप्यासीनश्शंसति । पृथिवी च आसीना भवति, 'आस्त इव हीयं'* इति । दिवश्चाध्वर्युत्वं तिष्ठत्त्वसाम्यात् । तिष्ठन् ह्यध्वर्युः प्रतिगृह्णाति । द्यौश्च तिष्ठन्ती भवति, 'तिष्ठतीव ह्यसौ'* इति **रुद्रोऽग्नीत्** रुद्रः अग्निः प्राणो वा, स एवाग्नीत् । गतम् । **बृहस्पतिरेवोपवक्ता** बृहतां कर्मणां पातृत्वात् । 'पृथिवी होता, तया देवतया' इत्यादिरुपधानक्रमः सर्वत्र ॥

अथ ग्रहेष्टकामुपदधाति—**वाचस्पत** इति ॥ हे **वाचस्पते!** प्रजापते! **वाचो वीर्येण** तेन[1] मन्त्रेण चतुर्होत्रात्मना सर्ववाङ्मयसारेण **सम्भृततमेन** अतिशयेनैकत्र सम्भृतेन **आयक्ष्यसे** आभिमुख्येन इज्यसे, त्वमेव सङ्गम्यसे वा । व्यत्ययेन वर्तमाने लृट् । यद्वा—यक्ष पूजायां इत्यस्मात्कर्मणि लट् । स त्वं **अस्मै यजमानाय वार्यं** वरणीयं **सुवः** सुखं **आकः** आभिमुख्येन कुरु । करोतेश्छान्दसे लुङि "मन्त्रे घस" इति च्लेर्लुक्, "बहुलं छन्दस्यमाङ्योगेऽपि" इत्यडभावः । यद्वा—लेटि शपो लुक् । **वाचस्पतिस्सोमं पिबति** पिबत्विति व्याख्यातम् । लिङर्थे लेट् । **जजनत्** जनयतु **इन्द्रं** यजमानं कर्मेश्वरं **इन्द्रियाय** वीर्यार्थं

*सं. ३-२-९.

[1]'अनेन' इति च पाठः.

**रस्मै । वाचस्पतिस्सोमं पिबति । जजनदिन्द्रमिन्द्रियाय स्वाहा ॥ २ ॥**

**पृथिवी होता दश ॥ २ ॥**

[1]**अग्निर् होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता ।** [2]**सोमस्सोमस्य पुरोगाः । शुक्र-**

---

वीर्यस्याश्रयोऽयं यथा स्यादिति । स्वाहेति गतम् । जनेर्लेटि शपः श्लुः, अडागमः । दर्शपूर्णमासादिष्वस्य विनियोगः ॥

इत्यारण्यके तृतीये द्वितीयोनुवाकः.

---

[1]पश्चादुदञ्चं पञ्चहोतारमुपदधाति—**अग्निर्होतेति** ॥ देवानां आह्वातृत्वादग्नेर्होतृत्वम् । कर्मठत्वात **अश्विनौ अध्वर्यू** अध्वरस्य नेतारौ अध्वर्युः प्रतिप्रस्थाता च । **त्वष्टा अग्नीत्** आग्नीध्रः उत्तेजनहेतुत्वात्, अग्नीधश्च विहरणादिकृत्त्वात् । **मित्र उपवक्ता** ब्रह्मा, कर्मसाक्षित्वात् ॥

[2]अथ ग्रहेष्टकामुपदधाति ॥ **सोमो** वल्लीसोमस्य **पुरोगाः** प्रधानभूतः ओषधीशत्वात् । **शुक्रः** सोमरसः सर्वरसप्रधानभूतः शुक्र एव वा । ताभ्यामेव ते **सोमाः श्राताः** पक्वाः साधुसम्पादिताः हे **इन्द्र! वातापेः** वाततुल्यगमनस्य **हवनश्रुतः**

ञ्शुक्रस्य पुरोगाः । श्रातास्त इन्द्र सोमाः । वाता-
पेर् हवनश्रुतस्स्वाहा ॥ ३ ॥

अग्निर् होताऽष्टौ ॥ ३ ॥

[1]सूर्यं ते चक्षुः । वातं प्राणः । द्यां पृष्ठम् । अ-
न्तरिक्षमात्मा । अङ्गैर्यज्ञम् । पृथिवीꣳ शरीरैः ।

---

अह्वानस्य श्रोतुः, भक्तवत्सलस्येति यावत् । एवं भूतस्य तवेति । स्वाहेति गतम् । चातुर्मास्यादिषु विनियोगः ॥

इत्यारण्यके तृतीये तृतीयोनुवाकः.

---

[1]द्वौ षड्ढोतारौ, 'सूर्यं ते' इत्येकः 'वाग्घोता' इत्यन्यः तत्र च होतृब्राह्मणे 'वाग्घोता षड्ढोतृणाम्'* इति दर्शनात् । स एव 'उत्तरतः प्राञ्चं षड्ढोतारम्'* इति विधीयते । 'सूर्यं ते' इत्यस्य तु पशुबन्धादिषु विनियोगः । सूर्यं ते चक्षुः । हे वाचस्पते! तव चक्षुः सूर्यं अनुप्रविष्टमिति शेषः । सूर्यात्मना चक्षुषा त्वं विश्वं पश्यसीतिभावः । वातमनुप्रविष्टस्तव प्राणः त्वदीयेन प्राणेन विश्वं प्राणितीति । द्यां पृष्ठं उपरिभागः, स एव द्यौरिति । अन्तरिक्षं तव अत्मा । अङ्गैः अवयवैः यज्ञं, तव अङ्गानि यज्ञाङ्गानि । पृथिवीं शरीरैः शरीरेण । वचनव्यत्ययः । शरीरभेदैर्वा तव शरीरं पृथिवी इति ॥

---

*ब्रा. ३-१२-५

[2]वाचस्पतेऽच्छिद्रया वाचा । अच्छिद्रया जुह्वा । दिवि देवावृधꣳ होत्रामेरयस्व स्वाहा ॥ ४ ॥

सूर्यं ते नव ॥ ४ ॥

[1]महाहविर् होता । सत्यहविरध्वर्युः । अच्युतपाजा अग्नीत् । अच्युतमना उपवक्ता । अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ । अयास्य उद्गाता ।

---

[2]अथ ग्रहः ॥ हे **वाचस्पते! अच्छिद्रया** अविनाशया षड्ढोत्रात्मिकया **अच्छिद्रया जुह्वा** अच्छिद्रजुहूस्थानीयया **दिवि देवावृधं** देवानां वर्धयित्रीं **होत्रां** होतव्यं सोमादिहविः **एरयस्व** आभिमुख्येन ईरयस्व । स्वाहेति गतम् । वृधेर्ण्यन्तात् क्विपि 'बहुलमन्यत्रापि' इति णिलुक्, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् ॥

इत्यारण्यके तृतीये चतुर्थोऽनुवाकः.

---

[1]उपरिष्टात्प्राञ्चं सप्तहोतारमुपदधाति—**महाहविरिति** ॥ सौम्येष्वध्वरेषु विनियोगः । महत् सर्वं हविः यस्य तन्महाग्रासं ब्रह्मैव **होता,** होत्रा च महनीयं हविः भवतीति । यद्वा—**महाहविः** अग्निः सर्वभक्षकत्वात् । **सत्यहविरध्वर्युः** सत्यमेव हविः यस्य स सत्यहविः प्रजापतिः सोऽध्वर्युः, कर्तृत्वसाम्यात् । अच्युतं पाजः बलं वेगो वा यस्य स वायुः सोऽग्नीत् विहरणादिकृत्त्वात् । अच्युतं नित्यं सर्वत्र स्थितं मनो यस्य स विष्णुः स **उपवक्ता** ब्रह्मा सर्वकर्मसाक्षित्वात् । **अनाधृष्यः** केन चिदप्यनभिभवनीयः अ-

[2]वाचस्पते हृद्विधे नामन् । विधेमं ते नामं । विधेस्त्वमस्माकं नामं । वाचस्पतिस्सोमंमपात् । मा दैव्यस्तन्तुश्छेदि मा मनुष्यः । नमो दिवे । नमः पृथिव्यै स्वाहा ॥ ५ ॥

अपात्त्रीणि च ॥ ५ ॥

---

भिभवितुमशक्यः इन्द्रः, **अप्रतिधृष्यः** स्वयं अभिभवन्नपि योऽन्येन प्रत्यभिभवितुं न शक्यते सोऽप्रतिधृष्यः अग्निः, रुद्र इत्येके । उभयत्रापि 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । तावेवाभिगरौ **यज्ञस्य** उद्गातारमभिगन्तारौ प्रस्तोतृप्रतिहर्तारौ । केचिदाहुः—चर्मकर्ते व्यायच्छमानौ शूद्रार्यावेतौ यज्ञस्याभिगरौ प्रशंसानिन्दयोः कर्तारौ । पचाद्यच् । **अयास्यः** अङ्गिरसः पुत्र इत्येके । अन्य आहुः—अयानमयाः अविनाशः तत्र स्थितः अयास्यः । बहुव्रीहिर्वा । अविनाशे महिम्नि स्थितो अयास्यः, सर्वोत्तीर्ण ईश्वर एव । स **उद्गाता** गानस्थितत्वात् ॥

[2]अथ ग्रहः हे **वाचस्पते!** हे **हृत्!** उपसंहारकाले सर्वस्य हर्तः यद्वा—हृदि स्थितः सर्वस्य । **विधे! नामन्!** इत्यादि गतम् । **अपादिति** विशेषः, पिबत्वित्येवार्थः । छान्दसो लुङ् । **दैव्यः** दिवि भवः **तन्तुः** देवजातिः **मा छेदि** । 'देवाद्यञञौ' इति यञ् । **मा** च मनुष्यजातिः, छेदीत्येव । यद्वा—देवार्थो मनुष्यार्थश्च तन्तुः यज्ञः मा छेदि विच्छिन्नो मा भूत् । **नमो दिवे नमः पृथिव्यै** च तयोः तन्त्वोः स्थानाभ्याम् । स्वाहेति गतम् ॥

इत्यारण्यके तृतीये पञ्चमोऽनुवाकः.

---

[1]वाग्घोता । दीक्षा पत्नी । वातोऽध्वर्युः । आपोऽभिगरः । मनो हविः । तपसि जुहोमि । [2]भूर्भुवस्सुवः । ब्रह्म स्वयम्भु । ब्रह्मणे स्वयम्भुवे स्वाहा ॥ ६ ॥

वाग्घोता नव ॥ ६ ॥

---

[1]उत्तरतः प्राञ्चं षड्ढोतारमुपदधाति—वाग्घोतेति ॥ 'वाग्घोता षड्ढोतॄणां '* इत्येतद्ब्राह्मणोक्तत्वादयमेवोत्तरत इत्येके । क्रमाम्नानात् 'सूर्यं ते '† इत्ययमेव, न 'वाग्घोता' इति । द्वयोरपि स्तुतिरित्यन्ये । अपरे तु विकल्प इत्याहुः । वागेव मदीया मम होता शस्त्रादिवाक्स्थानीया दीक्षा नियमपरम्परा सैव पत्नी । वातः प्राणः स एव अध्वर्युः कर्तृत्वात् । आपोऽभिगरः अभिगरिता ब्रह्मा । यद्वा—अभिगरणं उद्देशादिर्यजमानव्यापारः, तद्धेतुत्वात् । मनो हविः आज्यादि, तृप्तिहेतुत्वात् । तपसि अग्निस्थानीये तत् मनोहविः जुहोमि स्थापयामि अविनाशेन प्रवर्तयामि इति सूचितं हविर्ग्रहणेन ॥

[2]अथ ग्रहः ॥ भूरादयस्सर्वेऽपि लोकाः ब्रह्मैव स्वयम्भु, स्वयमेव ब्रह्म भूरादिरूपेण भवतीति । अहं च मदीयः च यज्ञः सर्वं तदेव । तस्मै ब्रह्मणे स्वयम्भुवे स्वाहा स्वाहुतं भव, सुष्ठूपहिता वा भव ॥

इत्यरण्यके तृतीये षष्ठोऽनुवाकः.

---

*ब्रा. ३-१२-५. †आ. ३-४.

[1]ब्राह्मण एकंहोता । स यज्ञः । स में ददातु प्रजां पशून्पुष्टिं यशंः । यज्ञश्चं मे भूयात् । [2]अग्निर्द्विहोंता । स भर्ता । स में ददातु प्रजां पशून्पुष्टिं यशंः । भर्ता चं मे भूयात् । [3]पृथिवी त्रिहोंता । स प्रंतिष्ठा ॥ ७ ॥ स में ददातु प्रजां पशून्पुष्टिं यशंः । प्रतिष्ठा चं मे भूयात् । [4]अन्तरिंक्षं चतुंर्होता ।

---

[1]चातुर्मास्येषु केशनिवर्तनेषु ' तद्वतं तत्सत्यं '* इति जपित्वा तमेतमनुवाकं जपति । ब्रह्ममेधे च आदीयमानं प्रेतमेतेनानुवाकेन अभिमन्त्रयते—**ब्राह्मण एकहोता** इति ॥ एको होता ऋत्विक् यस्य स **एकहोता** । ' ऋतश्छन्दसि ' इति कबभावः । ईदृशो यज्ञविशेषो **ब्राह्मणो** नाम, तपोमयत्वात् तस्य तद्वद्दत्विगुपकारि[1]त्वेन रूप्यते । **स यज्ञः** स एवाग्निष्टोमादिः सर्वो यज्ञः, तत्साध्यत्वात् । **स मे ददातु** प्रजादि । स **च यज्ञः** सर्वदा **मे भूयात्** । एवं ' अग्निर्द्विहोता ' इत्यादि द्रष्टव्यम् ॥

[2]**अग्निः** द्वाभ्यां पाक[2]हविर्वहनाभ्यां विश्वं बिभर्तीति **द्विहोता** यज्ञः । स एव सर्वस्य **भर्ता** ॥

[3]**पृथिवी** त्रिभिः अग्न्यन्नयागैः सर्वप्रतिष्ठाहेतुः इति **त्रिहोता** यज्ञः ॥

[4]**अन्तरिक्षं** चतुर्भिः वाग्वृष्ट्यवकाशस्थानैः विश्वं विविधं स्थापयतीति ॥

---

*ब्रा. १-५-५. [1] " तद्वगित्विगुपकारिता " इत्यपि पाठः. [2]कव्य

स विष्ठाः । स मे ददातु प्रजां पशून्पुष्टिं यशः । विष्ठाश्च मे भूयात् । [5]वायुः पञ्चहोता । स प्राणः । स मे ददातु प्रजां पशून्पुष्टिं यशः । प्राणश्च मे भूयात् ॥ ८ ॥ [6]चन्द्रमाष्षड्ढोता । स ऋतूनकल्पयाति । स मे ददातु प्रजां पशून्पुष्टिं यशः । ऋतवश्च मे कल्पन्ताम् । [7]अन्नꣳ सप्तहोता । स प्राणस्य प्राणः । स मे ददातु प्रजां पशून्पुष्टिं यशः । प्राणस्य च मे प्राणो भूयात् । [8]द्यौरष्टहोता । सोऽनाधृष्यः ॥ ९ ॥ स मे ददातु प्रजां पशून्पुष्टिं यशः । अनाधृष्यश्च भूयासम् । [9]आदित्यो नवहोता । स तेजस्वी । स मे ददातु प्रजां पशून्पुष्टिं

---

[5]**वायुः** पञ्चभिः प्राणादिवृत्तिभिः विश्वं प्राणयति ॥

[6]**चन्द्रमाः षड्ढोता** षड्भिः ऋतुकल्पनाभिः विश्वं धारयति ॥

[7]**अन्नं** सप्तभिः शीर्षण्याभिः प्राणवृत्तिभिः प्राणयति विश्वं, तेषां प्राणनहेतुत्वात् ॥

[8]**द्यौः** अष्टाभिः इन्द्रियात्मभिः प्राणाद्यन्तःकरणान्तैः विश्वं वृष्ट्यादिद्वारेण तर्पयति, अनाधृष्टं सुखस्थानं भवति ॥

[9]**आदित्यो** नवभिः पूर्वोक्तैरष्टभिः आत्मना च विश्वं निर्वर्तयन् सर्वप्रत्यक्षं **तेजस्वी** भवति ॥

यशः । तेजस्वी चं भूयासम् । [10]प्रजापंतिर्दशंहोता । स इदꣳ सर्वम् । स मे ददातु प्रजां पशून्पुष्टिं यशः । सर्वं च मे भूयात् ॥ १० ॥

प्रतिष्ठा प्राणश्चं मे भूयादनाधृष्यस्सर्वं च
मे भूयात् ॥ ७ ॥

ब्राह्मणो यज्ञोऽग्निर्भर्ता पृथिवी प्रतिष्ठाऽन्तरिक्षं विष्ठा वायुः प्राणश्चन्द्रमां ऋतूनन्नꣳ स प्राणस्यं

[10]प्रजापतिर्दशभिः पूर्वोक्तैः नवभिः स्थावरात्मना च सर्वमिदं भूत्वा तिष्ठति ॥

इत्यारण्यके तृतीये सप्तमोऽनुवाकः.

---

[1]अथ सम्भारयजूंषि अग्निर्यजुर्भिरित्यादीनि ॥ 'हृदयं यजूंषि पत्न्यश्च '* इत्यादिषु विनियोगः । हृदयं 'सुवर्णं घर्मं '† इत्यनुवाकः । एतानि यजूंषि । पत्न्यो वक्ष्यन्ते 'सेनेन्द्रस्य '‡ इत्यादयः । अग्निर्यजुर्भिः यज्ञं सम्भृतवान् । तैस्तद्वान् इत्यन्ये । अस्य यजुश्शब्दसम्बन्धित्वात् सर्वाणि यजूंषि । सविता स्तोमैः त्रिवृदादिभिः यज्ञं सम्भृतवान् । एवं सर्वत्र । उक्थामदैः स्तोत्रशस्त्रैः । आशिषा प्रार्थनामन्त्रैः । गतमन्यत् । विष्णुर्यज्ञेन तद्वान् । स्वगाकारेण यथायथं[1] हविस्स्वामिनां

*आ. ३-१२-५. †आ. ३-११. ‡आ. ३-९.

[1]" यथा तथं " इत्यपि पाठः.

प्राणो द्यौर्नाधृष्य आदित्यस्स तेजस्वी प्रजापति-
स्स इदꣳ सर्वꣳ सर्वं च मे भूयात् ॥

[1]अग्निर्यजुर्भिः । सविता स्तोमैः । इन्द्र उक्था-
मदैः । मित्रावरुणावाशिषा । अङ्गिरसो धिष्णि-
यैरग्निभिः । मरुतस्सदोहविर्धानाभ्याम् । आपः
प्रोक्षणीभिः । ओषधयो बर्हिषा । अदितिर्वेद्या ।
सोमो दीक्षया ॥ ११ ॥ त्वष्टेध्मेन । विष्णुर्यज्ञेन ।
वसव आज्येन । आदित्या दक्षिणाभिः । विश्वे
देवा ऊर्जा । पूषा स्वगाकारेण । बृहस्पतिः पुरो-
धया । प्रजापतिरुद्गीथेन । अन्तरिक्षं पवित्रेण ।
वायुः पात्रैः । अहꣳ श्रद्धया ॥ १२ ॥

दीक्षया पात्रैरेकं च ॥ ८ ॥

[1]सेनेन्द्रस्य । धेना बृहस्पतेः । पथ्या पूष्णः ।

---

हविस्सम्बन्धकरणेन । **पुरोधया** प्राधान्येन, ब्रह्मत्वेन वा **उद्गीथेन** उद्गानेन द्वितीयया चतुर्थ्या वा विभक्त्या । **पवित्रेण** दशापवित्रेण । **पात्रैः** ऊर्ध्वपात्रैः **अहं श्रद्धया** सर्वदा यजे इति ॥

इत्यारण्यके तृतीये अष्टमोऽनुवाकः.

---

[1]अथ पत्नीष्टकाः **सेनेन्द्रस्येत्याद्याः** ॥ पूर्ववद्विनियोगः । देवानां पत्नयः' इत्यन्ते वचनात् **इन्द्रस्य सेना** पत्नी पाल-

वाग्वायोः । दीक्षा सोमस्य । पृथिव्यग्नेः । वसूनां गायत्री । रुद्राणां त्रिष्टुक् । आदित्यानां जगती । विष्णोरनुष्टुक् ॥ १३ ॥ वरुणस्य विराट् । यज्ञस्य पङ्क्तिः । प्रजापतेरनुमतिः । मित्रस्य श्रद्धा । सवितुः प्रसूतिः । सूर्यस्य मरीचिः । चन्द्रमसो रोहिणी । ऋषीणामरुन्धती । पर्जन्यस्य विद्युत् । चतस्रो दिशः । चतस्रोऽवान्तरदिशाः । अहश्च रात्रिश्च । कृषिश्च वृष्टिश्च । त्विषिश्चापचितिश्च । आपश्चौषधयश्च । ऊर्क्च सूनृता च देवानां पत्नयः ॥ १४ ॥

अनुष्टुग्दिशाष्षट्च ॥ ९ ॥

---

यित्रीति केचित् । पत्न्येवेत्यन्ये । सा त्वामुपदधातीति सर्वत्र । सेनादयो गताः । संज्ञाश्चैताः । **चतस्रो दिश** इत्याद्यास्साधारणपत्न्यः । **अवान्तरदिशाः** कोणादिशः । आकारस्समासान्तः । **त्विषिः** दीप्तिः । **अपचितिः** पूजा । **ऊर्क्** अन्नं रसो वा । **सूनृता** प्रियसत्यात्मा वाक् । सर्वेषां **देवानां** एतेषां एता दिगादयस्साधारण्यः पत्न्यः । छान्दसं ह्रस्वत्वम् । सामर्थ्याच्च साधारण्य इति गम्यते ॥

इत्यारण्यके तृतीये नवमोऽनुवाकः.

[1]देवस्यं त्वा सवितुः प्रंसवे । अश्विनोर्बाहुभ्याम् । पूष्णो हस्ताभ्यां प्रतिगृह्णामि । राजां त्वा वरुंणो नयतु देवि दक्षिणेऽग्नये हिरंण्यम् । तेनांमृतत्वमंश्याम् । वयों दात्रे । मयो मह्यंमस्तु प्रतिग्रहीत्रे । क इदं कस्मां अदात् । कामः कामांय ।

[1]'हृदयं यजूंषि पत्न्यश्च । यथाऽवकाशं ग्रहान् । यथाऽवकाशं प्रतिग्रहाँल्लोकंपृणाश्च '* इत्युक्तम् । तत्र हृदयं वक्ष्यते 'सुवर्णं घर्मं '† इति यजूंषि । पत्न्यः ग्रहाश्चोक्ताः । इदानीं प्रतिग्रहेष्टका उच्यन्ते—**देवस्य** त्वेत्याद्याः ॥ 'गन्धर्वाप्सराभ्यस्स्रगलङ्करणे' इत्येकत्वे सप्तदश । भेदे त्वष्टादश । तत्र सावित्रादिभिः प्रतिगृह्णात्वित्यन्तैः प्रतिग्रहः । सर्वश्चायं 'सोमाय वासः" इत्यादिष्वनुषज्यते "अग्नये हिरण्यं" इति वर्जयित्वा । तत्र सावित्रो व्याख्यातः । **सवितुर्देवस्य प्रसवे** अनुज्ञायां लब्धायामिव **अश्विनो**रेव **बाहुभ्यां** नात्मीयाभ्यां **पूष्णो हस्ताभ्यां** प्रतिगृह्णामि । हे हिरण्यात्मिके ! **देवि! दक्षिणे! राजा वरुणः त्वां हिरण्यं अग्नये नयतु** । तच्चेयमिष्टकाऽस्ति । **तेन** हिरण्येन प्रतिगृहीतेन इष्टकाभूतेन अहं **अमृतत्वं अश्यां** प्राप्यासम् । **वयः** अन्नं **दात्रे** हिरण्यं दत्तवतेऽस्तु । **मह्यं** च तत्प्रतिग्रहीत्रे **मयः** सुख**मस्तु**, दातुरेवोपकारकत्वात् । किञ्च—**कः** प्रजापतिरेव **कस्मै** प्रजापतये **इदं** हिरण्यं **अदात्**, न देवदत्तो मह्यम् । अनिर्ज्ञातपरमार्थः प्रजापतिः कशब्देनोच्यते । यद्वा—क इति प्रजापतेस्संज्ञा, व्यत्ययेन स्मैभावः । **कामः** इच्छा ।

*ब्रा. ३-१२-५. †आ. ३-११.

कामो॑ दा॒ता ॥ १५ ॥ कामः॑ प्रतिग्रही॒ता । का-
मँ॑ समु॒द्रमावि॑श । कामे॑न त्वा॒ प्रति॑गृह्णामि ।
कामै॒तत्ते॑ । ए॒षा ते॑ काम॒ दक्षि॑णा । उ॒त्ता॒नस्त्वा॑-
ऽऽङ्गीर॒सः प्रति॑गृह्णातु । [2]सोमा॑य॒ वासः॑ । रु॒द्राय॒
गाम् । वरु॑णा॒याश्व॑म् । प्र॒जाप॑तये॒ पुरु॑षम् ॥ १६ ॥
मन॑वे॒ तल्प॑म् । त्वष्ट्रे॒ऽजाम् । पू॒ष्णेऽवि॑म् । निर्-
ऋ॑त्या अश्वतरगर्द॒भौ । हि॒मव॑तो ह॒स्तिन॑म् । ग॒-
न्धर्वा॒प्स॒राभ्य॑स्स्रगलङ्क॒र॒णे । विश्वे॑भ्यो दे॒वेभ्यो॑

काम एव कामाय ददाति । अन्य आह—इदं हिरण्यं को नाम कस्मै वा दातुमर्हति कामादृते । तस्मात् कामः कामाय ददाति । तथा हि—काम एव दाता, काम एव प्रतिग्रहीता, न देवदत्तो, न चाहम् । तस्मात् समुद्रं समुद्रसदृशं अनन्तत्वात् काममाविश । ततः कामेनैकीभावमापन्नं त्वां अहं प्रतिगृह्णामि । एवं हिरण्यमुक्त्वा इदानीं कामं प्रत्याह—हे काम ! एतत् ते हिरण्यं, त्वमेव प्रतिगृहाण । एषा हि त्वदीया दक्षिणा इदानीमिष्टकाभूता । अथ दक्षिणां प्रत्याह—हे दक्षिणे ! त्वामिष्टकाभूतां उत्तानः आङ्गीरसः प्रतिगृह्णातु । 'इयं वा उत्तान आङ्गीरसः'* इति ब्राह्मणम् । तस्मात् पृथिव्येव त्वां प्रतिगृह्णातु नाहमस्य प्रतिग्रहीतेति ॥

[2]अथ द्वितीयः सोमाय वास इत्यादि ॥ अत्रापि 'देवस्य त्वा' इत्यादि 'प्रतिगृह्णातु' इत्यन्तं समानम् । 'अग्नये हिरण्यं'

*ब्रा. २-२-५.

धान्यम् । वाचेऽन्नम् । ब्रह्मण ओदनम् । समुद्रायापः ॥ १७ ॥ उत्तानायाङ्गीरसायानः । वैश्वानराय रथम् । वैश्वानरः प्रत्नथा नाकमारुहत् । दिवः पृष्ठं भन्दमानस्सुमन्मभिः । स पूर्ववज्जनयञ्जन्तवे धनम् । समानमञ्ज्मा परियाति जागृविः । [3]राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथम् । तेनामृतत्वमश्याम् । वयो दात्रे । मयो मह्यमस्तु प्रतिग्रहीत्रे ॥ १८ ॥ क इदं कस्मा अदात् । कामः कामाय । कामो दाता । कामः प्रतिग्रहीता ।

---

इत्येतत्स्थाने 'सोमाय वासः' इति द्रष्टव्यम् । एवमुत्तरेष्वपि प्रयोगः । तल्पं शयनं, स्त्रीति केचित् । **गन्धर्वाप्सराभ्यस्स्रगलङ्करणे**, न यथासङ्ख्यं, उभयं उभयस्मै, इष्टत्वात् सम्भवाच्च ॥

[3]**वैश्वानर** इत्यादि जगती ॥ रथप्रतिग्रह एव विनियुज्यते । 'वैश्वानर्यर्चा रथं प्रतिगृह्णाति'* इति च ब्राह्मणम् । **वैश्वानरः** विश्वेषां नराणां स्वामित्वेन सम्बन्धी पार्थिवोऽग्निः स वैश्वानरः **प्रत्नथा** प्रत्न इव आदित्य इव । 'प्रत्नपूर्व' इति थाल्प्रत्ययः । **नाकं** द्युस्थानं **आरुहत्** । 'कृमृदृरुहिभ्यश्छन्दसि' इत्यङ्प्रत्ययः । **दिवः** आदित्यस्य **पृष्ठं** मण्डलभूतं **नाकं** आरुहत् **भन्दमानः** शोभमानः **सुमन्मभिः** सुष्ठुमन्तृभिः देवमनुष्यादिभिः स्तोतृभिः । मन्यतेर्मनिन् प्रत्ययः । **सः** अग्निः **जन्तवे** मनुष्यार्थं **पूर्ववत्** पृथिव्यामेव **धनं** **जनयत्** जनयितुकामः

---

*ब्रा. २-२-५.

कामꣳ समुद्रमाविंश । कामेन त्वा प्रतिगृह्णामि । कामैतत्ते । एषा ते काम दक्षिणा । उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु ॥ ११ ॥

दाता पुरुषमापः प्रतिग्रहीत्रे नव च ॥१०॥

[1]सुवर्णं घर्मं परिवेद वेनम् । इन्द्रस्यात्मानं द-

पार्थिवान् भोगान् पूर्ववदुत्पादयितुमिच्छन् **अज्मा** अजनशीलः जागृविः जागरणशीलः । यद्वा—अज्मा आदित्यः तेन समानम् । विभक्ति व्यत्ययः । परियाति पुनःपुनर्याति, कदाचिद्दिवमारोहति, अथ कदाचित्पृथिव्यां अवतरति । 'उद्यन्तं वावादित्यमग्निरनुसमारोहति'* इति च ब्राह्मणम् । **राजा** त्वेत्यादि व्याख्यातम् । 'वैश्वानराय' इति विशेषः ॥

इत्यारण्यके द्वितीये दशमोऽनुवाकः.

---

[1]'हृदयं यजूंषि'[†] इत्यादौ यदुक्तं हृदयमिति तदिदानीमुच्यते—**सुवर्णं घर्ममिति** ॥ अयमनुवाको होतृहृदयाख्यः होतॄणां पारमार्थ्यकथनात् । सर्वत्र दशहोत्रादिविभूतिभिन्नपरमात्मरूपेण इष्टकाः स्तूयन्ते । अध्यात्मपक्षे तु परमात्मैव । तत्रादौ दशहोतुः हृदयम् । सर्वाश्चैताः त्रिष्टुभः । विशेषो वक्ष्यते । **सुवर्णं** शोभनवर्णं **घर्मं** अग्निं चीयमानं अन्यत्र दीप्तं तप्तकाञ्चनप्रकाशं **वेनं** कान्तं अहं **परिवेद** सर्वतो जानामि । **इन्द्रस्य** ईश्वरस्य

*ब्रा. २-१-२. †ब्रा. ३-१२-५.

शधा चर॑न्तम् । अ॒न्तस्स॑मु॒द्रे मन॑सा चर॑न्तम् । ब्रह्माऽन्व॑विन्दद्द॒शहो॑तार॒मर्णे॑ । [2]अ॒न्तः प्रवि॑ष्टश्शा॒स्ता जना॑नाम् । ए॒कस्सन्ब॑हु॒धा वि॑चारः । श॒तꣳ शु॒क्राणि॒

विश्वाधिकस्य शासितुः आत्मानं प्रथमसमुन्मेषलक्षणं स्वभावान्तरं तस्यैव रूपान्तरत्वात् दशधा दशहोत्रात्मना चित्यादिभिः दशभिः प्रकारैः चरन्तं विश्वं व्याप्यस्थितं परमात्मानं सर्वतो जानामि नैतद्व्यतिरिक्तं व्यक्तं* किञ्चिदिति वेदात्मा वदति, यं दशहोतारं ब्रह्मा प्रजापतिः अन्वविन्दत् आत्मन् आत्मन् इत्यामन्त्रणानन्तरं अलभत मनसा अन्तःकरणेन प्रकाशोद्रिक्तलक्षणात्मना । क्वेत्याह— अन्तः मध्ये समुद्रे समुन्दनवति† अर्णे वृष्टौ तद्धेतुत्वादादित्यमण्डलं लक्ष्यते, अरणशीलं वा; उपलक्षणत्वाच्च सर्वेषु शरीरेषु चरन्तं तपोबलेन उपलब्धवान् ब्रह्मा ब्रह्माण्डशरीरः पुरुषविशेषो ब्रह्मा, स परमात्मानं दशहोत्रात्मरूपेण चरन्तं चित्यादिमयं भावनामयं यागात्मानं तपसा ज्ञातवानित्यर्थः । तादृशं महानुभावं दशहोतारं परिवेदेति ॥

[2]एवमिन्द्रस्यात्मनाऽविभागेन दशहोता स्तुतः, इदानीं इन्द्राभेदेनापि स्तूयते—अन्तः प्रविष्ट इति ॥ अथ योऽयं तस्याप्यात्मनः शरीरवदावारकस्य अन्तः प्रविष्टः सर्वशरीराणां वा कारयितृत्वेन अन्तरवस्थितः सूक्ष्मरूपः शास्ता शासिता स्वेच्छया प्रेरयिता जनानां सर्वेषामपि मशकादिमूलकारणान्तानां अधिकारिणाम् । यथाऽऽहुः—'प्रशासितारं सर्वेषाम्'‡ इति । श्रूयते च—'धियो यो नः प्रचोदयात्'§ इति । अथ कीदृशोऽयमि-

*व्यक्तमिति नास्ति क्वचित्. †'समुद्रवति' इति "समुन्नतवति" इति च पा.
‡मनुस्मृ. १२-१२२. §सं. १-५-६.

यत्रैकं भवन्ति। सर्वे वेदा यत्रैकं भवन्ति। सर्वे हो-

त्याह—एक इति । एक एव सन् बहुधा विभिन्नचरणो भवति । चरणं वृत्तिः । एकधा च बहुधा च भवतीति यावत् । यद्वा—गत्यर्थाः बुद्ध्यर्थाः । एकस्वभाव एव सन् बहुस्वभावतया विज्ञायत इति । एतदुक्तं भवति—एकमेव वस्तु विचित्रानन्तशक्तिकं वशित्वेशितृत्वादीनां गुणानां परा काष्ठा वस्तुतोऽस्ति, तत् तादृशे स्वे महिम्नि सदा दीप्यमानं विविधानन्तरूपपरिग्रहेण विश्वमादर्शयति, तत्रतत्रानुप्रविश्य रमते । तदिदमुक्तं—'तत्सृष्ट्वा । तदेवानुप्राविशत्'* इति । प्रथमं तु विश्वोपादानं सर्वार्थसाधनत्वेन सङ्कल्पयत् आविर्भावयति, तदात्मना स्वयमवतिष्ठते, यस्य अनन्तप्रकाशस्य विष्फुलिङ्गास्सर्वेऽप्यात्मानः, तथा 'तमेव भान्तमनुभाति सर्वम्'† इति । तस्मिंश्च सर्वक्रियात्मनि सर्वेऽपि यज्ञादिपरिस्पन्दास्तत्फलानि च प्रतितिष्ठन्ति 'यत एव यज्ञं प्रयुङ्क्ते । तदेनं प्रतिष्ठापयति'‡ इति । तथा तत्र परानन्दनादात्मनि सर्ववाङ्मयविकल्पाः§ प्रवर्तन्ते, यथा 'सर्वे वेदा यत्रैकं भवन्ति' इति । ततश्च सर्वशक्त्याश्रयत्वात् विचित्रचिदचित्प्रपञ्चसमुत्पत्त्यादयः । इदमुक्तं 'यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति'¶ इति । तस्यैव परानन्दात्मनो लेशास्सर्वेऽपि प्रजापत्यादीनामानन्दाः 'स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः'** इति । एवमन्नमयादिपञ्चकाविभागावस्थात्मकपरमाकाशशरीरं ब्रह्मेति तदेवांशेन तत्तदात्मना स्वयमेवावतिष्ठते । तच्च यावदुपादेयं तदनुरूपमुपादानं प्रव-

*उ. २-६. †कठो. ५-१५. ‡ब्रा. ३-३-९.
§'वाङ्मयचिन्तकाः' इति पा. ¶उ. ३-१. **उ. २-८.

तारो यत्रैकं भवन्ति । स मानसीन आत्मा जनानाम् ॥२०॥ [3]अन्तः प्रविष्टश्शास्ता जनानाꣳ सर्वात्मा । सर्वाः प्रजा यत्रैकं भवन्ति । चतुर्हो-

र्तते । तदेव यदा सिसृक्षोपहितं केन चिदावृतमिव शरीरिवच्चाभिमन्यमानं भवति तदा महाशरीरो महापुरुष इत्युच्यते । यस्य लेशा अण्डजादयः त एव प्रतिनियतशरीरा जीवाः । एवं स्वसमवेतमायाशक्तिसहकृतो विचित्रचिदचित्प्रपञ्चरूपेण विजृम्भमाणो विश्वानि पृथिव्यन्तानि तत्त्वानि तात्त्विकांश्च भावान् अनुगृह्णाति । किञ्च—**शतं** अनेकानि सर्वाणि **शुक्राणि** निर्मलानि आत्मवस्तूनि तेजांसि वा शुक्लानि जगतां बीजानि कारणानि च **यत्रैकं** अविभक्तं चिन्मात्रं वा भवति, **सर्वे वेदाः** वैदिकाश्शब्दाश्श्रुतिस्मृतिपुराणेतिहासशास्त्रागमप्रभृतयः, वेद्या वा अर्थाः आत्मादिपृथिव्यन्ता भावाः ते च सर्वे **यत्रैकं भवन्ति** स एवार्थः । **सर्वे च होतारः** चतुर्होत्रादयः आत्मविशेषाः अग्निविशेषा वा प्रजापतीन्द्रवायुचन्द्रसूर्या वा ते च **यत्रैकं भवन्ति** सः तादृशः **अन्तःप्रविष्टः** सर्वेषां **यश्शास्ता,** स एवायं **मानसीनः** जनानामात्मा दशहोत्राख्यः । मनस उत्पन्नो मानसीनः, छान्दसः खञ् । यथा ‘मनः प्रजापतिमसृजत । प्रजापतिः प्रजा असृजत’* इति । तदिदमुक्तं—‘मनसा अन्वविन्दत्’ इति । सोऽयं चित्याद्युपादानो मानसः प्रजापतिः दशहोता नामात्मन[1] एव प्रजापतिरभूदिति यावत् ॥

[3]एवं विश्वोपादानावस्थेन शासित्रवस्थेन च ब्रह्मणा अभेदं

*ब्रा. ३-२-९.

[1]नाम मन.

तारो यत्र सम्पदं गच्छन्ति देवैः। स मानसीन आत्मा जनानाम् । [4]ब्रह्मेन्द्रमग्निं जगतः प्रतिष्ठाम् । दिव आत्मानꣳ सवितारं बृहस्पतिम् । चतुर्होतारं प्रदिशोऽनुक्लृप्तम् । वाचो वीर्यं तपसाऽन्वविं-

दशहोतुः प्रतिपाद्य इदानीं तयोरप्यवस्थाविशेषत्वेन धर्मधर्मिस्थानीययोरत्यन्तभेदाभावप्रतिपादनेन तदुभयात्मत्वेन दशहोतारं स्तौति—अन्तःप्रविष्ट इति ॥ अत्र सर्वात्मेति त्रीण्यक्षराण्यभिक्रान्तानि । योऽयमन्तःप्रविष्टो जनानां शास्ता शासिता सर्वात्मा पृथिव्यन्तो जगत्प्रपञ्चः सर्वं तिरोहितावयवभेदं अनेकं सर्वमिति कृत्वा तदभिन्नं यज्जगदुपादानं तदात्मा तेन अविभक्तस्वभावो यः शासिता सर्वाः प्रजाः प्रजाताः भावाः अनित्याः विकारपदार्थाः यत्रैकं भवन्ति स एवार्थः । चतुर्होतारो यत्र सम्पदं गच्छन्ति । दशहोत्रादयः पञ्चापि चतुर्होतारः । यथोक्तं—'दशहोता चतुर्होता । पञ्चहोता षड्ढोता सप्तहोता । अथ कस्माच्चतुर्होतार उच्यन्त इति । इन्द्रो वै चतुर्होता । इन्द्रः खलु वै श्रेष्ठो देवतानामुपदेशनात्'* इति । तेऽपि यत्र सम्पदं सम्पत्तिं तद्भावं एकत्वं गच्छन्ति । सम्पदादिलक्षणः क्विप् । देवैस्सह देवा अपि यत्रैकत्वं गच्छन्तीति यावत् । स मानसीन इत्यादि । व्याख्यातम् ॥

[4]अथ द्वितीयचतुर्होतृहृदयं—'स दशहोतुश्चतुर्होतारं निरमिमीत'† इति तत उत्पन्नत्वात् । ब्रह्मेत्यादि ॥ परमात्मावयव-

*ब्रा. २-३-१. †ब्रा. २-२-११.

न्दत् । [5]अन्तः प्रविष्टं कर्तारमेतम् । त्वष्टारꣳ रूपाणि विकुर्वन्तं विपश्चिम् ॥ २१ ॥ अमृतस्य प्राणं यज्ञमेतम् । चतुर्होतृणामात्मानं कवयो निचिक्युः । [6]अन्तः प्रविष्टं कर्तारमेतम् । देवानां बन्धु निहितं गुहासु । अमृतेन क्लृप्तं यज्ञमेतम् । च-

---

त्वात्तद्धर्मैरयं स्तूयते । इन्द्रादिविभूतिभिन्नं आत्मानं चतुर्होतृरूपेण **ब्रह्मान्वविन्दत्** । **दिव** इति । प्रतिष्ठामित्येव । आत्मानं परमात्मानं **प्रदिशः** प्रदेशान् सर्वान् **अनुक्लृप्तं** सर्वेषु प्रदेशेष्ववस्थितम् । लक्षणे अनोः कर्मप्रवचनीयत्वम् । वाचो वीर्यं सर्वस्य वाङ्मयस्य सारं **चतुर्होतारं** इन्द्ररूपिणं परमात्मानं **तपसाऽन्वविन्दत्** इन्द्र आत्मा जीवः तद्रूपम् ॥

[5]तदेवाह—**अन्तः प्रविष्टमिति** ॥ जीवभावेन सर्वेषु **शरीरेषु अनुप्रविष्टं कर्तारं** जीवात्मानं **एतं** अग्निं चतुर्होत्राख्यं **त्वष्टारं** त्वष्टा भूत्वा **रूपाणि विकुर्वन्तं** विविधं मानुषादिभेदेन कुर्वन्तं **विपश्चिं** विपश्चितं मेधाविनम् । छान्दसोऽन्त्यलोपः । **अमृतस्य** इन्द्रियगणस्य **प्राणं** प्राणयितारं **यज्ञं** यज्ञवन्तं इज्याफलस्य भोक्तारं **चतुर्होतृणां** दशहोत्रादीनां पञ्चानामपि **आत्मानं** चतुर्होतृरूपेण स्थितम् । 'नामि' इति दीर्घाभावश्छान्दसः । एवं विशिष्टं चतुर्होतारं **कवयः** ज्ञानवन्तः **निचिक्युः** नितरां पूजयन्ति, निभृतं वा रक्षन्ति । छान्दसे लिटि 'चायः की' इति कीभावः । यद्वा—एवंविधं निश्चिन्वन्ति । 'विभाषा चेः' इति कुत्वम् ॥

[6]पुनरपि जीवात्मानं स्तौति—**अन्तः प्रविष्टमिति** ॥ गतम् ।

तुरहोतृणामात्मानं कवयो निचिक्युः । [7]शतं नि-
युतः परिवेद विश्वा विश्ववारः । विश्वमिदं वृणा-
ति । इन्द्रस्यात्मा निहितः पञ्चहोता । अमृतं देवा-

---

उक्तानुवादो वक्ष्यमाणस्य विषयप्रदर्शनार्थः । **देवानां** इन्द्रियाणां देवनशीलानां प्राणानां उपलक्षणं वा देवादीनां सर्वविकाराणां **बन्धु** बन्धनं बन्धनकारिणं निबन्धनं वा । 'सुपां सुलुक्' इति द्वितीयाया लुक् । एवंभूतं कर्तारं **गुहासु** हृदयेषु **निहितं** गुह्यस्वभावं **अमृतेन** परमात्मनैव **क्लृप्तं** सर्वशरीरेष्वादर्शितं अमृतेन वा यज्ञफलेन **क्लृप्तं** लब्धात्मानं **यज्ञमेत**मित्यादि व्याख्यातम् ॥

[7]अथ पञ्चहोतुः हृदयं—**शतमिति** ॥ वायुरूपेण स्तूयते । 'विश्वा' इति प्रथमपादान्तः । वायोरश्वा नियुतः । इह तु तद्विधारगशक्तयो लक्ष्यन्ते । **शतं** अनेकप्रकाराः सर्वा अपि **नियुतः परिवेद** जानामि वायोः । **विश्ववारः** विश्वस्य वारयिता छादयिता वारिता वा अयं वायुः याभिः **विश्वमिदं वृणाति** व्याप्नोति छादयति वा । यद्वा—विश्वे वाराः कालाः यस्य स विश्ववारः नित्यगतिः । पूर्वपदप्रकृतिस्वरत्वमुपपन्नं भवति । **इन्द्रस्यात्मेति** गतम् । इह पञ्चहोत्रात्मकवायुरूपेणावस्थितः परमात्मोच्यते—**निहितः** सर्वशरीरेषु प्राणादिवृत्तिरूपेणावस्थितः **अमृतं** अमरणहेतुः **देवानां आयुः** जीवनहेतुः **प्रजानां** उत्पन्नानां, ईदृशोऽयं याभिः **विश्वं वृणाति** ता **विश्वा** अहं **परिवेदेति** ॥

नामायुः प्रजानाम् ॥ २२ ॥ [8]इन्द्रꣳ राजानꣳ सवितारमेतम् । वायोरात्मानं कवयो निचिक्युः । रश्मिꣳ रश्मीनां मध्ये तपन्तम् । ऋतस्य पदे कवयो निपान्ति । [9]य आण्डकोशे भुवनं बिभर्ति । अनिर्भिण्णस्सन्नथ लोकान् विचष्टे । यस्याण्डकोशꣳ शुष्ममाहुः प्राणमुल्बम् । तेन क्लृप्तोऽमृतेना-

[8]इन्द्रमिति ॥ कार्ये कारणशब्दः 'स चतुर्होतुः पञ्चहोतारं निरमिमीत '* इति । इन्द्रकारणकं शासितृकारणकं वा राजानं दीप्तिमन्तं सवितारं सर्वस्य कारणं वायोरात्मानं अनन्यभूतं शरीरं एतं पञ्चहोतारं कवयो निचिक्युः । गतम् । रश्मिं रश्मिमयं यमनहेतुं[1] विश्वस्य रश्मिमन्तं वा रश्मीनां मध्ये तपन्तं आदित्यान्तरपुरुषत्वेन वर्तमानं परमात्मानं पञ्चहोत्रात्मकं ऋतस्य यज्ञस्य पदे स्थाने कवयो निपान्ति निभृतं रक्षन्ति हविर्भिः स्तुतिभिर्वा पूजयन्तीति यावत् ॥

[9]य आण्डकोश इति ॥ अण्डं ब्रह्माण्डं तदेव कोशः अण्डकोशः तत्रजातं आण्डकोशं सर्वविकारजातं तस्मिन् जाते सति भुवनं भूतजातं सर्वं यो बिभर्ति धारयति स्वयं अनिर्भिण्णः अविभक्तस्सन् तेनापृथग्भूत एव सन् अथ च लोकान् सर्वान् विचष्टे पश्यति धारणमेव दर्शनम् । यद्वा—अनिर्भिण्णः गर्भादनिर्गतकल्पस्सन् लोकान् धारयति । तदेवाह—यस्याण्डकोशमेव उल्बं वस्तिपुट[2]माहुः । यस्य प्राणमेव प्राणवृत्तिमेव शुष्मं प्रजानां बलमाहुः आत्मीयाभिर्वृत्तिभिः बल-

[1]धमनहेतुं. *ब्रा. २-२-११. [2]वस्तुपुट.

हमस्मि । [10]सुवर्णं कोशꣳ रजसा परीवृतम् । देवानां वसुधानीं विराजम् ॥ २३ ॥ अमृतस्य पूर्णां तामु कलां विचक्षते । पादꣳ षड्ढोतुर्न किला विविथ्से । [11]येनर्तवः पञ्चधोत क्लृप्ताः । उत वा षड्धा मन-

स्थानीयाभिः विश्वाः प्रजाः धारयन् अण्डकोशाख्यं उल्बमधिवसन्तीति । **तेन अमृतेन** आत्मना पञ्चहोत्राख्येन **क्लृप्तो** लब्धात्मा **अहमस्मि** ॥

[10]अथ षड्ढोतृहृदयम्—**सुवर्णमिति** ॥ चन्द्रमस्त्वेन स्तूयते । **सुवर्णं** निर्मलवर्णं **कोशं** अमृतस्थानं चन्द्रोपलक्षणं **रजसा** उदकेन **परीवृतं** अम्मयत्वात् । यद्वा—**रजसा** अन्तरिक्षेण **परीवृतं** वेष्टितं **देवानां वसुधानीं** वसुनः वरिष्ठस्य धनस्य अमृतत्वलक्षणस्य धानीं निधानस्थानभूतां **विराजं अमृतस्य** उदकस्य **पूर्णां तां** आत्मनः **कलां** भागं **विचक्षते** विचक्षणा आहुः ते नूनं **षड्ढोतुः** आत्मनः **पादं** भागं **न किला विविथ्से** नैव जानन्ति षड्ढोतुरियं कला अमृतात्मिकेति तमसा आवृता न जानन्ति । विदेर्लेटि व्यत्ययेनात्मनेपदं, शपः श्लुः, 'सिब्बहुलं लेटि' 'लोपस्त आत्मनेपदेषु' इति तलोपः, अतोगुणे पररूपत्वं, 'निपातस्य च' इति किलशब्दस्य संहितायां दीर्घत्वम् । किलशब्दश्च पारमार्थ्यं सूचयति ॥

[11]**येनेति** ॥ येन षड्ढोत्राख्येन आत्मना **ऋतवः पञ्चधा**ऽपि **क्लृप्ताः** हेमन्तशिशिरयोरेकत्वात् पञ्चधात्वम् । **षड्धा**ऽपि **क्लृप्ताः** तयोः द्विभावादिभेदेन भिन्नत्वात् । '**षष उत्वम्**' इति पाक्षि-

स्रोत क्लृप्ताः । तꣳ षड्ढोतारमृतुभिः कल्पमानम् । ऋतस्य पदे कवयो निपान्ति । [12]अन्तः प्रविष्टं कर्तारमेतम् । अन्तश्चन्द्रमसि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्यात्मानꣳ शतधा चरन्तम् ॥ २४ ॥ [13]इन्द्रो राजा जगतो य ईशे । सप्तहोता सप्तधा विक्लृप्तः । [14]परेण तन्तुं परि-

कत्वान्न क्रियते । उत अपिच मनसा सङ्कल्पेन क्लृप्ताः यथा पूर्वं प्रवर्तिताः स्वेस्वे धर्मे अवैपरीत्येन प्रवर्तिताः । तं तादृशं षड्ढोतारं ऋतुभिः द्वारभूतैः स्वयमेव तेषु धर्मेषु कल्पमानं अविपर्यासेन प्रवर्तयन्तम् । ऋतस्य पदे इत्यादि । गतम् ॥

[12]अन्तः प्रविष्टमिति ॥ मनोभावेन सर्वेषामन्तः प्रविश्य कर्तारं कर्माणि कुर्वाणं एतं षड्ढोतारं अन्तश्चन्द्रमसि मनसा प्रज्ञानरूपेण चरन्तं उक्तेन प्रकारेण षड्ढोत्रादिरूपेण बहुधा चरन्तं न विजानन्ति मन्दज्ञानाः । ज्ञानिनस्तु तं दृष्ट्वा मुच्यन्ते इति ॥

[13]अथ सप्तहोतुः हृदयेष्टका आन्तादनुवाकस्य—इन्द्र इति द्विपदा त्रिष्टुप् ॥ ईश्वरात्मा स्तूयते । इन्द्रः ईश्वरः राजा स्वामी जगतः स्वव्यतिरिक्तस्य राजमानश्च भवति य ईशे ईष्टे जगतः शासितुं शक्तः । 'अधीगर्थ' इति कर्मणि षष्ठी, 'लोपस्त आत्मनेपदेषु' इति तलोपः । स एवायं सप्तहोता सप्तधा सप्तभिः प्रकारैः 'महाहविः* इत्यादिभिः विक्लृप्तः विविचितः ॥

[14]परेणेति त्रिपदा त्रिष्टुप् ॥ तं परेण तेनैव ईश्वरेण परि-

*आ. ३-४.

षिच्यमानम् । अन्तरादित्ये मनसा चरन्तम् । दे-
वानाꣳ हृदयं ब्रह्माऽन्वविन्दत् । [15]ब्रह्मैतद्ब्रह्मण उ-
ज्जभार । अर्कꣳ श्चोतन्तꣳ सरिरस्य मध्ये । [16]आ
यस्मिन्थ्सप्त पेरवः । मेहन्ति बहुलाꣳ श्रियम् ।

षिच्यमानं आप्यायमानं तन्तुं अविच्छिन्नं यज्ञात्मानं वा अन्तरादित्येऽपि मनसा ज्ञानरूपेणैव चरन्तं सर्वदोहिनां ज्ञानात्मानमिति यावत् । देवानां सर्वेषामपि विकाराणां हृदयं हृदि स्थितं उपास्यं ईदृशं सप्तहोतारं ब्रह्मा प्रजापतिः अन्वविन्दत् आदौ लब्धवान् तपसा ॥

[15]ब्रह्मेति द्विपदा त्रिष्टुप् ॥ तत् सप्तहोत्रात्मकं ब्रह्म ब्रह्मणः वेदात् आत्मनो वा ब्रह्मा उज्जभार रसवदुद्धृतवान् । कीदृशं? अर्कं सूर्यात्मानं स्तोतव्यं वा श्चोतन्तं मध्यमात्मना उदकं क्षरन्तं सरिरस्य अन्तरिक्षस्य मध्ये सूर्यात्मना स्तूयते॥

[16]अतः परं तिस्रो गायत्र्यः—आ यस्मिन्निति ॥ यस्मिन् आदित्यात्मनि सप्तहोतरि सवितारः सप्त पेरवः पानशीलाः उदकस्य रक्षणशीला वा । 'पामोरुरिच्च' इति रुप्रत्ययः । रश्मयः 'साकंजानाम्'* इत्यत्रोक्ताः मेहन्ति सिञ्चन्ति बहुलां महतीं श्रियं वृष्टिरूपां सर्वस्य लोकस्य बह्वश्वां गोमतीं च सर्वसमृद्धिहेतुत्वात् वृष्टेः । 'बहोर्नञ्वत्' इति नञ्वद्भावात् बह्वश्वामित्युत्तरपदान्तोदात्तत्वम् । हे इन्द्र! ईश्वर! ॥

*आ. १-३.

बह्वश्वामिन्द्र गोमतीम् ॥ २५ ॥ [17]अच्युतां बहुलाꣳ श्रियम् । स हरिर्वसुवित्तमः । पेरुरिन्द्राय पिन्वते । [18]बह्वश्वामिन्द्र गोमतीम् । अच्युतां बहुलाꣳ श्रियम् । मह्यमिन्द्रो नियच्छतु । [19]शतꣳशता अस्य युक्ता हरीणाम् । अर्वाङायातु वसुभी रश्मिरि-

---

[17]अच्युतामिति ॥ अच्युतां अविनाशां **बहुलां श्रियं** हविर्लक्षणां **सः** सप्तहोता **हरिः** हरणशीलः उदकस्य **वसुवित्तमः** अतिशयेन वसूनां धनानां हविरादीनां वेदयिता लम्भयिता **पेरुः** रक्षणशीलः प्रजानां **इन्द्राय** यज्ञाय तत्स्वामिने वा **पिन्वते** सिञ्चति वृष्टिद्वारेण हविर्भाजोऽपि रक्षन्तीति ॥

[18]बह्वश्वामिति ॥ हे इन्द्र! **बह्वश्वां गोमतीं अच्युतां बहुलां** च **श्रियं** पूर्वोक्तां द्विप्रकारामपि श्रियं **मह्यं इन्द्रः** यज्ञः तत्स्वामी वा **नियच्छतु** एतावत्तव स्वमिति विभजतु । यद्वा— नितरां ददातु ॥

[19]**शतमिति** ॥ **शतंशता** बहूनि शतानि सहस्रम् । 'शेश्छन्दसि' इति लोपः, ईषाअक्षादित्वात् सवर्णदीर्घाभावः संहितायाम् । **हरीणां** उदकस्य हरणशीलानां रश्मीनां सहस्रं **अस्य** मण्डले **युक्तानि** वृष्ट्यर्थमुद्युक्तानि परम्परया सर्वेषामपि वृष्टिहेतुत्वात् । एवं जगदनुग्राहकोऽयमिति गम्यते । सोऽयं **इन्द्रः** ईश्वरः सूर्यात्मा **अर्वाङ्** अर्वागञ्चनः इतः अभिमुखः **आयातु** । **रश्मिः** नियन्तृस्वभावः **वसुभिः** जगतां वासहेतुभिः **वसुना** वरिष्ठेन **उदकेन** तद्वद्भिर्वा **सहस्रसङ्ख्यैः** **रश्मिभिः युक्तः**

न्द्रः । प्रम॑ꣳहमाणो बहुलाꣳ श्रिय॑म् । र॒श्मिरिन्द्र॑स्सवि॒ता म॒ नि य॑च्छतु ॥ २६ ॥ [20]घृ॒तं ते॒जो मधु॑मदिन्द्रियम् । मय्य॒यम॒ग्निर्द॑धातु । [21]हरिः पत॒ङ्गः प॑ट॒री सु॑प॒र्णः । दि॒वि॒क्षयो॒ नभ॑सा॒ य एति॑ । स न॒

---

आयातु । आयास्यन् बहुलां महतीं वृष्टिलक्षणां श्रियं नियच्छतु ददातु प्रमंहमाणः वर्धमानः स्तुतिभिस्स्तोतव्यो वर्धते । यथा 'वर्धन्तु त्वा सुष्टुतयो गिरो मे '* इति । यद्वा—प्रमंहमाणः पूज्यमानः । यगभावश्छान्दसः, अनुस्वारोपजनश्च । कीदृशः ? रश्मिः आदित्यात्मा इन्द्रः ईश्वरः सविता विश्वस्य बोधप्रदानादिभिः ॥

[20]घृतमिति विराड्गायत्री द्विपदा ॥ घृतं उदकं तेजः उज्ज्वलं तेज एव वा मधुमत् मधुररसं इन्द्रियं इन्द्रसृष्टं इन्द्रियमेव वा मयि अयमग्निः आदित्यात्मा दधातु स्थापयतु ॥

[21]हरिरिति त्रिपदा त्रिष्टुप् ॥ हरिः उदकाहरणशीलः पतङ्गः ज्ञानहेतुः पटरी तेजःपटलवान् सुपर्णः शोभनपतनः दिविक्षयः द्युलोकनिवासी । पचाद्यच्, 'तत्पुरुषे कृति बहुलम् ' इत्यलुक्, कृदुत्तरपदप्रकृतिस्वरत्वेन 'क्षयो निवासे ' इत्याद्युदात्तत्वम् । यः एवंभूतो नभसा अन्तरिक्षेण सर्वदा एति गच्छति, सः तादृशः आदित्यात्मा इन्द्रः ईश्वरः नः अस्मभ्यं कामवरं कामानां मध्ये वरिष्ठं वरं ददातु । यद्वा—इष्टं वरं ददातु ॥

---

*सं. २-२-१२.

इन्द्रः कामवरं ददातु । [22]पञ्चारं चक्रं परिवर्तते पृथु । हिरण्यज्योतिस्सरिरस्य मध्ये । अजस्रं ज्योतिर्नभसा सर्पदेति । स न इन्द्रः कामवरं ददातु । [23]सप्त युञ्जन्ति रथमेकचक्रम् ॥ २७॥ एको अश्वो वहति सप्तनामा । त्रिनाभिं चक्रमजरमनर्वम् । ये-

[22]**पञ्चारमिति** ॥ पञ्च अरस्थानीया ऋतवो यस्य तत् **पञ्चारं चक्रं** संवत्सराख्यं **पृथु** विस्तीर्णं तस्यप्रवर्तकत्वात् आदित्यमण्डलमभेदेनोच्यते । **हिरण्यज्योतिः** हितरमणीयज्योतिः । छान्दसोऽन्त्यलोपः । सरिरस्य अन्तरिक्षस्य मध्ये अजस्रं सर्वदा ज्योतिः द्योतमानं नभसा आकाशेन सर्पत् सृप्त एव नो त्सुत्य- एवं सदा य **एति** गच्छति; **स** इत्यादि । गतम् ॥

[23]**सप्तेति** कालात्मा रथत्वेन रूप्यते ॥ **सप्त** रश्मयः अश्वस्थानीयाः **युञ्जन्ति रथं** रंहणशीलं कालं **एकचक्रं** एकप्रकारं परिवर्तते । अथ के पुनस्ते सप्त; कीदृश पुनस्तच्चक्रमित्याह—**एक** इति । **एक** एव **अश्वो** व्याप्तिमान् रश्मिः **सप्तनामा** सप्तभिः प्रकारैः उदकस्य नामयिता **वहति** इमं संवत्सररथम् । अस्य चक्रं पूर्वोक्तं **त्रिनाभि** नाभित्रयेण[1] तद्वत्, त्रिषु स्थानेषु ग्रीष्मवसन्तहेमन्तेषु नद्धत्वात् । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । **अजरं** अविनाशि **अनर्वं** अनर्घं[2] अमोघं **येन** संवत्सररथेन **इमा विश्वा** इमानि विश्वानि **भुवनानि तस्थुः** तिष्ठन्ति, न नश्यन्ति अयमेव संवत्सरः परिवर्तमानः कालात्मेति ॥

[1]त्र्यवयवेनेति पाठः.

[2]अनर्घं.

नेमा विश्वा भुवनानि तस्थुः । [24]भद्रं पश्यन्त उप-
सेदुरग्रे । तपो दीक्षामृषयस्सुवर्विदः । ततः क्षत्रं
बलमोजश्च जातम् । तदस्मै देवा अभि सं नमन्तु ।
[25]श्वेतꣳ रश्मिं बोभुज्यमानम् । अपां नेतारं भुवन-
स्य गोपाम् । इन्द्रं निचिक्युः परमे व्योमन्न् ॥
२८॥ [26]रोहिणीः पिङ्गला एकरूपाः । क्षरन्तीः पि-

[24]भद्रमिति ॥ भद्रं कल्याणं पश्यन्तः आम्योमव नो भविष्यतीत्येवं निश्चिन्वाना अग्रे पूर्वं तपः अनशनादि दीक्षां यज्ञं च उपसेदुः उपसन्नाः उपगताः साधनत्वेन* परिगृह्यानुष्ठितवन्तः ऋषयः द्रष्टारः सुवर्विदः आदित्यविदः । ततश्च तेषां क्षत्वं क्षतात् त्राणं बलं ओजो दीप्तिश्च आदित्यात् जातं तत् सर्वं अस्मै यजमानाय देवा आभिमुख्येन सन्नमन्तु समानयन्तु ॥

[25]श्वेतमिति त्रिपदा त्रिष्टुप् ॥ श्वेतं निर्मलं रश्मिं यद्योगादिदं जगत् श्वेतं भवति, बोभुज्यमानं भृशमुदकं भुञ्जानं अपांनेतारं प्रापयितारं द्युस्थाने पक्कं मध्यमस्थानं गमयितारं भुवनस्य गोपां गोपायितारं वृष्टिद्वारेण भूतजातस्य सर्वस्य रक्षकम् । गुपेरायप्रत्ययान्तात् क्विपि यलोपः । एवंकुर्वाणं आदित्यात्मानं इन्द्रं परमे व्योमन् परमात्मसंज्ञे ज्योतिषि स्थितं निचिक्युः पूजयन्ति । यद्वा—इन्द्र एव इत्थं करोतीति निश्चिन्वन्ति मनीषिणः ॥

[26]रोहिणीरिति त्रिपदा त्रिष्टुप् ॥ इदानीं श्वेतरश्मौ तथा प्रवर्तमाने भूमिष्ठा रोहिण्यः पिङ्गलाश्च आपः एकरूपा भवन्ति

*प्रधानत्वेनेति पाठः.

ङ्गला एकंरूपाः । शतꣳ सहस्राणि प्रयुतानि ना-
व्यानाम् । [27]अयं यश्श्वेतो रश्मिः । परि सर्वमिदं
जगत् । प्रजां पशून्धनानि । अस्माकं ददातु ।
[28]श्वेतो रश्मिः परि सर्वं बभूव । सुवन्मह्यं पशून् वि-
श्वरूपान् । [29]पतङ्गमक्तमसुरस्य मायया ॥ २९ ॥
हृदा पश्यन्ति मनसा मनीषिणः । समुद्रे अन्तः

---

सर्वाः आपः एकरूपा भवन्तीति यावत् । पिङ्गला एव भवन्ति । अथ ताश्च पिङ्गलाः क्षरन्तीश्च दिवः पतन्त्यश्च **एकरूपा** भवन्ति । एवं **नाव्यानां** नावा तार्याणां 'नौवयोधर्म' इति यत् । अतिप्रवृद्धानां अपां शतं बहूनि **सहस्राणि प्रयुतानि** शतसहस्राणि दशगुणितानि च भवन्ति । अनेन क्रमेणापरिमिता भवन्त्याप इत्यर्थः ॥

[27]अयमित्यनुष्टुप् ॥ **योऽयं श्वेतो रश्मिः इदं** जगत् विश्वं **परिभवति** श्वेतं करोति सः **अस्माकं** अस्मभ्यं प्रजादिकं ददातु ॥

[28]**श्वेतो रश्मिरिति** द्विपदा ॥ यः **श्वेतो रश्मिः सर्वं परि-बभूव** परिभवति सः **मह्यं विश्वरूपान् पशून् सुवत्** सौतु अनुजानातु ददात्विति यावत् । सौतेर्लेटि शपो लुक्, 'लेटोडाटौ' इति अडागमः ॥

[29]**पतङ्गमिति** ॥ पतङ्गः आदित्यः तद्रूपेण अक्तं व्यक्तिं गतं आत्मानं **असुरस्य** असनकुशलस्य सर्वोपाधिरहितस्य परस्य 'असेरुरन्' इति उरन् प्रत्ययः । **मायया** प्रज्ञया एवं पर-

**कवयो विचक्षते । मरीचीनां पदमिच्छन्ति वेधसः ।[30] पतङ्गो वाचं मनसा बिभर्ति । तां गन्धर्वोऽवदद्गर्भे अन्तः । तां द्योतमानाꣳ स्वर्यं मनीषाम् ।**

---

गात्मानमेव आदित्यात्मना व्यक्ति गतं हृदा हृदि मनसा मानसप्रत्यक्षेणैव **पश्यन्ति मनीषिणः** मनस ईशितारः । अन्ये तु **कवयः** मेधाविनः **समुद्रे** आदित्यमण्डले **अन्तः विचक्षते** पश्यन्ति तमात्मानं, ते तु **वेधसः** विधानकुशलाः प्राज्ञाः **मरीचीनां** आदित्यानां **पदं** स्थानं **इच्छन्ति** प्रवेष्टुमिच्छन्ति[1] ॥

[30]पतङ्ग इति ॥ **पतङ्गः** आदित्यः **वाचं मनसा** मननीयया प्रज्ञया सङ्कल्पेन वा मनोरूपेण वा प्रथमं **बिभर्ति** धारयति। **तां** वाचं **गन्धर्वो** वायुः गां उदकं धयति पिबतीति गन्धर्वः **अवदत्** वदति वादयति प्रेरयति **गर्भे अन्तः** शरीरस्य मध्ये **तां द्योतमानां** अन्तर्विराजमानां **मनीषां** मनसोऽपि ईशित्रीं मनसो निग्रहहेतुं **स्वर्यं** स्वर्गगामिनीम् । री गतौ । स्वर्गस्य वा गमयित्रीम् । ई गतौ, क्विपि 'एरनेकाचः' इति यणादेशे 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' इति स्वरितत्वम् । स्वर्गस्य हेतुमित्येके । स्वर्गाय हितमित्यपरे । स्वरलिङ्गयोर्व्यत्ययः । तां वाचं वृष्टि[2]लक्षणां **ऋतस्य** आदित्यस्य **पदे** स्थाने स्थाननिमित्तं **कवयः निपान्ति** निभृतं रक्षन्ति पूजयन्ति अभ्यस्यन्ति वा ॥

---

[1]पदं किं स्थाननिवृत्तिं.

[2]सृष्टि इति पा.

ऋतस्य पदे कवयो निपान्ति। [31]ये ग्राम्याः पशवो विश्वरूपाः। विरूपास्सन्तो बहुधैकरूपाः। अग्निस्ताꣳ अग्रे प्रमुमोक्तु देवः॥ ३०॥ प्रजापतिः प्रजया संविदानः। [32]वीतꣳ स्तुकेस्तुके। युवमस्मासु नियच्छतम्। प्रप्र यज्ञपतिं तिर। [33]ये ग्राम्याः पशवो विश्वरूपाः। विरूपास्सन्तो बहुधैक-

---

[31]ये इति॥ ये **ग्राम्याः पशवः** गवादयः **विश्वरूपाः** विश्वप्रकाराः नानाजातीयाः **विरूपाः** विविधरूपाः विविधव्यक्तयः **बहुधा** बहुप्रकारं **विरूपा** अपि **सन्तः एकरूपाः** पशुत्वेनैकस्वभावाः **तान्** पशून् **अग्निः अग्रे** प्रथमं **प्रमुमोक्तु** प्रमुमुच्य अस्मभ्यं ददातु। **प्रजापतिश्च** प्रमुमोक्तु **प्रजया** तया गवादिकया **संविदानः** ऐकमत्यं गतः तदविरोधेन तान् अस्मभ्यं ददातु॥

[32]**वीतमिति** गायत्री॥ **वीतं** प्रजननम्। वी गत्यादिषु। **स्तुकेस्तुके** सर्वस्मिन् स्तुके सर्वगवादिसम्बन्धिन्यपत्ये उत्पत्तिं **नियच्छतं** दत्तं नियमेन स्थापयतं **अस्मासु** अस्मदर्थं **युवं** युवां हे अग्निप्रजापती!। किञ्च—**यज्ञपतिं** च **प्रतिर** वर्धयतम्! वचनव्यत्ययः, 'प्रसमुपोदः' इति द्विर्वचनम्॥

[33]**ये ग्राम्या इति**॥ ये पूर्वोक्ताः। **ग्राम्याः पशवः** विश्वरूपादिगुणाः **तेषां सप्तानां** गोश्वाजाविपुरुषगर्दभोष्ट्राणां **इह** अस्मासु **रन्तिः** रतिः **अस्तु रायः** धनस्य **पोषाय**।

रूपाः । तेषाꣳ सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय। [34]य आरण्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः ॥ ३१ ॥ वायुस्ताꣳ अग्रे प्रमुमोक्तु देवः । प्रजापतिः प्रजया संविदानः । [35]इडायै सृप्तं घृतवच्चराचरम् । देवा अन्वविन्दन्गुहा हितम् । [36]य आरण्याः पशवो विश्वरूपाः । विरूपास्सन्तो बहुधैकरूपाः । तेषाꣳ

'षष्ठ्याः पतिपुत्र' इति सत्वम् । सुप्रजास्त्वाय । छान्दसं दीर्घत्वम् । सुवीर्याय सुवीर्यत्वाय । रमेः 'क्तिच्क्तौ च' इति क्तिच्, 'न क्तिचि दीर्घश्च' इति नलोपाभावः, वृषादिर्द्रष्टव्यः । क्तिन्येव वा व्यत्ययेन नलोपाभावः ॥

[34]य अरण्या इति ॥ व्याख्यातप्रायम् । वायुस्तान् इति विशेषः । वायोरारण्याधिपतित्वात् ॥

[35]इडाया इति द्विपदा त्रिष्टुप् ॥ इडायै इडायाः सृप्तं उत्पन्नं घृतवत् उदकवत् उदकेन यत् चराचरं* जगत् देवा अन्वविन्दन् सर्वेऽपि विकारा लब्धवन्तः गुहाहितं गुहायां आत्मनि निहितम् ॥

[36]य आरण्या इति गतम् ॥ तेषां सप्तानां आरण्यानां

*उदकेन सचराचरमिति पाठः.

सप्तानामिह रन्तिरस्तु । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥ ३२ ॥

आत्मा जनानां विकुर्वन्तं विपश्चिं प्रजानां वसुधानीं विराजं चरन्तं गोमतीं मे नियच्छत्वेकं चक्रं व्योमन्मायया देव एकरूपा अष्टौ च ॥ ११ ॥

[1]सहस्रशीर्षा पुरुषः । सहस्राक्षस्सहस्रपात् ।

---

पशूनां द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटनादेयानां इह रन्तिरस्त्वित्यादि । गतम् ॥

इत्यारण्यके तृतीये एकादशोनुवाकः.

---

[1]अथ पुरुषानुवाकः—सहस्रशीर्षेत्यादि ॥ आनुष्टुभस्सर्वोऽनुवाकः, विशेषो वक्ष्यते । अग्नौ पुरुषाकृतौ चीयमानायां पुरुषशिरः उपहितस्य शिरः कृत्वा पुरुषाकृतिमुपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते । पुरुषमेधे च 'पशूनुपाकृतान् दक्षिणतोऽवस्थाप्य ब्रह्मा सहस्रशीर्षा पुरुष इति पुरुषेण नारायणेन पराचा अनुशंसति । अथ नारायणाभ्यामुपस्थानं' इत्यादिषु विनियोगः । अयमुत्तरश्चानुवाकौ नारायणाख्यौ, नारायणाख्येन ऋषिणा दृष्टौ । आभ्यां च पुरुषाख्यो नारायणः प्रतिपाद्यते । उक्तं च—आत्मनि पुरुषावस्थे प्रपञ्चप्रविष्टः पुरुषः, उत्तीर्णः परमात्मेति । पुरुषसूक्तमिति चैनं बह्वृचा आहुः । अथ 'सहस्रशीर्षं देवम्'*

---

*याज्ञिकी. ११.

स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् ।

इत्यपरो नारायणानुवाको भविष्यति, यत्र परमात्मा प्रणवाख्यो नारायणः प्रतिपाद्यते। तस्य अग्न्यादिश्रौतपुरुषवत् कर्मसम्बन्धाभावात् इहानाम्नानम्। अत्र पुरुषाख्या[1]पोक्षितावरणस्थानीयं देहविशेषं महापुरुषस्य निरूपयति—सहस्रशीर्षा अनेकशिरस्कः। 'शीर्षंश्छन्दसि' इति शीर्षन्भावः । पुरि शेते इति **पुरुषः** । पृषोदरादिः । **सहस्राक्षः** अनेकदृष्टिः। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच् समासान्तः। सतिशिष्टस्समासान्तस्वरः प्रवर्तते। **सहस्रपात्** अनेकचरणः। 'सङ्ख्यासुपूर्वस्य' इति पादशब्दस्य पद्भावः। सर्वत्र शिरःप्रभृतिकार्यसद्भावात् शिरः प्रभृतीनामनेकत्वम् । यद्वा—'पुरुष एवेदं सर्वम्' इति तस्य विश्वात्मत्वात् अस्मदादिसम्बन्धिनः शिरःप्रभृतयोऽवयवाः तस्यैवावयवा इति तेषामनेकत्वोपपत्तिः। **सः** पुरुषः **भूमिं** भूम्यादीन् विकारान् **विश्वतः** सर्वतः **वृत्वा** व्याप्य मृदिव घटादीन् स्वाभेदेन छादयित्वा **अत्यतिष्ठत्** अतीत्य तिष्ठति अतिक्रम्य विकारावस्थां स्वेनैव रूपेण तिष्ठति **दशाङ्गुलं** दशाङ्गुलिप्रमाणावच्छिन्नम् । दश अङ्गुलयः प्रमाणं अस्येति अर्हीयस्य 'अध्यर्धपूर्व' इति लुक्, 'तत्पुरुषस्याङ्गुलेः' इत्यच् समासान्तः। अत्र सामर्थ्यात् हृदयाकाशपरिग्रहः। हृदयाकाशस्यैव दशाङ्गुलमित्याख्येति केचित् । हृदयं दहरं गगनं पुरुष इति पर्यायः । यद्वा—सर्गप्रकरणमिदं, अतो विकारजातं भूम्यादिकं सर्वं वृत्वा पदेनैव घनमावृत्य[2] दशाङ्गुलमतितिष्ठति दशाङ्गुलादधोऽधिष्ठानं न करोति, अत एव भूमेर्दशाङ्गु-

[1]पुरुषार्था. [2]पदेनैव नावृत्य. पदेन वचनमावृत्य. पदेन सनमावृत्य.

[2]पुरुष एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति । [3]एतावानस्य महिमा । अतो ज्यायाꣳश्च पूरुषः ॥ ३ ३ ॥

लादधोऽङ्कुरादेरनुत्पत्तिः । सर्वगतत्वेऽपि पुरुषस्य सिसृक्षोपधानमूलकारणात्मकत्वात् सर्वकार्यदेशव्याप्त्यैव स्वप्रयोजनसम्पादनात् तदेव तस्य सर्वगतत्वमिति दशाङ्गुलात्परतो न व्याप्नोति प्रयोजनाभावादिति केचित् ॥

[2]इदानीं पुरुषस्य वैश्वरूप्यमाह—**पुरुष एवेति** ॥ **इदं** प्रत्यक्षेण दृश्यमानं व्यक्तं स्थावरजङ्गमात्मकं यद्वर्तमानं **सर्वं यच्च भूतं** अतीतं **यच्च भव्यं** भविष्यत् एतत्सर्वं **पुरुष एव** पुरुषस्यैवायं परिणामः । **उत** अपि च अयं पुरुषः **अमृतत्वस्य** देवत्वस्यापि **ईशानः** समर्थः प्रसन्नः अमृतत्वमपि प्रापयितुं शक्नोति । देवानामपीश्वर इति यावत् । **यच्च अन्नेन** अदनीयेन निमित्तेन **अतिरोहति** कारणावस्थामतीत्य कार्यात्मना जायते मर्त्यादि, तस्यापीशान इत्येव अयोनिजानामन्नरसपरिणामानां चेशान इति ॥

[3]**एतावानिति** ॥ **एतावान्** एतत्प्रमाणः यत् मर्त्या अमर्त्याश्च एतावान् **अस्य** पुरुषस्य **महिमा** महत्कर्म विभूतिरित्यर्थः, न त्वयमेतावान् । अयं तु **पुरुषः अतो**ऽपि यथोक्तात् मर्त्यामर्त्यलक्षणात् कार्यवर्गात् **ज्यायान्** वृद्धतरः नैतावानेवेति मन्तव्यः । तत्कथमित्याह—**पादः** एकदेशः **अस्य विश्वा भूतानि** भूतजातानि अल्पांशो व्यक्तात्मना वर्तते । पादमात्रत एव सर्गप्रतिसर्गयोः प्रवृत्तिः । **अस्य** सम्बन्धि अपरं **त्रिपात्** पादत्र-

**पादो॑ऽस्य॒ विश्वा॑ भू॒तानि॑ । त्रि॒पाद॑स्या॒मृतं॑ दि॒वि । [4]त्रि॒पादू॒र्ध्व उदै॒त्पुरु॑षः । पादो॑ऽस्ये॒हाभ॑वा॒त्पुनः॑ ।**

यात्मकं व्यक्तप्रमाणात्त्रिगुणं महाप्रमाणं एकदेशान्तरं **अमृतं** अविकारित्वेन चेतनरूपेण **दिवि** द्योतनवति आदित्यमण्डले परमपुरुषशरीरभूते वर्तते । उक्तं च 'स यश्चायं पुरुषे। यश्चासावादित्ये। स एकः।'* इति । त्रयः पादा यस्येति 'सङ्ख्यासुपूर्वस्य' इति लोपः 'द्वित्रिभ्यां पद्दन्' इत्युत्तरपदान्तोदात्तत्वम् । पुरुषस्यापरिमितत्वात् न चतुर्थांशवचनः पादशब्दः ॥

[4]एवमादित्यान्तरपुरुषरूपेण महापुरुषो विश्वस्य सर्गकारणमित्युक्तम् । इदानीं यज्ञपुरुषरूपेण महापुरुषस्य लोकसृष्टिकारणत्वं तदुभयात्मना च लोकस्थितिहेतुत्वं पुरुषस्याह—**त्रिपादिति** ॥ वेदानां प्रत्येकं त्रिभिस्त्रिभिः पादैस्सहितः पुरुषो यज्ञात्मा त्रिपात् । रूपस्वरावुक्तौ । वेदानां त्रींस्त्रीन् पादानुपादाय यज्ञो भूत्वा स **पुरुष** ऊर्ध्वं **उदैत्** ऊर्ध्वमुद्गतवान् । यथा 'गुहा त्रीणि निहिता नेङ्गयन्ति'† इति । अथ **अस्य** पुरुषस्य यज्ञात्मनः **पादः** तुरीयांशः वेदानां चतुर्थभागा आत्मा इह **आभवात्** अस्यां परिदृश्यमानायां सर्वभूतस्थितो कारणभावेन पुनःपुनर्भवति, यथा इष्टदेवतास्तुत्यादिभिः तर्पयित्वा तत्फलेन यजमानान् संयोजयति 'अग्नौ प्रास्ताहुतिः' इति न्यायेन लोकानां स्थितिं निर्वर्तयति । आदित्यमण्डलगता चाहुतिरुदकभावेन रश्मिभिः क्रियते, रश्मिस्थं चोदकं यदा सर्वभूतानुग्रहसमर्थं भवति तदा तन्मध्यमस्थानीयवृष्टिरूपेण पातयित्वा अनेन ओषध्यादीनां स्थितिहेतुर्भवति ।

*उ. २-८. †ऋ. १-८-८.

ततो विष्वङ्व्यंक्रामत् । साशनानशने अभि ।
5 तस्माद्विराडंजायत । विराजो अधि पूरुषः । स

एवमयं पुरुषस्य पादः पुनःपुनराभवति आवृत्यावृत्य स्थिति-हेतुर्भवतीहत्यानाम् । लेल्याडागमः । ताभ्यां यज्ञादित्यप्रवृत्तिभ्यां समुपबृंहितपादो महापुरुषो **विष्वङ्** नानाञ्चनः **व्यक्रामत्** **वि-विधं क्रामति** कार्यवशात् विविधं सर्पति **साशनानशने अभि-**लक्ष्य । साशनं अन्नाधीनस्थितिकं जराय्वण्डोद्भित्स्वेदजं चतुर्विधं अनशनं देवजातम् । सत्यपि पारम्पर्येणान्नाधीनस्थितिकत्वे अस्म-दादीनामिव साक्षादशनाभावादनशनत्वं देवजातस्य । तदुभयस्थि-तिमभिसन्धाय विष्वङ् व्यक्रामदिति । विष्वगञ्चतीति ऋत्विगादिना क्विन् प्रत्ययः, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् ॥

5 इदानीं सृष्टिरुच्यते—**तस्मात्** प्रणवाख्यात् नारायणात् । अव्यक्तादिति केचित्, तदयुक्तं, तस्याप्रस्तुतत्वात् । तस्मात् प्रकृतान्महापुरुषात् **विराडजायत** विविधं राजन्ति वस्तूनि य-स्मिन् स विराट् मनस्संज्ञः प्रजापतिः । ततो **विराजो अधि** विराजमेवाधिकरणीकृत्य **पुरुषो**ऽजायत दशहोत्राख्यः प्रजापतिः पुरुषसमष्ट्यात्मना अजायत । यथोक्तं 'स मानसीन आत्मा ज-नानाम्'* इति । स वैराजः पुरुषः **जातः** प्रादुर्भावानन्तरं **अत्यरिच्यत** स्वयमेव आत्मानमत्यरेचयत् । कर्मकर्तरि रूपम् । अनेकधाभावलक्षणं स्वरूपातिरेकमभजत भूतेन्द्रियादीन्यसृजतेति या-वत् । उक्तं च 'असतोऽधि मनोऽसृज्यत । मनः प्रजापतिमसृ-जत । प्रजापतिः प्रजा असृजत '† इति । **पश्चादिति** । भूत-

*आ. ३-११. †ब्रा. २-२-९.

**जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ॥ ३४ ॥**
**[6]यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः । [7]सप्तास्यासन्परिधयः । त्रिस्सप्त समिधः कृताः ।**

---

ग्रामस्यान्ते **भूमिं** अत्यरेचयत् । सामर्थ्यात् कर्मकर्तृभावो निवर्तते । एवं आकाशादिपृथिव्यन्तानां तत्त्वानां सर्ग उक्तः । **अथो** अनन्तरं भूतसृष्टेः **पुरः** पुराणि शरीराणि सुरनरतिर्यगादीनां स्थावरादीनां च अत्यरेचयत् । पुर इत्यत्र छान्दसं विभक्त्युदात्तत्वम् । एवमिन्द्रियसर्गः पिण्डसर्गश्च प्रतिपादितः ॥

[6]इदानीं सृष्टिविशेष उच्यते—**यदिति** ॥ **यत्** यदा **पुरुषेण** प्रजापतिना **हविषा** हविष्ट्वेन सङ्कल्पितेन हविरन्तरस्याभावात् **देवाः** प्राणाः प्राजापत्याः इन्द्रियाणि च **यज्ञं** सङ्कल्पात्मकं **अतन्वत** यज्ञमिव अकुर्वत । सृष्टिकामः प्रजापतिरेव प्राणादिवृत्तिभेदेनोच्यते । अथ **अस्य** यज्ञस्य **वसन्त आज्यमासीत्**, तत्र गवां भूयिष्ठत्वात् तमेवर्तुं तद्विकाराज्यकार्याय समकल्पयत् । एवं ग्रीष्मशरदौ व्याख्येये ॥

[7]अथ **अस्य** यज्ञस्य **सप्त** पदार्थाः छन्दांसि **परिधय आसन्** छन्दांस्येव परिधित्वेन अबुध्यन् । तत्र त्रय औत्तरवेदिकाः परिधयस्त्रयस्तान्त्रिकाः आदित्यस्सप्तम इति । ‘आदित्यो ह्येवोद्यन्पुरस्ताद्रक्षांस्यपहन्ति’* इति परिधित्वमादित्यस्य । अथास्य यज्ञस्य **त्रिस्सप्त** एकविंशतिपदार्थाः **समिधः कृताः**

---

*सं. २-६-६.

**दे॒वा य॒द्य॒ज्ञं त॑न्वा॒नाः । अब॑ध्न॒न्पुरु॑षं प॒शुम् । [8]तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॑न्न् । पुरु॑षं जा॒तम॑ग्र॒तः ॥ ३५ ॥**

'द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकविंशः '* इति इध्मत्वेन एते कल्पिता इति । एवं इध्मावयवानां एकविंशतेर्दारूणां सम्पादनेन इध्मनिरूपणं कृतम् । पूर्वं तु पृथक्त्वेन परिधानकाले परिधिनिरूपणं कृतमिति द्रष्टव्यम् । एवं प्राजापत्यं सङ्कल्पयज्ञं कल्पयित्वा तत्फलं प्रपञ्चसृष्टिमाह—देवा इति । **देवाः** प्राणाः प्राजापत्याः **यज्ञं** सङ्कल्पात्मकं **तन्वानाः यत्** यदा **पुरुषं** प्रजापतिं **पशुं अबध्नन्** मनसा पशुत्वेन सङ्कल्पितवन्तः नियोजनमिव कृतवन्तः ॥

[8]तदानीमेव **पुरुषं** प्रजापतिं **अग्रे** सर्वविकाराणां मुखे बन्धनानन्तरं पुरुषं **जातं** विराट्संज्ञकं पुरुषरूपेण जातं **यज्ञं** यज्ञसाधनम् । करणे नङ्प्रत्ययः । **बर्हिषि** यज्ञे यज्ञार्थं **प्रौक्षन्** प्रोक्षणमिव मनसा कृतवन्तः । कथमन्यो नियुज्यते अन्यः प्रोक्ष्यते इति चेत्—न, अभेदात् । अथ **तेन** विराजा पुरुषेण **देवाः** प्राणाः **अयजन्त** यज्ञो वर्तत इति मनसा सङ्कल्पमकुर्वत । केचिदाहुः—अग्रतो जातं **यज्ञं** यज्ञात्मानं पुरुषं यज्ञे पशुत्वेन प्रौक्षन् इति । यथोक्तं—'यज्ञेन यज्ञमयजन्त देवाः' इति । साध्याश्च ऋषयश्च द्विप्रकारा अपि देवा अयजन्त । 'चवायोगे प्रथमा' इति निघाताभावः । साधयन्तीति **साध्याः** प्राणाः । 'कृत्यल्युटो बहुलम्' इति कर्तरि 'अचो यत्' इति ण्यन्ताद्यत्, उदात्तनिवृत्तिस्वरेण यत उदात्तत्वम् । **ऋषयः** द्रष्टारः इन्द्रियाणि । द्वयेऽपि देवनशीलाः देवा इत्युच्यन्ते ॥

*आ. ३-८-१०.

तेनं देवा अयंजन्त । साध्या ऋषंयश्च ये । [9]तस्मा-
द्यज्ञात्सर्वहुतः । संभृतं पृषदाज्यम् । पशूꣳस्ताꣳ-
श्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये । [10]तस्मा-
द्यज्ञात्सर्वहुतः । ऋचस्सामानि जज्ञिरे । छन्दाꣳ-
सि जज्ञिरे तस्मात् । यजुस्तस्मादजायत ॥ ३६ ॥
[11]तस्मादश्वा अजायन्त । ये के चोभयादतः । गा-

[9]एवं यज्ञं निर्वर्तितवन्तः, अथ तस्माद्यज्ञात् सर्वहुतः सर्वात्मा पुरुषः पशुत्वेन हूयते अस्मिन्निति सर्वहुत् । अधिकरणे क्विप् । सम्भृतं समुत्पन्नं पृषदाज्यं पृषत् विचित्रं आज्यं पश्चादिभावेन पानीयं[1] पृषदाज्यं अपां परिणामात्मा द्रव्यविशेषः। पशव्यः आज्यस्यैव अवस्थाविशेष इत्येके । अथ तत्पृषदाज्यं पशूंश्चक्रे प्राणेन्द्रियसमष्टिरूपः प्रजापतिः, वायव्यान् वायुदेवत्यान् वायव्यग्रहणं तिर्यगर्थं तद्देवत्यत्वात्तेषाम् । ये आरण्याः ये च ग्राम्यास्तान् सर्वांश्चक्रे । उक्ताश्च ते पूर्वस्मिन्ननुवाके॥

[10]अथ तत् तस्मात् तादृशात् यज्ञात् ऋचस्सामानि जज्ञिरे छन्दांसि च सर्वाणि ऋगादिमया वेदाः जज्ञिरे । यजुश्च तस्मादजायत । जातावेकवचनम् ॥

[11]पुनश्च पशुसृष्टिं प्रपञ्चयति—तस्मादेवाश्वा अजायन्त । ये के च ये केचित् उभयादतः उभयोः पार्श्वयोः दन्ताः येषां ते गर्दभादयश्च अजायन्त । 'छन्दसि च' इति दतृभावः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम्, नुमभावश्छान्दसः। गावश्च अजाश्च अवयश्च तस्माज्जाताः ॥

[1]व्यसनीयं.

वो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः । [12]यत्पुरुषं व्यदधुः । कतिधा व्यकल्पयन्न् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते । [13]ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः ॥३७॥ ऊरू तदस्य यद्वैश्यः । पद्भ्याꣳ शूद्रो अजायत । [14]चन्द्रमा मनसो जातः । चक्षोस्सूर्यो अजायत । मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत । [15]नाभ्या आसीदन्तरिक्षम् । शीर्ष्णो द्यौस्समवर्तत । पद्भ्यां भूमिर्दिशश्श्रोत्रात् । तथा लोकाꣳ अकल्पयन्न् ॥ ३८॥ [16]वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं त-

---

[12]**यदित्यादि** ॥ यदा **पुरुषं** विराजं **व्यदधुः** प्राणादयः कल्पितवन्तः, तदा **कतिधा** कतिभिः प्रकारैः विशिष्टं **व्यकल्पयन्**, कानि चास्य मुखादीन्युच्यन्ते ॥

[13–15]उत्तरं—**ब्राह्मणोऽस्येत्यादि** ॥ ब्राह्मणादीनां मुखादिभ्य उत्पन्नत्वात् तत्तद्भावेन ते कल्पिताः । 'पद्भ्यां शूद्रो अजायत' इति दर्शनात् सर्वेऽपि ब्राह्मणादयो मुखादिभ्य उत्पन्ना इति गम्यते । **चक्षोरिति** । वर्णलोपश्छान्दसः । चष्टेर्वा उप्रत्ययः । **मुखात्** आस्यात् । तथा सर्वान् **लोकान्** **अकल्पयन्** । 'दीर्घादटि समानपादे' इति रुत्वम् ॥

[16]वेदेत्यादयः तिस्रस्त्रिष्टुभः ॥ **एतं महान्तं पुरुषं** सहस्रशिरसं **अहं वेद** जानामि **आदित्यवर्णं** प्रकाशात्मानं तदेव

मंसस्तु पारे। सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन् यदाऽऽस्ते।[17] धाता पुरस्ताद्यमुदाजहार। शक्रः प्रविद्वान्प्रदिशश्चतस्रः। तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते।[18] यज्ञेन यज्ञमयजन्त देवाः। तानि धर्माणि

**तमसः पारे** स्थितं त्रिगुणा प्रकृतिः तमः तस्य पारं वेलां अतीत्य परत्रावस्थितं अहं वेद। स देवः **सर्वाणि रूपाणि** विकारलक्षणानर्थान् **विचित्य** पृथक्त्वेन उत्पाद्य **नामानि** च सर्वाणि **कृत्वा धीरः** धीमान् व्याकृतनामरूपः कृतकृत्यो **यदा अभिवदन्** आभिमुख्येन वदन् विश्वमनुगृह्णन् **आस्ते** तदा सर्वदा एवमेव सृष्टिर्वेदितव्येति॥

[17]**धातेत्यादि॥ यं** यथोक्तमहिमानं पुरुषं **धाता** पितामहः **उदाजहार** ख्यापितवान् तद्विभूतित्वाद्धातुः। शक्रश्च यमुदाजहार **प्रविद्वान्** प्रकर्षेण जानन् **प्रदिशः** प्रधानदिशः **चतस्रः** तद्वासिनस्सर्वान् प्रविद्वान्। **तं** महापुरुषं **एवं** एवंप्रकारं **विद्वान्** इह लोके यः कश्चिदपि **अमृतो भवति**। न त्वेतज्ज्ञानादृते **अन्यः पन्था विद्यते अयनाय** गमनाय संसारं मुक्त्वा अपवर्गं गन्तुं अयमेव मार्ग इति॥

[18]**यज्ञेनेत्यादि॥** व्याख्याता*। **यज्ञेन** यज्ञात्मना पुरुषेण **यज्ञं** प्रजापतिं **अयजन्त देवाः** प्राणाः इन्द्रियाणि च। ततः **तानि धर्माणि** लोकानां धारकाणि भूतानि **प्रथमानि** आद्यानि सर्वविकाराणां **आसन्**। ते च **महिमानो** महात्मानो **नाकं**

*सं. ३-५-११.

प्रथमान्यासन् । ते ह नाकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः ॥ ३१ ॥

पूरुषः पुरोऽग्रतोऽजायत कुतोऽकल्पयन्नासन्द्वे च ॥ १२ ॥

॥ ज्यायानधि पूरुषः । अन्यत्र पुरुषः ॥

[1]अद्भ्यस्सम्भूतः पृथिव्यै रसाच्च । विश्वकर्मणस्समवर्ततधि । तस्य त्वष्टा विदधद्रूपमेति । त-

---

सुखैकरूपं स्थानं गताः यत्र पूर्वे देवाः साध्याः साधकाः प्राणादयः अद्यापि सन्ति इति ॥

इति तृतीये द्वादशोनुवाकः.

---

[1]अद्भ्यस्सम्भूत इत्यादि ॥ 'उत्तरनारायणेन आदित्यमुपस्थाय' इत्यादौ विनियोगः । त्रैष्टुभस्सर्वोनुवाकः, विशेषो वक्ष्यते ॥ अद्भ्यः अबादिभ्यः पञ्चभ्यो भूतेभ्यः सम्भूतः उत्पन्नः पृथिव्यै पृथिव्याः रसात् अन्नाच्च उत्पन्नः ततो विश्वकर्मणः विश्वस्य कर्तुः अधि ऐश्वर्यविषयमधि समवर्तत सम्यक् सम्पन्नः प्रजापतिः । ततः तस्य रूपं विदधत् कुर्वन् त्वष्टा तद्रूपं एति सर्वाण्यङ्गानि विकर्तृत्वेन वायुरूपः प्रविशति तत् सर्वं पुरुषस्य प्रभावमहं आजानं आजानामि पुरुष एव सर्वं करोतीति अग्रे प्रथममेव जानामि । छान्दसमाकारस्य ह्रस्वत्वम् । यद्वा—अ-

त्पुरुषस्य विश्वमाजानमग्रे । [2]वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् । तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेऽयनाय । [3]प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ॥ १० ॥ तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति

---

ह्न्यस्सम्भूतः प्रथमपरिणामः प्रजापतिः । ततः पृथिव्याः रसात् अन्नात् संभूतो वैराजः प्रजापतिः । ततः त्वष्टा विकुर्वन् वायुरूपः तदीयान्यङ्गानि गच्छतीति तृतीयः परिणामः । तत्सर्वं परस्य पुरुषस्य प्रभाव इति प्रथममेवाहं ज्ञातवानिति ॥

[2]**वेदाहमित्यादि** गतम् ॥ **तमसः परस्तात्** तमश्शीलं विकारजातं तमः ततः परस्तात् स्थितं **महान्तं पुरुषमहं वेद।** **एवं तं विद्वान् अमृतो भवति, अन्यः पन्थाः अयनाय** अमृतत्वप्राप्तये साधनभूतो न विद्यते । अयनशब्दो लित्स्वरेणाद्युदात्तः, तेनैकादेशे एकार उदात्तः ॥

[3]**प्रजापतिरिति** ॥ आत्मसमष्टिः प्रजानां पतिः जीवात्मा **अन्तर्गर्भे चरति** सर्वेषु शरीरेषु आब्रह्ममशकं स्वयं **अजायमान एव** बहुप्रकारशरीरसम्बन्धेन विविधं जायमान इव भवति । तस्यैतस्य जायमानस्य* **योनिं** कारणं शरीरसम्बन्धकारणं वा **धीराः** धीमन्तः **परिजानन्ति** सर्वात्मना जानन्ति । कीदृशाः? ये **वेधसः** विधातारः प्रकृष्टज्ञानाः **मरीचीनां पदं**

---

*जायमानस्य जीवस्य.

वेधसः । [4]यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः । नमो रुचाय ब्राह्मये । [5]रुचं ब्राह्मं जनयन्तः । देवा अग्रे तदब्रुवन् ।

---

रश्मीनां पदं स्थानं आदित्यात्मानं इच्छन्ति याथात्म्येन विजानन्ति, प्रविशन्ति वा । ते तं योनिं जानन्ति । नान्यत् [नान्यैः] ज्ञातुं शक्यते । 'सूर्य आत्मा'* इति च श्रुतिः ॥

[4]यो देवेभ्य इत्याद्ये अनुष्टुभौ ॥ अधुना स एव आदित्यो वर्ण्यते । यो देवेभ्यः सर्वविकारेभ्यः आतपति समन्तात्तपति सर्वेभ्यो रश्मिमद्भ्योऽधिकं तपति अव्यक्तात्मस्वरूपादागत्य तपनेन सर्वान् विकारान् उत्पाद्य अनुगृह्णाति । यश्च तेषां देवानां देवादीनां विकाराणां पुरोहितः पुरस्तात् स्थितः । तेषां अनुज्ञानार्थं उदयादिना उपकरोति । यश्च पूर्वः प्रथम एव देवेभ्यो जातः सर्वविकाराणां अग्रे जातः । तस्मै रुचाय रोचनशीलाय परमेश्वरदीप्तिमूर्तये । इगुपधलक्षणः कः । ब्राह्मये ब्रह्मणोऽपत्याय । छान्दस इञ्, बाह्वादिर्वा द्रष्टव्यः । तस्मै नम इति ॥

[5]रुचमिति ॥ एवं महानुभावं रुचं रोचनशीलं ब्राह्मं ब्रह्मणोऽपत्यम् । अजातित्वाट्टिलोपः । तमेवादित्यं जीवात्मना स्थितं जनयन्तः ब्राह्मणाः आत्मवन्तः स्यामेति ईशं शरीरे सन्निधापयन्तः देवाः इन्द्रियाणि अग्रे पूर्वमेव अब्रुवन् सृष्ट्यादौ आत्मना समर्थमिव कृतवन्तः । तत् तदानीं जन्मकाल एव यो ब्राह्मणः त्वा त्वां एवं जीवात्मना स्थितं विद्वान् एवं

*सं. २-४-१४.

**यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन्वशे । [6]ह्रीश्च ते लक्ष्मीश्च पत्न्यौ । अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टं मनिषाण । अमुं मनिषाण । सर्वं मनिषाण ॥ ४१ ॥**

**जायते वशे सप्त च ॥ १३ ॥**

सृष्ट्यादिप्रवृत्तं यः त्वां विद्वान् यथावत् जानन् भवति, **तस्य वशे असन्** भवन्ति देवाः इन्द्रियाणि जितेन्द्रियो मुक्तो भवति । यद्वा—देवादयः सर्वे तस्य वशे तिष्ठन्ति विधेया भवन्ति । अस्तेर्लेटि शपो लुक् ॥

[6]**ह्रीश्चे**त्यादिकं यजुः ॥ **ह्रीः** लज्जा **लक्ष्मीः** श्रीः ते उभे तव पत्न्यौ सहधर्मचारिण्यौ, हे आत्मन्! **अहोरात्रे** अहश्च रात्रिश्च पार्श्वस्थानीये । पशूनां समूहः पार्श्वं, 'पशोर्णस् वक्तव्यः'। घटिकासमूहात्मके अहोरात्रे पार्श्वस्थानीये धारकत्वसामान्यात् । **नक्षत्राणि** चन्द्रयुतानि तव रूपं रूपणनिमित्तानि, नक्षत्रयुक्तचन्द्राधीनकालनिबन्धनत्वात् जीवानां स्थितेः । **अश्विनौ** द्यावापृथिव्यौ **व्यात्तं** व्यात्तास्यस्थानीयौ, विश्वं निगिरतः तव व्यापकत्वात् तद्देवत्यत्वाद्वा द्यावापृथिव्योरश्वित्वम् । स त्वमेवं महाभागो मम **इष्टं** ईप्सितं आत्मबोधलक्षणं **मनिषाण** अनुमन्यस्व, देहीति यावत् । मनोतेर्व्यत्ययेन श्नाप्रत्ययः, 'हलश्नश्शानज्झौ' विकरणत्वेन सिप इडागमः, धात्वन्तरं वा छान्दसं द्रष्टव्यम् । **अमुमि**ति विशेषार्थं, आयुश्च गां च अश्वं च देहि । किंबहुना ऐहिकमामुष्मिकं वा **सर्व**मिष्टं देहीति ॥

इत्यारण्यके तृतीये त्रयोदशोऽनुवाकः.

[1]भ॒र्ता सन्भ्रि॒यमा॑णो बिभर्ति । एको॑ दे॒वो ब॑हु॒धा निवि॑ष्टः । य॒दा भा॒रं त॒न्द्रय॑ते॒ स भर्तु॑म् । नि॒धाय॑ भा॒रं पुन॒रस्त॒मेति॑ । [2]तमे॒व मृ॒त्युम॒मृतं॒ तमा॑हुः ।

---

[1]उत्तरानुवाकौ सूक्तविशेषौ आरण्यकत्वाविशेषादिहाम्नातौ । तत्रेदं प्रथमं भर्तृसूक्तं 'मृत्यवे वेहतम्' इत्यत्र पशूनां नारिष्टानन्तरमुपहोमा एते । प्राणः मृत्युरूपेण स्तूयते—अन्त्या अनुष्टुप् । भर्ता प्राणः, शरीरस्य धारकत्वात् पोषकत्वाद्वा **भर्ता सन् भ्रियमाण**श्चान्नादिना ईश्वरेण च एवंभूतो यो **बिभर्ति** शरीराणि **देवो** देवनशीलः **एको**ऽपि सन् **बहुधा** शरीरेषु **निविष्टः** केषुचिन्महान् केषुचिदल्पः, तत्रापि बहुप्रकारकार्यजनकः । किं सर्वदा शरीराणि बिभर्ति? नेत्याह—स एष देवो **यदा भारं** भरणीयं शरीरं भर्तुं **तन्द्रयते** तन्द्रीं आलस्यं प्रतिपद्यते जीवनादृष्टावसाने, तदानीं इदं **भारं निधाय** उत्सृज्य **अस्तमेति** अदर्शनं गच्छति पुनः पूर्ववच्छरीरारम्भात्प्रागेव तदाऽसौ मृत इत्युच्यते ॥

[2]यस्मादेवं तस्मात् **तमेवेति मृत्युं** मरणहेतुं **अमृतं** अमृतत्वहेतुं च तमेव **आहुः** विपश्चितः । यद्ययं मुञ्चति म्रियतेऽसौ, यदि न मुञ्चति जीवत्यसौ । किञ्च—**तमेव भर्तारं** पोषयितारं **गोप्तारं** रक्षितारं च **आहुः** । अपि च **स** देवः **पूर्वमेव** देहारम्भे **भृतः भ्रियमाणश्च** अन्नादिभिरिदानीं बिभर्ति तं पुरुषम् । किमित्याह—य एनं प्राणं **सत्येन** सति साधुना श्रुतिस्मृत्युदितेन मार्गेण भर्तुं वेद तं भृतो भ्रियमाणश्च बिभर्ति न जहाति । अन्यं तु भृतोऽपि भ्रियमाणोऽपि न बिभर्ति अस-

तं भर्तारं तमु गोप्तारमाहुः । स भृतो भ्रियमाणो बिभर्ति । य एवं वेद सत्येन भर्तुम् । [3]सद्यो जातमुत जहात्येषः । उतो जरन्तं न जहात्येकम् ॥ ४२ ॥ उतो बहूनेकमहर्जहार । अतन्द्रो देवस्सदमेव प्रार्थः । [4]यस्तद्वेद यत आबभूव । सन्धां च याꣳ

---

ऽपि तस्मिन् भवति । यद्वा—अन्यं भृतो भ्रियमाणो न बिभर्ति यद्यपि भृतः तथाऽपीदानीं भ्रियमाणो भूत्वा भर्ता न भवति ॥

[3]एतदेव स्पष्टयति—सद्य इति ॥ स एष देवः **सद्यः** समानेऽह्नि उताप्यर्थे **जातं** जातमात्रमपि **जहाति** जन्मदिन एव त्यजति एकमिति सामर्थ्याल्लभ्यते । **उतो** अपिच **एकं** अन्यं पुरुषं **जरन्तं** जीर्णमपि **न जहाति** । 'जीर्यतेरतृन्' इति भूते अतृन्प्रत्ययः । अथ **एकमहः** एकस्मिन्नहनि **बहूनपि** **जहार** हरति । एतदुक्तं भवति—बहुष्वप्यहस्सु एकमपि न हरति एकस्मिन्नहनि बहूनपि हरतीति या वचनव्यक्तिः सा सामर्थ्यात् लभ्या । एवमयं देवः **सदमेव** सदैव । मकारान्तो निपातः । **अतन्द्रः** अनालस्यः **प्रार्थः** प्रकृष्टप्रयोजनः, प्रार्थनीय इत्येके ॥

[4]**यस्तदित्यादि** ॥ अथ यः पुरुषः **तद्वेद** तत्कारणं जानाति । किमित्याह—**यतः** कारणात् अयं प्राणः **आबभूव** आविर्बभूव तद्यो वेद, **सन्धां च यो** वेदेत्येव । सन्धा सन्धानं समयः सम्बन्धो वा । 'आतश्चोपसर्गे' इत्यङ् । तामपि यो वेद । कीदृशीमित्याह—**यां** सन्धां **ब्रह्मणा** आत्मना

**संदधे ब्रह्मणैषः । रमते तस्मिन्नुत जीर्णे शयाने । नैनं जहात्यहस्सु पूर्व्येषु । [5]त्वामापो अनु सर्वा-श्चरन्ति जानतीः । वत्सं पयसा पुनानाः । त्वम-**

---

सह **एषः** प्राणः सन्दधे ‘ इत्थं वस्तव्यं इयन्तं कालं स्थातव्यं ’ इति तामस्य सन्धां कालं च यो वेद । **तस्मिन्** पुरुषे **जीर्णे शयाने**ऽपि अयं देवो **रमते नैवैनं जहाति अहस्सु पूर्व्येषु** पूर्वैः कर्मभिः कृतानि पूर्व्याणि ‘ पूर्वैः कृतमिनियौ ’ इति यः । तेषु नैनं जहाति महाप्राण एव सर्वेषु भवति पुरुषः । यद्वा—पूर्वैः शास्त्रकृद्भिः कृतानि विहितानि शतवर्षसम्बन्धीनि पूर्व्याणि । यद्वा—पूर्वसदृशानि पूर्व्याणि । इवार्थे यः । बाल्ये यान्यहानि गतानि तत्तुल्येष्वेवाहस्सु सर्वेषु एनं न जहाति तत्तुल्यान्येव करोतीति यावत् ॥

[5]**त्वामाप इति** ॥ चरन्तीति प्रथमपादान्तः । वाक्यविच्छेदोऽन्यथा प्रमादकृतः । **आपः** कर्माणि सर्वाणि कर्माणि **त्वामेवानुसञ्चरन्ति** अनुधावन्ति त्वमेव हि सर्वाणि कर्माणि कारयसि यथा वत्सं मातरोऽनुसञ्चरन्ति **जानतीः** जानन्त्यः वत्समेव ध्यायन्त्यः । ‘ वा छन्दसि ’ इति पूर्वसवर्णदीर्घः । **पयसा पुनाना वत्सं** शोधयन्त्यः जीवयन्त्यः शुद्ध्या तत्फलं जीवनं लक्ष्यते । यद्वा—पयसा सर्वं जगत् पुनाना यागादिनिर्वृत्त्या । यद्वा—अन्तर्भावितण्यर्थश्चरतिः । सर्वाण्यपि कर्माणि त्वां अनतिक्रमेण **चरन्ति** वर्धयन्ति वत्समिव गावः पयस्विन्य इति श्रौतस्मार्तैर्हि कर्मभिः प्राणा वर्धन्ते । यद्वा—स्यन्दनकर्मा पुनातिः । पुनानाः सोमधारयेति । यथा स्यन्दमाना पयोधारा यतो वत्सं जानन्त्यः इति ।

ग्निꣳ हव्यवाहꣳ समिन्धसे । त्वं भर्ता मातरिश्वा प्रजानाम् ॥ ४३ ॥ [6]त्वं यज्ञस्त्वमु वेवासि सोमः । तव देवा हवमायन्ति सर्वे । त्वमेकोसि बहूननु प्रविष्टः । नमस्ते अस्तु सुहवो म एधि । [7]नमो वामस्तु शृणुतꣳ हवं मे । प्राणापानावजिरꣳ सं-

---

त्वमेव हव्यवाहं हविषां वोढारम् । 'वहश्च' इति ण्विः । आग्निं सामिंत्से संदीपयसि । इन्धेर्लटि 'रुधादिभ्यः श्नम्' 'श्नसोरल्लोपः' 'खरि च' इति चर्त्वम् । त्वं भर्ता प्रजानां धारयिता पोषयिता वा । कथमित्याह—मातारिश्वा आकाशे गन्तेति व्याख्यातम् ॥

[6]त्वं यज्ञ इत्यादि ॥ त्वमेव यज्ञः त्वदधीनत्वात् सर्वप्रवृत्तीनां, सोमश्च त्वमेवासि, त्वदधीनत्वात्सर्वजीवानां, न हि वायुना विना किञ्चिज्जीवतीति तव हवं आह्वानं आयन्ति गच्छन्ति सर्वे देवाः सर्वाणीन्द्रियाणि त्वयि हूयमाने आगच्छन्ति त्वया वा हूयमाना आगच्छन्ति । त्वमेकोऽसि बहून् देहान् अनुप्रविष्टः पृथक्त्वेन अनुप्रविष्टः अनुक्रमेण व्याप्य स्थितः । यद्वा—एक एव सन् बहूनिन्द्रियपदार्थाननुप्रविश्य स्थितः तस्मै महानुभावाय तुभ्यं नमोऽस्तु त्वं च मम सुहवः एधि शोभमानाह्वानो भव । विधेयो भवेति यावत् । ह्वयतेः 'भावे अनुपसर्गस्य' इति अप्सम्प्रसारणे, 'आद्युदात्तं द्व्यचश्छन्दसि' इत्युरपदाद्युदात्तत्वम् ॥

[7]नमो वामिति ॥ इदानीं प्राणापानवृत्तिद्वयेन प्राणः स्तूयते—हे प्राणापानौ! वां युवाभ्यां नमोऽस्तु मम हवं आह्वानं शृ

**चरन्तौ । ह्वयामि वां ब्रह्मणा तूर्तमेतम् । यो मां द्वेष्टि तं जहितं युवाना । [8]प्राणापानौ संविदानौ जहितम् । अमुष्यासुना मा संगसाथाम् ॥ ४४ ॥ तं मे देवा ब्रह्मणा संविदानौ । वधाय दत्तं तमहꣳ हंनामि । [9]असंज्जजान सत आबंभूव । यंयं जजान स उं गोपो अस्य । यदा भारं तन्द्रयते स भ-**

---

णुतं आह्वानप्रयोजनं कुरुतम् । तिङः परत्वान्न निहन्यते । अजिरं अजनशीलं युष्मत्सम्बन्धेन सत्वरं **सञ्चरन्तौ** समेत्य चरन्तौ । यद्वा—शरीरं सञ्चारयन्तौ युवां मम हवं शृणुतं इति । किमर्थमाह्वानमिति चेत् आह—**ब्रह्मणा** मन्त्रेण युवां **आह्वयामि** । परिबृढौ वां युवां आह्वयामि । 'सुपां सुलुक्' इत्याकारः । **तूर्तं** त्वरितम् । 'नसत्तनिषत्ता' इत्यत्र निपात्यते । **एतं** शीघ्रमागच्छतं एतस्मै प्रयोजनाय युवां आह्वयामि । इदम' पि किमर्थमित्याह—**यो मां द्वेष्टि तं जहितं** त्यजतं तत्सकाशं मा गमयतं हे **युवाना**! युवानौ! नित्यतरुणौ! मिश्रितौ-वा । 'सुपां सुलुक्' इत्याकारः ॥

[8]**प्राणापानाविति** ॥ हे **प्राणापानौ**! **संविदानौ** ऐकमत्यं गतौ सन्तौ मम शत्रुं **जहितं** त्यजतम् । **अमुष्य** शत्रोः दत्तस्य गुप्तस्य वा **असुना** जीवेन **मा सङ्गसाथां** सङ्गतौ मा भूतम् । उभयत्र 'समोगम्यृच्छि' इत्यात्मनेपदं 'वा गमः' इति सिचः कित्त्वम् । किञ्च—हे **देवा**! देवौ! **ब्रह्मणा** परेण आत्मना **संविदानौ** ऐकमत्यं गतौ **तं मे** मम **शत्रुं वधाय**

तुम् । परास्यं भारं पुनरस्तमेति । [10]तद्वै त्वं प्राणो

वधार्थं दत्तं मया हन्यमानं अनुज्ञातुं अर्हथ । तदाह—तमहं हनामि हन्मि युवाभ्यां अनुज्ञातः । व्यत्ययेन शप् ॥

[9]असदिति ॥ अस्पष्टभावविकारं परमेश्वरलक्षणं वस्तु असज्जजान परमाकाशरूपेण प्रादुरभूत् सतः तस्मात् सद्रूपात् सर्वपरिस्पन्दाधाराद्वाताख्यात् प्राणोऽयं आवभूव सर्वविकारव्यापी उदपद्यत । अथ अयं सर्वभूतात्मा यंयं पदार्थं जजान जनयति अस्य सर्वस्य स एव प्राणः गोपः गोपायिता रक्षिता । पचाद्यच् ‘आयादय आर्धधातुके वा’ इत्यायप्रत्ययाभावः । अथ स प्राणो विश्वं बिभ्रत् यदा इमं भारं भर्तुं तन्द्रयते आलस्यं प्रतिपद्यते तदानीं भारं इमं परास्य उत्सृज्य पुनरस्तमेति परमाकाशात्मना तिष्ठति ॥

[10]तद्वा इति ॥ प्रत्यक्षकृतोऽयं मन्त्रः प्राणत्वं च अस्य देवस्य प्रतिपादयति तत् तस्मात् कारणात् त्वं प्राणो अभवः प्राणव्यपदेशोऽभवः । प्रजापतेः महान् भोगः भोगहेतुस्त्वं यस्मात् तस्मात् त्वं प्राणो अभवः चक्षुरादयो हि भोगहेतवः प्राणाः तस्मात् त्वं प्राण इति । कः आह भोगहेतुः प्राण इति? तत्राह—भुजः भोगान् करिष्यमाणः । हेतौ शानच् । भोगहेतुर्जीवानां यस्मात् त्वं देवान् चक्षुरादीनि नव इन्द्रियाणि प्राणयः प्रकर्षेण उज्जीवितवानसि । प्रकृष्टमननं जीवनं एतेष्विति प्राणाः । इत्थं त्वमेव भोगार्थं करोषि तस्मात् भोगहेतवः प्राणाः । त्वं च महान् भोगहेतुः प्रजापतेः । तस्मात् त्वं प्राणो अभव इति । अनितेर्ण्यन्तात् लङि ‘आडजादीनाम्’ इत्याट् । ‘यद्वृत्तान्नित्य-

अंभवः। महान्भोगः प्रजापतेः। भुजः करिष्यमाणः। यद्देवान्प्राणयो नवं ॥ ४५ ॥

एकं प्रजानां गसाथां नवं ॥ १४ ॥

[1]हरिꣳ हरन्तमनुयन्ति देवाः। विश्वस्येशानं वृषभं मतीनाम्। ब्रह्म सरूपमनु मेदमागात्। अ-

म्' इति निघाते प्रतिषिद्धे आट उदात्तत्वे 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वं, 'उदात्तवता तिङा' इति समासः, एकादेशेन उदात्तत्वे णिच् स्वर्यते 'अनितेः' इति णत्वम् ॥

इत्यारण्यके तृतीये चतुर्दशोऽनुवाकः.

---

[1]अथ अनन्तरोऽनुवाको मृत्युसूक्तं—हरिं हरन्तमिति॥ 'मृत्यवे वेहतम्' इत्यत्र पशौ वपायाः पुरोडाशस्य हविष इति द्वेद्वे याज्यानुवाक्ये षडृचो भवन्ति। प्रथमे अन्त्ये च त्रिष्टुभः। मध्ये द्वे अनुष्टुभौ। हरिं हरणशीलं मृत्युं हरन्तं प्राणमपहरन्तं अनुयन्ति अनुगच्छन्ति देवाः इन्द्रियाणि प्राणे ह्रियमाणे स्वयमपि पलायन्ते तद्वृत्तित्वात्। विश्वस्य भूतग्रामस्य ईशानं ईशितारं वृषभं प्रधानभूतं मतीनां मतिमताम्। तस्मात् इत्थं महानुभावस्त्वं अप्रतिरथः स्वतन्त्रश्च असि। अथापि मद्विषये इत्थं कर्तव्यमित्यात्माभिमतं प्रार्थयिष्यमाणः तद्धेतुत्वेन आत्मनो वैलक्षण्यं तावदाह—ब्रह्मेति। यस्मात् परिबृढं अयनं ज्ञानं गमनमेव वा सरूपं आत्मसमानरूपं आत्मसत्त्वानुगतस्वभावं इदं ईदृशं मामन्वागात् अनुक्रमेणागतम् तस्मात् तद्विषयानतिक्रम्य पर-

**यं॒नं मा विवं॑धी॒र्वि क्रं॑मस्व । [2]मा छिं॑दो मृ॒त्यो मा वं॑धीः । मा मे॒ बलं॒ विवृं॑हो॒ मा प्रमो॑षीः । प्र॒जां मा मे॑ रीरिष॒ आयुं॑रुग्र । नृ॒चक्षं॑सं त्वा ह॒विषां॑ विधेम । [3]स॒द्यश्च॑कमा॒नायं॑ । प्र॒वेपा॒नायं॑ मृ॒त्यवे॑ ॥ ४६ ॥**

स्मिन् महिम्नि स्थितं मां मा **विवधीः** मा विफलं हिंसीः । विघातमस्यायनस्य कार्षीः । तस्मात् **विक्रमस्व** मां विहाय अन्यत्र यद्वा—मा गच्छ मां मा वधिष्ठाः ॥

[2]मा छिद इति प्रथमः पादो व्यक्ताक्षरः ॥ हे **मृत्यो** ! मां **मा छिदः** मा छेत्सीः देहबाधां मा कार्षीः मा च मां **वधीः** प्राणबाधां मा कार्षीः । 'लुङि च' इति वधादेशः 'नेटि' इति वृद्धिप्रतिषेधः । मा च मम **बलं विवृहः** मा विनीनशः बलहानिं मा कार्षीः । बृह उद्यमने, बवयोरेकत्वमिच्छन्ति, तौदादिकः, छान्दसो लुङ्, लङपवादः छान्दसो लुङ् । मा च मां **प्रमोषीः** अज्ञं प्रमत्तं वा माऽपहार्षीः । मदीयं वा धनादिकं मा प्रमोषीः । हे **उग्र**! उग्रदण्डस्वभाव! **मा** मदीयां **प्रजां रीरिषः** माऽनीनशः **आयुश्च** मा रीरिष इत्येव, वर्षशतादर्वाक् मामादाय मा गमः । तदर्थं वयमपि त्वां **नृचक्षसं** नृणां मनुष्याणां द्रष्टारं हिताहितदर्शिनं पुण्यापुण्यविभागदर्शिनं वा । नॄन् चष्ट इति नृचक्षाः । 'गतिकारकयोरपि' इति असुन् 'परादिश्छन्दसि' इति उत्तरपदाद्युदात्तत्वम् । तादृशं त्वां **हविषा विधेम** परिचरेम ॥

[3]**सद्य इति** ॥ **सद्यः** समानेऽहनि न तदानीमेव **चकमानाय** तृप्यते आगत्य क्षणं तिष्ठते प्राणिनां सद्यो मरण[1]-

[1]हरण.

प्रास्मा आशां अशृण्वन्न् । कामेनाजनयन्पुनः ।
4 कामेन मे काम आगांत् । हृदंयाद्धृदंयं मृत्योः ।

---

रुचये अतएव प्रवेपानाय प्रकर्षेण प्राणिनां वेपयित्रे कम्पयित्रे । ण्यन्तात्ताच्छीलिकश्चानश्, 'छन्दस्युभयथा' इत्यार्धधातुकत्वाण्णिलोपः, 'अनित्यमागमम्' इति वा मुगभावः, यथा 'अपि शाकंपचानस्य' इति । ईदृशाय अस्मै मृत्यवे आशाः सर्वाः प्राशृण्वन् प्रकर्षेण शृण्वन्ति सर्वे दिग्वासिनः इममेव शृण्वन्ति एतच्चरितानामेव प्रकर्षेण श्रोतारो भवन्ति । यद्वा—अस्मा एव दिग्वासिनः प्रशृण्वन्ति विधेयीभूता आज्ञाश्राविण इव प्रकर्षेण प्रवर्तन्ते । छान्दसो लुङ् । किञ्च—सर्वेऽपि दिग्वासिनः अस्य कामेन इच्छया पुनःपुनरात्मीयमहिम्नाऽभिमतं अजनयन् जनयन्ति न पुनरेतदनुज्ञया विना ॥

4 कामेनेति ॥ मृत्योः कामो मम कामेन ममानुकूल्येन आगात् आगच्छतु, यथाऽहं कामये तदेव कामयतां मृत्युः कामम् । किञ्च—ममापि हृदयं मृत्योः हृदयात् मृत्युहृदयानुकूल्यात् आगादित्येव । यादृशं मृत्युहृदयं तादृशमस्तु मम हृदयं न तु तद्विरोधि मृत्योर्विप्रियं मा कार्षमिति यावत् । ल्यब्लोपे वा पञ्चमी—मृत्युहृदयमभिसमीक्ष्य मम हृदयं तदनुरूपं प्रवर्ततामिति । इदानीं मृत्योर्विप्रियानाचरणस्य फलमाह—अमीषां इन्द्रियाणां यत्प्रियं अद इति विशेषार्थं आयुर्वा प्रजा वा पशुर्वेति । 'सुपां सुलुक्' इति सप्तम्या वा लुक् । अमुष्मिन् लोके यत् प्रियं तत्सर्वं मामभ्यैतु आभिमुख्येन उपागच्छतु, मृत्योः प्रियाचरणं इन्द्रियप्रियाभ्युपाय इति भावः ॥

यदमीषांमदः प्रियम् । तदेतत्पं मामभि । [5]परं मृत्यो अनु परेहि पन्थांम् । यस्ते स्व इतरो देवयानांत् । चक्षुष्मते शृण्वते ते ब्रवीमि । मा नः प्रजां रीरिषो मोत वीरान् । प्र पूर्व्यं मनसा वन्दमानः । नाधमानो वृषभं चर्षणीनाम् । यः प्रजानांमेकराण्मानुषीणाम् । मृत्युं यजे प्रथमजामृतस्यं ॥

मृत्यवे वीरांश्चत्वारि च ॥ १५ ॥

---

[5]परमिति ॥ हे मृत्यो ! परं अन्यं पन्थां पन्थानं अनुपरेहि अनुक्रमेण परागच्छ । यस्ते स्वभूतः पन्थाः देवयानादितरः तत्र परेहि, देवयानं पन्थानं मे देहि । चक्षुष्मते साधुदर्शिने शृण्वते श्रोत्रे विज्ञप्तीनां श्रुत्वाऽभिमतानां दात्रे ब्रवीमि प्रार्थये । कर्मणि चतुर्थी । अस्माकं प्रजां पुत्रादिकां वीरान् विक्रान्तांश्च अन्यानस्मदीयान् मा रीरिषः माऽनीनशः ॥

[6]प्रपूर्व्यमिति ॥ पूर्व्यं पुरातनम् । स्वार्थिको यः । पूर्वेण वा प्रथमेन पुंसा ईश्वरेण कृतः प्रवर्तितः 'पूर्वैः कृतमिनियौ च' इति यः । मनसा वन्दमानो नाधमानः । नाधृ याच्नादिषु, वर्णविकारश्छान्दसः । याचमानोऽभिमतानि वृषभं वर्षितारं कामानां चर्षणीनां मनुष्याणाम् । यः प्रजानां मानुषीणां मनोरपत्यानां एकराट् एकस्वामी 'मनोर्जातौ' इत्यञ् । तं महानुभावं मृत्युं प्रयजे प्रकर्षेण पूजयामि । ऋतस्य सत्यस्य आत्मनः प्रथमजां प्रथमोत्पन्नं पुत्रम् । 'जनसन' इति विट्, 'विड्वनोरनुनासिकस्यात्' इत्यात्त्वम् ॥

इति तैत्तिरीयारण्यके पञ्चदशोऽनुवाकः.

[1]त॒रणि॑र्वि॒श्वद॑र्शतो ज्योति॒ष्कृद॑सि सूर्य । वि॒श्वमा भा॑सि रोच॒नम् । उ॒प॒या॒मगृ॑हीतोऽसि॒ सूर्या॑य त्वा॒ भ्राज॑स्वत ए॒ष ते॒ योनि॒स्सूर्या॑य त्वा॒ भ्राज॑स्वते ॥ ४८ ॥

[1]आ प्या॑यस्व मदिन्तम॒ सोम॒ विश्वा॑भिरू॒तिभिः॑ । भवा॑ नस्स॒प्रथ॑स्तमः ॥ ४९ ॥

---

[1]अतिग्राह्याणां तृतीयं सौर्यं गृह्णाति—**तरणिरिति** गायत्री एकयजुरन्ता ॥ हे **सूर्य! तरणिः** तरणशीलः गत्वरः तारयिता वा दुरितानां **विश्वदर्शतः** विश्वस्य साक्षाद्द्रष्टा । दासीभारादिर्द्रष्टव्यः । यद्वा—विश्वं दर्शतं द्रष्टव्यं यस्य । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति विश्वशब्दस्य अन्तोदात्तत्वम् । ज्योतिष्कृत् ज्योतिषां ग्रहनक्षत्राणां कर्ता एवं महानुभावस्त्वं **असि** । त्वं **विश्वं रोचनं** रोचनशीलं **आभासि** त्वमेव वा आभासयसि आत्मज्योतिस्त्वमसीति । उपयामगृहीत इति व्याख्यातम् । **सूर्याय** त्वा **भ्राजस्वते** दीप्तिमते गृह्णामि **एष ते योनिरिति** ॥

इति तैत्तिरीयारण्यके तृतीये षोडशोऽनुवाकः.

---

[1]चमसोपदसने प्रायश्चित्तं—**आप्यायस्वेति** गायत्री ॥ **सोम! मदिन्तम!** मादयितृतम! । यद्वा—माद्यत्तम आत्मानन्दमय । 'शमित्यष्टाभ्यो घिनुण्' 'नाद्घस्य' इति नुट् । **आप्यायस्व** वर्धस्व **विश्वाभिरूतिभिः** रक्षणैस्तर्पणैर्वा अस्माकं **सप्रथ-**

[1]ईयुष्टे ये पूर्वंतरामपंश्यन्व्युच्छन्तीमुषसं मर्त्यासः । अस्माभिरू नु प्रंतिचक्ष्याऽभूदो ते यन्ति ये अंपरीषु पश्यान् ॥ ५० ॥

[1]ज्योतिंष्मतीं त्वा सादयामि ज्योतिष्कृतं त्वा

स्तमो भव अतिशयेन प्रथासमन्वितः सप्रथस्तमः । त्वमस्मद्विषयाभिस्सर्वाभिरूतिभिः भृशं प्रथितो भव अस्माभिस्सह वर्धस्व ॥

इति तैत्तिरीयारण्यके तृतीये सप्तदशोऽनुवाकः.

---

[1]सन्ति वृष्टयो नाम षोडशेष्टकाः 'इयमेव सा या'* इत्याद्याः । तासामियं षोडशी ईयुष्ट इति त्रिष्टुप् ॥ ईयुः गताः ते मर्त्याः ये पूर्वतरां पुराणतरां अतीतां व्युच्छन्तीं विवसन्तीं उषसं अपश्यन् दृष्टवन्तः । अस्माभिरेव त्विदानीं प्रतिचक्ष्या प्रतिदिनं द्रष्टव्या अभूत् । क्याआदेशाभावश्छान्दसः । ये पुनः अपरीषु परासु अनागतासु उषस्सु पश्यान् पश्येयुः द्रष्टारः स्युः । लेट्याडागमः । तेऽप्यायन्त्येव आगमिष्यन्त्येव । एवं त्रैकाल्येऽपि सर्वैः प्रतीक्ष्यते उषसो महिमा । आ उ ओ इति निपातसमुदायात्मा निपातः । अपरशब्दात् छन्दसो ङीप् । एवमात्मज्योतिरेव व्याप्य तिष्ठतीति उषसस्स्तुतिः ॥

इत्यारण्यके तृतीये अष्टादशोऽनुवाकः.

---

[1]द्वादश ज्योतिष्मतीरुपदधाति—ज्योतिष्मतीमिति ॥ आत्मज्योतिषो वृत्तिभेदाः ते इष्टकात्वेन स्तूयन्ते—ज्योतिष्मती प्रशस्त-

*सं. ४-३-११.

सादयामि ज्योतिर्विदं त्वा सादयामि भास्वतीं त्वा सादयामि ज्वलन्तीं त्वा सादयामि मल्मलाभवन्तीं त्वा सादयामि दीप्यमानां त्वा सादयामि रोचमानां त्वा सादयाम्यजस्रां त्वा सादयामि बृहज्ज्योतिषं त्वा सादयामि बोधयन्तीं त्वा सादयामि जाग्रतीं त्वा सादयामि ॥ ५१ ॥

[1]प्रयासाय स्वाहाऽऽयासाय स्वाहा वियासाय स्वाहा संयासाय स्वाहोद्यासाय स्वाहाऽवयासाय

---

ज्योतिः । ज्योतिष्कृत् ज्योतिरन्तरस्य कर्त्री ज्योतिषां लम्भयित्री- **भास्वती** बहुप्रकाशा । **ज्वलन्ती** अविच्छिन्नप्रकाशा । **मल्मलाभवन्ती** महाघोषवती । 'अव्यक्तानुकरणात्' इति डाच् । **दीप्यमाना** हृदये आविर्भवन्ती । **रोचमाना** गगने आविर्भवन्ती । **अजस्रा** अनुपहिंस्या केनचिदपि । **बृहज्ज्योतिः** बृंहितज्योतिः । **बोधयन्ती** दृश्यं प्रकाशयन्ती । **जाग्रती** स्वयंप्रकाशात्मना ॥

इत्यारण्यके तृतीये एकोनविंशोऽनुवाकः.

---

[1]अश्वमेधे रात्रिहोमेषु प्रयासायेति परमात्मपरिस्पन्दभेदा उच्यन्ते—**प्रयासः** प्रकृष्टो यासः क्रिया यागादिः । **आयासः** शास्त्रपूर्वः प्रयासः अर्थार्जनादिः । मर्यादायामाकारः । **वियासः** विविधो व्यापारः हसितकण्डूयितादिः । **संयासः** समीचीनप्रयत्नः परोपकारादिः । **उद्यासः** उद्भूतो व्यापारः महाभूतविकारादिः । **अवयासः** निकृष्टो व्यापारः दुष्कर्म । **शुक्** शोचयितृस्वभावं

स्वाहा शुचे स्वाहा शोकाय स्वाहा तप्यत्वै स्वाहा तपते स्वाहा ब्रह्महत्यायै स्वाहा सर्वस्मै स्वाहा ॥ ५२ ॥

[1]चित्तꣳ संतानेन भवं यक्ना रुद्रं तनिम्ना पशुपतिꣳ स्थूलहृदयेनाग्निꣳ हृदयेन रुद्रं लोहितेन श-

दुःखात्मकं कर्म । शोकः तत्फलमात्मधर्मः । तप्यतुः तापहेतुः अनिष्टाचरणम् । तपतेरौणादिकोतुच्प्रत्ययः, यकारोपजनश्छान्दसः, 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । तपः कृच्छ्रादि देहशोषकम् । ब्रह्महत्या ग्रहणं महापातकानामुपलक्षणम् । सर्वग्रहणं अनुक्तपरिस्पन्दपरिग्रहार्थम् ॥

इति तैत्तिरीयारण्यके तृतीयप्रपाठके विंशोऽनुवाकः.

---

[1]ब्रह्ममेधे प्रेतस्य देहावयवानां स्वकारणोपसंहारे चित्तमित्यादि ॥ परमेश्वरस्य प्रपञ्चाधिष्ठातृरूपाण्युच्यन्ते एते शरीरहोमाः इमां देवतां अनेन यजामीति । चित्तं महान् तस्य अधिष्ठाता सन्तानः पुत्रपौत्रादिः आन्त्रं माला पुरीतादित्येके । भवः अपामधिष्ठाता । यकृत् कृष्णो मांसविशेषः । रुद्रः आदित्यस्याधिष्ठाता । तनिमा पद्मदळवत्ततो मांसविशेषः । पशुपतिः पृथिव्या अधिष्ठाता । स्थूलहृदयं पद्मकोशाकारो मांसविशेषः । अग्निः अग्नेरधिष्ठाता । हृदयं सूक्ष्माकाशाधारः प्रदेशविशेषः । रुद्रः यजमानस्य अधिष्ठाता । लोहितं रक्तम् । शर्व आकाशस्य अधिष्ठाता । मतस्ने दीर्घौ सिराविशेषौ । महादेवः प्राणस्य वायोरधिष्ठाता । अन्तःपार्श्वं पार्श्वयोरन्तः अन्तः-

वैं मतंस्नाभ्यां महादेवमन्तःपार्श्वेनौषिष्ठहनꣳ शि-
ङ्गीनिकोश्याभ्याम् ॥ ५३ ॥

चित्तिः पृथिव्यग्निस्सूर्यं ते चक्षुर्महाहविर् हो-
ता वाग्घोतां ब्राह्मण एकंहोताऽग्निर्यजुंभिस्सेने-
न्द्रंस्य देवस्यं सुवर्णं घर्मꣳ सहस्रंशीर्षाऽब्धो भ-
र्ता हरिं तरणिराप्यांयस्वेयुष्टे ये ज्योतिष्मतीं प्रया-
सायं चित्तमेकंविꣳशतिः ॥ २१ ॥

चित्तिरग्निर्यजुंभिरन्तः प्रविष्टः प्रजापतिस्तस्य
धीरा ज्योतिष्मतीं त्रिपंञ्चाशत् ॥ ५३ ॥

तच्छं योरावृंणीमहे । गातुं यज्ञायं । गातुं य-
ज्ञपंतये । दैवीं स्वस्तिरंस्तु नः । स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजम् । शं नो अस्तु द्विपदे ।
शं चतुष्पदे ॥ ओं शान्तिश्शान्तिश्शान्तिः ॥
हरिः ओम् ॥

---

पार्श्वम् । **ओषिष्ठहा** ओषधिपक्षगामी [ओषिष्ठः क्षयपक्षः तद्गामी] चन्द्रः । ओषितृशब्दात् 'तुश्छन्दसि' इति इष्ठन्प्रत्ययः । **शिङ्गीनिकोश्ये** शिञ्जनाधारः कोशाकारश्च स्थानविशेषो यत्र । शिञ्जनं नादः । घञि कुत्वे मत्वर्थीय ईकारः । निभृतः कोशो निकोशः । तयोर्भवौ शिङ्गीनिकोश्यौ मांसविशेषौ । 'भवेच्छन्दसि' इति यत् ॥

इति तैत्तिरीयारण्यके तृतीयप्रपाठके एकविंशोऽनुवाकः.

प्रपाठकश्च समाप्तः.

—o—

## चतुर्थप्रपाठकः.

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च ॥

ओं शान्तिश्शान्तिश्शान्तिः ॥ हरिः ओम् ॥

[1]परेयुवाꣳसं प्रवतो महीरनु बहुभ्यः पन्थामन-

---

[1]प्रवर्ग्यं ब्रुवता भगवता पुरुषेण कर्तव्यानि दर्शपूर्णमासादीनि संवत्सरपर्यन्तानि कर्माणि समन्त्रब्राह्मणानि विहितानि व्याख्यातानि च अस्माभिः । इदानीं मृतस्य संस्काराख्यः पितृमेधाख्यः प्रस्तूयते । 'स एष यज्ञायुधी यजमानो ह वै सुवर्गं लोकमेति' इति श्रुतेः मृतस्यापि संस्कारः श्रौत इष्यते । 'प्रत्येकं पुरुषस्य पावनः' इति च स्मृतिः । अत्र पैतृमेधिकान्मन्त्रान् व्याख्यास्यामः । प्राजापत्यं काण्डम् । 'तत्राहिताग्निं अग्निभिर्दहन्ति यज्ञपात्रैश्च' इत्यपि विनियोगः । तत्र प्रेताहवनीये जुह्वा जुहोति— **परेयुवांसमिति** ॥ परेयुवांसम् । उकारश्छान्दसः । बह्वृचाः परेयिवांसमित्येव पठन्ति । प्राणिनां शुभाशुभनिरीक्षणार्थं तत इतो गच्छन्तम् । कां प्रति? **प्रवतो महीरनु** अनुः प्रतेरर्थे । प्रकृष्टार्थवृत्तेः प्रशब्दात् 'छन्दसि धात्वर्थे' इति वतिः । शसन्तं चैतत् स्त्रीलिङ्गम् । प्रकृष्टा मनुष्या जातिः धर्मादिसमस्तपुरुषार्थसम्बन्धात् तत्प्रकर्षः । प्रवत इति च उपलक्षणं—उद्वतो निवत इत्यपि द्रष्टव्यम् । उद्वता देवजातिः । महीः भौतिकीः मनुष्यजातीः प्रति परेयुवांसं ताभ्य एव च **बहुभ्यः पन्थां** पन्थानं **अनपस्पशानम्** । अनोरुकारस्य अकारश्छान्दसः । उकारमेव बह्वृचाः पठन्ति । स्पशतिर्ज्ञानार्थः, स्पशा इति चारा उच्यन्ते । ते च ज्ञातारः परवृत्तान्तानाम् ।

**परस्पशानम् । वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्यत । [2]इदं त्वा वस्त्रं प्रथमं न्वागन्नपैतदूह यदिहाबिभः पुरा । इष्टापूर्तमनु संपश्य दक्षिणां यथा ते दत्तं बहुधा विबन्धुषु । [3]इमौ युन-**

---

तस्य शानचि शपः श्लौ द्विर्वचनम् । आनुपूर्व्येण जानन्तं अयमस्य मार्गोऽयमस्य मार्ग इति । एवंभूतं **वैवस्वतं** विवस्वतः पुत्रं **सङ्गमनं जनानां** प्रेतजना यत्र सङ्गच्छन्ते तं सङ्गमनं जनानां **यमं राजानं** अनेन आज्याहुतिलक्षणेन **हविषा** अहं तावद्दुवस्यामि यूयमपि **दुवस्यत** हे लोकाः! । दुवस्यतिः परिचरणकर्मा कण्ड्वादियगन्तः ॥

[2]मृतं आपत्तोऽहतेन वाससा प्रोर्णोति—**इदं त्वेति** त्रिष्टुभा जगत्या वा ॥ **इदं वस्त्रं प्रथमं** नूतनं **त्वा** त्वां **नु** क्षिप्रं **आगन्** आगतवान् । 'मन्त्रे घस' इति च्लेर्लुक्, हल्ङ्याादिलोपः 'मोनोधातोः' । पूर्वं परिहितमपादत्ते—**अपैतदिति** । **एतत्** वस्त्रं **अपोह** परित्यज प्रेत! **यत्** त्वं **पुरा** इह शरीरे **आबिभः** भृतवान् धारितवानसि । **इष्टापूर्तं** इष्टं अग्निहोत्रादि, **पूर्तं** तटाकखननादि, तयोस्समाहारद्वंद्वः । तदिष्टापूर्तं **अनुसम्पश्य** आनुपूर्व्येण जानीहि इतो गतस्सन् तत्फलमनुभुङ्क्ष्व । **दक्षिणा** दानं तां च **यथा** त्वया **दत्तं बहुधा** बहुप्रकारं **विबन्धुषु** अनाथेषु विशिष्टेषु वा बन्धुषु ॥

[3]मृतमनसा वहति मनुष्ययानेन वा; अनोवहनपक्षे वाहौ युनक्ति—**इमौ** वाहौ **युनज्मि** ते त्वदर्थं **वह्नी** वोढारौ **असुनीथि**

**ज्मि ते वह्नी असुनीथाय वोढवे । याभ्यां यमस्य सादनं सुकृतां चाधिगच्छतात् । [4]पूषा त्वेतश्च्यावयतु प्रविद्वाननष्टपशुर्भुवनस्य गोपाः । स त्वैतेभ्यः परिददात्पितृभ्योऽग्निर्देवेभ्यस्सुविदत्रेभ्यः । [5]पूषेमा आशा अनुवेद सर्वास्सो अस्माꣳ अभयतम-**

---

अप्रशस्तं तस्मै प्रेतकर्मणे वोढवे वोढुं यथा एतौ सम्यग्वहतः। **याभ्यां** वाहाभ्यां **यमस्य सुकृतां च सादनं** सदनं **अधिगच्छतात्** अधिरभेरर्थे अभिगमिष्यासि ॥

[4]वोढृभिरादीयमानं प्रेतमनुमन्त्रयते—पूषेति ॥ अतः परास्त्रिष्टुभः । आदित्यानामन्यतमः **पूषा** इतः स्थानात् **प्रच्यावयतु** अन्यतो नयतु । **विद्वान्** पथां ज्ञाता **अनष्टपशुः** दर्शनसाधनत्वात् पशवो रश्मयः । **भुवनस्य गोपाः** गोपयिता रक्षिता । क्विप् अल्लोपयलोपयोः रूपम् । स च पूषा **त्वा एतेभ्यः** प्रसिद्धेभ्यः **पितृभ्यः** अग्निष्वात्तादिभ्यः **परिददात्** रक्षणार्थं दानं परिदानम् । पञ्चमलकारः परिदद्यात् । **अग्निस्तु देवेभ्यः** परिदद्यात् **सुविदत्रेभ्यः** विदत्रं ज्ञानं लब्धव्यं वा धनं शोभनज्ञानेभ्यः शोभनधनेभ्यो वा ॥

[5]तुरीयमध्वनो गत्वाऽऽनीयमानमनुमन्त्रयते—पूषेमा इति ॥ **पूषा इमाः** प्राच्याद्या दिशस्सर्वा **अनुवेद** आनुपूर्व्येण जानाति स एवंभूतः पूषा **अस्मान्** । 'अस्मदो द्वयोश्च' इति एकस्मिन् बहुवचनम्—माम् । मृतेन सह एकत्वमापन्नस्य पुत्रादेर्वचनं—यत्र भयगन्धो नास्ति तेन **अभयतमेन** पथा **नेषत्** नयतु । **स्व-**

मेन नेषत् । स्वस्तिदा अघृणिस्सर्ववीरोऽप्रयुच्छ-
न्पुर एतु प्र विद्वान् ॥१॥ [6]आयुर्विश्वायुः परिपा-
साति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् । यत्रासते
सुकृतो यत्र ते ययुस्तत्र त्वा देवस्सविता दधातु ।
[7]भुवनस्य पत इदꣳ हविः। अग्नये रयिमते स्वाहा ।
[8]पुरुषस्य सयावर्यपेदघानि मृज्महे । यथा नो अत्र

स्तिदाः अविनाशस्य दाता अघृणिः अक्रोधः आगतदीप्तिर्वा । आघृणिरिति बह्वृचाः । सर्ववीरः सर्वैः परिचारकपुरुषैस्तद्वान् अप्रयुच्छन् अप्रमाद्यन् पुरः प्रैतु अस्माकमग्रतो गच्छतु विद्वान् पथां ज्ञाता ॥

[6]पुनस्तुरीयमध्वनो गत्वा निधायादीयमानमनुमन्त्रयते—**आयुर्विश्वायुरिति** ॥ **आयुः** गमनशीलः **विश्वायुः** विश्वव्यापी स **त्वा परिपासाति** । लेटि तिपोऽसडागमः । परिपायात् । **पूषा** च **त्वा पातु प्रपथे** प्रकृष्टे पथि **पुरस्तात्** गच्छन् । **देव**श्च **सविता** आदित्यानामन्यतमः यत्र स्थाने सुकृत आसते यत्र वा **ते ययुः** गच्छन्ति **तत्र त्वा देवस्सविता दधातु** स्थापयतु ॥

[7]राजगवीमुपाकरोति—**भुवनस्येति** यजुषा ॥ हे **भुवनस्य पते**! स्वामिन्! अग्ने! **इदं** राजगव्याख्यं **हविः** उपाकरोमीति शेषः । स्रुवेण पात्रेण वा जुहोति—**अग्नये रयिमते** धनवते **स्वाहा** हुतमस्तु ॥

[8]राजगव्यां शमितृभिर्हन्यमानायां सव्यानि जानूनि अभिनिघ्नन्तः

नापरः पुरा जरस आयति । [9]पुरुषस्य सयावरि वि ते प्राणमसिस्रसम् । शरीरेण महीमिहि स्वधये- हि पितॄनुप प्रजयाऽस्मानिहावह । [10]मैवं माऽ- स्ता प्रियेऽहं देवी सती पितृलोकं यदैषि । विश्ववा- रा नभसा संव्ययन्त्युभौ नो लोकौ पयसाऽभ्यावं-

---

पांसूनपमृजन्ते—**पुरुषस्येति** अनुष्टुभा ॥ मृतस्य **पुरुषस्य सया- वरि** ! । सहपूर्वाद्यातेर्वनिपि 'वनोरच' इति ङीब्रेफौ । पुरुषेण मृतेन सह यात्रीत्येवमामन्त्र्यते । **अघानि** वयमपमृज्महे पांसुमा- र्जनव्याजेन त्वद्वधकृतमघमेव वयं परिमृज्मः । इच्छब्द एवार्थः । **यथा** पांसुमार्जने सति **नः** अस्मान् अत्र वसतः **पुरा जरसः** जरायाः प्राक् **अपरो** मृत्युप्रभृतिः अनिष्टवर्गः **नायाति** तथा अपमृज्मह इति ॥

[9]अथ तां शमितृभिर्विशस्यमानामनुमन्त्रयते—**पुरुषस्येति** ॥ **स- यावरि** ! **ते** तव स्वभूतं प्राणं **व्यसिस्रसं** विस्रंसयामि । यत् बन्धनस्य विस्रंसनं तत् प्राणस्येति रूप्यते । सा त्वं विस्रस्तप्राणा **शरीरेण महीं** भूमिं **इहि** गच्छ मृतो भूमौ पतति । **स्वध- या** मांसरूपया **पितॄन उपेहि अस्मांश्च इह** गृहे **प्रजया** पुत्रपौत्रादिकया **आवह** सङ्गमय प्रजावतः कुरु ॥

[10]**मैवमिति** त्रिष्टुप् ॥ मांस्तेति तृतीयैकवचनस्याकारः । हे राजगवि ! तव या एवंभूता **मांस्ता** मांसता तया **माऽहं प्रिये** । छान्दसो ह्रस्वः । प्रीतो मा भवामि न ह्यहमात्मनः प्रिये त्वां विशसितवान् किन्तर्हि पितॄणामर्थाय । अतश्च **यदा**

वृत्स्व ॥ २ ॥ [11]इ॒यं नारी॑ पतिलो॒कं वृ॑णा॒ना निप॑द्यत॒ उप॑ त्वा मर्त्य॒ प्रेत॑म् । विश्वं॑ पु॒रा॒णमनु॑ पा॒लय॑न्ती॒ तस्यै॑ प्र॒जां द्रवि॑णं चे॒ह धे॑हि । [12]उदी॑र्ष्व ना॒र्य॒भि जी॑वलो॒कमि॒तासु॑मे॒तमुप॑शेष॒ एहि॑ । ह॒स्त॒ग्रा॒भस्य॑

त्वं देवी सती देवभूयं गता । विश्ववारा सर्वेषां वरणीया नभसा आकाशयानेन पितृलोकं एषि । यदेति वचनात् तदेति गम्यते । तदा पयसा इह संव्ययन्ती आच्छादयन्ती नः अस्मान् अभ्याववृत्स्व उभयोरपि लोकयोरस्मान् पयस्विनः कुरु अस्य मन्त्रस्य नास्मत्सूत्रे विनियोगः ॥

[11]मृतस्य पत्नीं दारुचितामुपवेशयन्ति—इयं नारीति ॥ इयं नारी तव भार्या पतिलोकं पत्युस्तव सालोक्यं वृणाना कामयमाना हे मर्त्य ! मरणधर्मन् त्वा त्वां प्रेतं उपनिपद्यते उपशेते । विश्वं कृत्स्नं पुराणं चिरन्तनं एकपत्नीनां व्रतं अनुपालयन्ती तस्यै तस्याः प्रजां द्रविणं च इह धेहि स्थापय यथा न ते क्षीयेते तथा कुरु ॥

[12]तामुत्थापयाति पतिस्थः पतिस्थाने तिष्ठतीति पतिस्थो देवरादिः—उदीर्ष्व नारीति ॥ हे नारि त्वं ! इतासुं गतासुं गतप्राणं एतं पतिं उपशेषे उपसृत्य शेषे सा उदीर्ष्व उत्तिष्ठ उत्थाय जीवलोकमभ्येहि । न च एवं ते पतिलोकहानिः यतः त्वं अभिसन्धिमात्रेणैव हस्तग्राभस्य विवाहसमये मन्त्रवत्तव हस्तं गृहीतवतः दिधिषोः गर्भस्य धातुः पत्युः एतज्जनित्वं जन्म लोकान्तरप्राप्तिरूपं अभिसम्बभूव । पुरुषव्यत्ययः । अभिसम्बभूथेति बह्वृचाः पठन्ति । अभिसम्बभूविथ उत्पद्यमानैव त्वमेवमुत्पन्नाऽसि ॥

दिधिषोस्त्वमेतत्पत्युर्जनित्वमभि संबभूव । [13]सुवर्णꣳ हस्तादाददाना मृतस्य श्रियै ब्रह्मणे तेजसे बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वास्स्पृधो अभिमातीर्जयेम । धनुर् हस्तादाददाना मृतस्य श्रियै क्षत्रायौजसे बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वास्स्पृधो अभिमातीर्जयेम । मणिꣳ हस्तादाददाना मृतस्य श्रियै विशे पुष्ट्यै बलाय । अत्रैव त्वमिह वयꣳ सुशेवा विश्वास्स्पृधो अभिमातीर्जयेम ॥ ३ ॥ [14]इममग्ने चमसं मा विजीह्वरः प्रियो

[13]ब्राह्मणस्य मृतस्य हस्तौ सुवर्णेन निमार्ष्टि, धनुषा राजन्यस्य, मणिना वैश्यस्य, तत्र मन्त्रः—सर्वत्रादानलिङ्गात् हस्तगतमङ्गुलीयकाद्यादाय तेन सम्मार्ष्टि—मृतस्य[1] **हस्तात् सुवर्णमाददाना** आदाय तव हस्तौ सम्मृजन्त इत्यर्थः । एवंभूता वयं श्रयादिभ्यो भवेम । ब्रह्म वेदः तेजः ब्रह्मवर्चसं अन्यत् प्रसिद्धम् । **अत्रैव** दहनदेशे त्वं भव **वयं** पुनरिह गार्हस्थ्ये स्थिताः **सुशेवाः** शेवमिति सुखनाम सुसुखास्सन्तः **विश्वाः स्पृधः** स्पर्धमानाः सङ्ग्रामकारिणीर्वा । **अभिमातीः** शत्रुजातीः **जयेम** । **धनुरिति** । पूर्ववद्व्याख्यातव्यम् । **क्षत्रं** क्षत्रियभावः **ओजः** अप्रतिहतप्रतिज्ञत्वम् । **मणिनेति** । पूर्ववत् । **विशे** वैश्यभावाय ॥

[14]पात्रेषु चीयमानेषु चमसनिधानमन्त्रः—**इममिति** ॥ प्रक्षेप्स्यमानोऽग्निर्हृदिस्थस्संबोध्यते । हे **अग्ने! इमं चमसं मा विजीह्वरः** । ह्वृ कौटिल्ये । कौटिल्यं मा कार्षीः आर्जवेन दह यतोऽयं **प्रियो**

[1]मृतस्य तव.

देवानामुत सोम्यानाम् । एष यश्चमसो देवपानस्तस्मिन्देवा अमृता मादयन्ताम् । [15]अग्नेर्वर्म परि गोभिर्व्ययस्व संप्रोर्णुष्व मेदसा पीवसा च । नेत्त्वा धृष्णुर् हरसा जर्हृषाणो दधृग्विधक्ष्यन्पर्यङ्खयातै । [16]मैनमग्ने विदहो माऽभिशोचो माऽस्य त्वचं चिक्षिपो मा शरीरम् । यदा शृतं करवो जातवेदोऽ-

**देवानां** **उत** **सोम्यानां** सोमार्हाणां ऋत्विजामपि प्रियः देवा ऋत्विजः पानादिगुणयोगात्, प्रसिद्धा एव वा देवाः । ते यत्र पिबन्ति स **एष** **देवपानः** **चमसः** **तस्मिन्** **देवाः** **अमृताः** अमरणधर्माणः **मादयन्तां** स्वात्मानं मादयन्ते । तस्मात् मा विजीह्वर इति ॥

[15]राजगव्याश्चर्मणा मृतं प्रोर्णोति—**अग्नेर्वर्मेति** ॥ **वर्म** कवचं अग्नेर्वर्मभूतं **गोभिः** राजगव्या अवयवैः पादादिशिरोन्तैश्चर्माश्रयैरात्मशरीरं **परिव्ययस्व** परितश्छादय हे प्रेत ! । वपयाऽस्य मुखं प्रोर्णोति—**सम्प्रोर्णुष्वेति** । **मेदसा** वपया मुखं **सम्प्रोर्णुष्व** । कीदृशेन? **पीवसा** यदुपयुञ्जानाः पीवानो भवन्ति तत् पीवः तादृशेन । एवमाच्छादिते किं भवति? न इत् **नेत्** नैव **त्वा** **धृष्णुः** धर्षणशीलः **हरसा** स्वेन तेजसा **जर्हृषाणः** दाह्यलाभेन अत्यन्तं हृष्यन् **दधृत्** चिरमात्मानं स्थापयन् **विधक्ष्यन्** विविधं धक्ष्यन् भूत्वा नैव त्वां **पर्यङ्खयातै** सर्वतो व्याप्नुयात् ॥

[16]अथैनमुपोषयति पुरस्तादाहवनीयेन—**मैनमिति** ॥ हे **अग्ने**! **एनं** **मा** **विदहः** विदग्धं मा कार्षीः यथाऽस्थ्यादिकमपि दह्यते[1] तथा मा धक्षीः **माऽभिशोचः** अभिरलपार्श्वे माऽभिमुखज्वालो दीपिष्ठाः **अस्य**

[1]दश्यते.

**थैमेनं प्रहिणुतात्पितृभ्यः । [17]शृतं यदा करसि जातवेदोऽथेमेनं परिदत्तात्पितृभ्यः । यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति । [18]सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छं पृथिवीं च धर्मणा । अपो वा गच्छ यदि तत्र ते हितमोषधीषु**

**त्वचं** असृग्धरं ज्वालाग्रैः **मा विचिक्षिपः** । कथं तर्हि करवाणि **यदा शृतं** सुष्ठु दग्धं **करवः** करिष्यासि **अथ** अनन्तरं तदानीमेव । ईमिति पादपूरणे । **एनं** प्रेतं **पितृभ्यः प्रहिणुतात्** प्रहिणु प्रगमय पितृपार्श्वं प्रापय ॥

[17]पश्चात् गार्हपत्येन दहति—**शृतमिति** ॥ हे **जातवेदः**! यदा त्वेनं **शृतं करासि** करिष्यसि **अथ** ईम् अनन्तरं **एनं** पितृभ्यः **परिदत्तात्** रक्षार्थं देहि । किं कारणमेवं प्रार्थ्यते? उच्यते—**यदा एतां** एवंविधां **असुनीतिं** प्राणगतिं **गच्छाति** गच्छेत् **अथ** तदा **देवानां वशनीः** वशवर्ती **भवाति** भवेत् देवानां यत् वशं तत् प्राप्नोति ॥

[18]दह्यमानमुपतिष्ठते—**सूर्यं त इति** ॥ हे प्रेत! ते तव स्वभूतं **चक्षुः** इन्द्रियं तैजसं **सूर्यं** तेजोरूपं **गच्छतु** । **वातं** बाह्यवायुं तव **आत्मा** प्राणवायुः **गच्छतु** । उपलक्षणमेतत्—अन्यान्यपि प्राणादीनि पृथिव्यादीनि स्वकारणानि गच्छन्तु । त्वं तु **धर्मेण** स्वकर्मवशेन **द्यां च** । चशब्दो वाऽर्थे; द्युलोकं वा गच्छ दिव्यरूपस्सन् । **पृथिवीं** वा गच्छ मनुष्यादिरूपेण । **अपो वा गच्छ** मत्स्यादिरूपेण । **यदि तत्र हितं** जन्म कर्मणा **ओषधीषु** वा **प्रतितिष्ठ** स्थावरतां गच्छ **शरीरैः** शरीरेण तदवयवैश्च । 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।' इति मनुः ॥

प्रतितिष्ठा शरीरैः । [19]अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः । यास्ते शिवास्तनुवो जातवेदस्ताभिर्वहेमꣳ सुकृतां यत्र लोकाः । [20]अयं वै त्वमस्मादधि त्वमेतदयं वै तदस्य योनिरसि । वैश्वानरः पुत्रः पित्रे लोककृज्जातवेदो वहेमꣳ सुकृतां यत्र लोकाः ॥ ४ ॥

विद्वानभ्यावर्त्स्वाभिमातीर्जयेम
शरीरैश्चत्वारि च ॥ १ ॥

---

[19]जघनेन चितिं अजमबलेन शुल्बेन सम्बध्नाति, तं द्रवन्तमनुमन्त्रयते—अज इति ॥ एषः अजः तव भागः तं भागं त्वदीयेन तपसा तापहेतुना औष्ण्येन तपस्व । तपन्तमेव [तमेव] ते शोचिः दीप्तिः तपतु, ते अर्चिः ज्वालाऽपि तमेव तपतु । हे जातवेदः! यास्ते शिवास्तनुवः ताभिः तनूभिः इमं प्रेतं अजं वा वह त्वं सुकृतां यत्र लोकाः तत्र ॥

[20]अयं वा इति ॥ हे जातवेदः ! अयं अङ्गुल्या निर्दिशन्नाह—अयं वै अजः प्रेतो वा त्वमसि । कुतः? अस्मादधि अस्माज्जातस्त्वमसि हविष्ट्वात् । एतत् एतेन प्रकारेण त्वं च अयमसि । यतः अस्य योनिः कारणं त्वमसि । अग्नेस्सर्वकारणत्वात् तस्मात् द्वयोरपि पितृत्वं पुत्रत्वं च प्रतिपादितम् । पुत्रश्च पित्रे लोककृद्भवति पुण्यलोकप्राप्तिहेतुर्भवति । तस्मात् वैश्वानरोऽपि विश्वेषां नराणां स्वामी त्वं इमं वह प्रापय यत्र सुकृतां लोकाः तत्र ॥

इत्यारण्यके चतुर्थप्रश्ने प्रथमोऽनुवाकः.

[1]य एतस्य पथो गोप्तारस्तेभ्यस्स्वाहा य एतस्य पथो रक्षितारस्तेभ्यस्स्वाहा य एतस्य पथोऽभिरक्षितारस्तेभ्यस्स्वाहाऽऽख्यात्रे स्वाहाऽपाख्यात्रे स्वाहाऽभिलालपते स्वाहाऽपलालपते स्वाहाऽग्नये कर्मकृते स्वाहा यमत्र नाधीमस्तस्मै स्वाहा । [2]यस्त इध्मं जभरत्सिष्विदानो मूर्धानं वा ततपते त्वाया ।

[1]अथ नव स्रुवाहुतीः जुहोति—य एतस्येति ॥ सर्वाणि यजूंषि । येन पथा प्रेतो गच्छति एतस्य पथः ये गोप्तारः सुखेनातिवाहयितारः तेभ्यस्स्वाहा हुतमस्तु । येऽपि एतत्पथो रक्षितारः मार्गस्य सम्यङ्निष्पादयितारः । अभिरक्षितारः अभितस्स्थित्वा पालयितारः । आख्याता सम्यक् पथामाख्याता अपाख्याता अधार्मिकेभ्यः असन्मार्गख्यापयिता । अभिलालपते अभिगम्य पुनःपुनः मार्गमाचक्षाणाय इतइतो भवतीति । अपलालपते असद्भ्यः असन्मार्गं पुनःपुनः अपालपते नेह पन्था नेह पन्था इति । कर्मकृते हव्यकव्यादिवहनकर्मकारिणे । यं चाग्निमन्यमपि अत्र प्रकरणे स्मर्तव्यं अङ्गभूतं नाधीमः न स्मरामः अनाम्नानात् नाधीमहे वा तस्मै स्वाहेति ॥

[2]यस्त इति त्रिपदा त्रिष्टुप् ॥ हे प्रेत!* [हे अग्ने यः राक्षसादिः ते तव इध्मं जभरत् अपहरति अथवा त्वाया त्वदीयस्य दग्धस्य प्रेतस्य मूर्धानं स्वयं सिष्विदानः स्वेदं प्राप्तस्सन् ततपते अतिशयेन तापं करोति । शास्त्रीयदहनसाधनस्येध्मस्यापहारेण वा स्वकीयस्वेदेन मूर्धानं द्रवीकुर्वन्वा ते शास्त्रीयदाहं विनाश्य

*अत ऊर्ध्वमेतन्मन्त्रभट्टभास्करभाष्यग्रन्थो गलित इति मधवीयमेवात्र योजितम्.

दिवो विश्वस्मात्सीमघायत उरुष्यः । [3]अस्मात्त्वम-
धि जातोऽसि त्वदयं जायतां पुनः । अग्नये वैश्वा-
नराय सुवर्गाय लोकाय स्वाहा ॥ ५ ॥

य एतस्य त्वत्पञ्च ॥ २ ॥

[1]प्र केतुना बृहता भात्यग्निराविर्विश्वानि वृषभो
रोरवीति । दिवश्चिदन्तादुप मामुदानडपामुपस्थे

स्वर्गं विहान्ति[1] **दिवः** स्वर्गस्य **अघायतः** अघं पापं विघ्नं य इच्छति तस्मात्
**विश्वस्मात् सीं** सर्वस्मादपि राक्षसादेः **उरुष्यः** अयं प्रेतो रक्षणीयः]॥

[3]**अस्मादिति** अनुष्टुप् ॥ हे अग्ने ! त्वमस्मात् अधिजातोऽसि
पूर्वमिदानीं त्वत्तः **अयं पुनर्जायतां** पुण्यां गतिं प्राप्नोतु । तस्मै
तुभ्यं **अग्नये वैश्वानराय सुवर्गाय लोकाय** तद्धेतवे **स्वाहा** हुतमस्तु॥

इत्यारण्यके चतुर्थे द्वितीयोऽनुवाकः.

---

[1]जघनेनाग्निं प्राङ्मुख उपविश्य अथैनं याम्येन नवर्चेन पराचाऽनु-
शासति—**प्र केतुनेति** ॥ सर्वास्त्रिष्टुभः, विशेषो वक्ष्यते । अयं **अग्निः**
**केतुना** केतुस्थानीयेन धूमसमूहेन **बृहता** महता **प्रभाति** प्रक-
र्षेण दीप्यते **आविर्विश्वानि** भुवनानि आविष्कुण्वानः प्रकाश-
यन् **वृषभः** । लुप्तोपममेतत्, वृषभ इव **रोरवीति** शब्दायते ।
देवाह्वानकाले **दिवश्चिदन्तात्** द्युलोकस्यापि समीपादागत्य **मां**
**उप उदानट्** । नशिरदर्शनार्थो लोके, वेदे तु बाहुल्येन प्राप्तच-
र्थः । मत्समीपं प्राप्तवान् । अयमेव च अग्निः **अपां उपस्थे**
समुद्रे अन्तरिक्षे वा **महिषः** महान् **ववर्ध** ववृधे बाडबरूपेण
वैद्युतरूपेण वा । एवंभूतेन अग्निना दह्यमानः त्वं इष्टां गतिं गच्छ ॥

[1]विहितं हन्ति.

**महिषो ववर्ध । [2]इदं त एकं पर ऊं त एकं तृतीयेन ज्योतिषा सं विशस्व । संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे । [3]नाके सुपर्णमुप यत्पतन्तꣳ हृदा वेनन्तो अभ्यचक्षत त्वा । हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् । [4]अतिद्रव सारमेयौ**

[2]इदमिति ॥ हे प्रेत! ते तव **इदमेकं** शरीरं यत् इदानीं दह्यते **परः**, सकारान्तमेतत् नपुंसकलिङ्गं परशब्देन समानार्थम्। दृश्यते चान्यत्रापि—'परोरजास्ते पञ्चमः पादः'*। उकारो निपातश्चार्थे, 'निपातस्य च' इति दीर्घः । परश्च **एकं** तव शरीरं यत् जन्मान्तरे गृहीष्यते । इदानीं तु **तृतीयेन** शरीरेण **ज्योतिषा** द्योतमानेन **संविशस्व** स्वर्गाद्यनुभवाय **संवेशनः** सङ्गतश्च सन् **तनुवै** तन्वा **चारुः प्रियश्च** पश्यतां सन् **देवानां** सम्बन्धिनि **परमे सधस्थे** यत्र सह तिष्ठन्ति तत्र स्वर्गाख्ये स्थाने **एधि** भव ॥

[3]**नाक** इति ॥ **नाके** अन्तरिक्षे **उपपतन्तं** उपगच्छन्तं **सुपर्णं** शोभनपतनं **यत्** । द्वितीयैकवचनस्य लुक् । यं **त्वा** त्वां **हिरण्यपक्षं** हिरण्यवदुज्ज्वलपार्श्वं **वरुणस्य** सर्वेषां वरणीयस्य **योनौ** स्थाने लोके **यमस्य दूतम्** । लुप्तोपममेतत् । दूतमिव **भुरण्युम्** । गत्यर्थोऽयम् । दूतवच्छीघ्रगन्तारं **शकुनं** शक्तं यं त्वां एवंभूतं **हृदा वेनन्तः** कामयमानाः एते अमात्याः **अभ्यचक्षत** अभिचक्षते अभिमुखं वदन्ति । यमिति वचनात् क्रियापदाश्रयणे साकांक्षत्वाच्च स त्वमित्यध्याहारेण उत्तरम् । यद्वा—एधीत्यनेन एकवाक्यता नेया ॥

[4]**अतिद्रवेति** ॥ **सारमेयौ** सरमाया देवशुन्याः पुत्रौ

*ब्रा. ३-७-७.

**श्वानौ॑ चतुर॒क्षौ श॒बलौ॑ सा॒धुना॑ प॒था । अथा॑ पि॒तॄ-न्थ्सु॑वि॒दत्रा॒ꣳ॒ अपी॑हि य॒मेन॒ ये स॑ध॒मादं॒ मद॑न्ति ।**
**[5]यौ ते॒ श्वानौ॑ यमरक्षि॒तारौ॑ चतु॒रक्षौ॑ पथि॒रक्षी॑ नृ॒च-क्ष॑सा । ताभ्या॑ꣳ राज॒न्परि॑देह्येनꣳ स्व॒स्ति चा॑स्मा अनमी॒वं च॑ धेहि ॥ ६ ॥ [6]उ॒रु॒ण॒सावसु॒तृपा॑वुलु-म्ब॒लौ य॒मस्य॑ दू॒तौ च॑रतो॒ वशा॒ꣳ॒ अनु॑ । ताव॒स्म-**

**श्वानौ** चत्वारि अक्षीणि ययोस्तौ **चतुरक्षौ** **शबलौ** नानावर्णौ एवंविधौ श्वानौ **साधुना** कण्टकादिरहितेन **पथा** गच्छन् **अतिद्रव** अतीत्य द्रव अतिद्रुत्य च **अथ** अनन्तरं **पितॄन् सुविदत्रान्** शोभनज्ञानान् **अपीहि** अपिगच्छ **ये** पितरः **यमेन सधमादं मदन्ति** । ओदनपाकं पचतीतिवत् कर्मता ॥

[5]**यौ त** इति ॥ हे यम! **यौ ते** तव **रक्षितारौ** श्वानौ **चतुरक्षौ पथिरक्षी** पथां रक्षितारौ **नृचक्षसा** नृचक्षसौ नृणां सुकृतां दुष्कृतां च द्रष्टारौ । हे **राजन्**! यम! **ताभ्यां एनं** प्रेतं **परिदेहि** रक्षार्थं देहि । **अस्मै** प्रेताय **स्वस्ति** अविनाशं च धेहि देहि । अमीवा रोगः तदभावोऽनमीवं च धेहि ॥

[6]**उरुणसौ** पृथुनासिकौ **असुतृपौ** भक्ष्यमाणानां दुष्कृतां असुभिः तृप्तौ **उलुंबलौ** उरुबलौ । छान्दसौ वर्णविकारोपजनौ । **यमस्य दूतौ** प्रेषकरौ **वशान्** । वश कान्तौ । आत्मन इष्टान् **अनु** तान् प्रतिचरतः यावेवंभूतौ श्वानौ **तौ** **अस्मभ्यं** मृतस्य पुत्रादिभ्यः **दृशये** दर्शनाय **सूर्याय** । षष्ठ्यर्थे चतुर्थी । **सूर्यस्य** दर्शनार्थं **असुं** प्राणं अस्य पित्रादेर्मरणेन गतप्रायं

**भ्यं दृशये सूर्याय पुनर्दत्तावसुमद्येह भद्रम् । [7]सोम एकेभ्यः पवते घृतमेक उपासते । येभ्यो मधु प्रधावति ताꣳश्चिदेवापिगच्छतात् । [8]ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः । ये वा सहस्रदक्षिणास्ताꣳश्चिदेवापिगच्छतात् । [9]तपसा ये अनाधृष्यास्तपसा ये सुवर्गताः । तपो ये चक्रिरे महस्ताꣳश्चि-**

अद्य पुनः **दत्ताम्** । लोट्प्रथमपुरुषद्विवचनान्तमेतत् । संहितापाठे मकारस्य वकारश्छान्दसः । मकारमेव बह्वृचाः पठन्ति—'पुनर्दत्तामसुम्' इति । इह शरीरे भद्रं सर्वोपद्रवरहितं असुं दत्तां इति ॥

[7]**सोम** इति ॥ **एकेभ्यो** देवेभ्यः **सोमः पवते** रक्षति । **एके** देवाः **घृतमुपासते** भागत्वेन । **येभ्यश्च** देवेभ्यः **मधु प्रधावति** 'मधुना जुहोति । महत्यै वा एतद्देवतायै रूपम् । यन्मधु '* इत्यश्वमेधे दर्शनात् । **तान्** सोमपानाज्यपान्मधुपांश्च । चिदिति पादपूरणे । एव अवधारणे । तानेव तु त्वं **अपिगच्छतात्** अपिगच्छ तैः सस्थानो भव ॥

[8]**य** इति ॥ **ये** क्षत्रियाः **प्रधनेषु** प्रकृष्टधनेषु सङ्ग्रामेषु **युध्यन्ते** युध्वा च जयन्ति । **ये शूरासः** शूराः **तनुत्यजः** अभिमुखाहताः तनूस्त्यजन्ति, न पुनः पृष्ठतः कृत्य पलायन्ते । **ये वा** यज्वानः **सहस्रदक्षिणाः** बहुदक्षिणाः **तांश्चिदेवापिगच्छतात्** ॥

[9]**तपसेति** ॥ **तपसा ये अनाधृष्याः** अनभिभवनीयाः ब्रह्मचारिणः । **तपसा** अतिथिपूजनादिना ये सुवः स्वः गताः ये च **तपो महच्चक्रिरे** वानप्रस्थाः संन्यासिनश्च **तांश्चिदिति** गतम् ॥

*ब्रा. ३-८-१४.

देवार्पिगच्छतात् । [10]अश्मन्वती रेवतीस्सꣳरभध्व-
मुत्तिष्ठत प्रतरता सखायः । अत्रा जहाम ये असन्न-
शेवाश्शिवान् वयमभि वाजानुत्तरेम ॥ ७ ॥ [11]यद्वै
देवस्य सवितुः पवित्रꣳ सहस्रधारं विततमन्तरिक्षे।
येनापुनादिन्द्रमनार्तमार्त्यै तेनाहं माꣳ सर्वतनुं पु-

---

[10]जघनेन दहनदेशं उदीचीः तिस्रः कर्षूः खात्वाऽश्मभिः सिकताभिश्च प्रकीर्य अयुग्भिः उदकुम्भैः अपः प्रवर्त्य तासु ज्ञातयः सञ्जाहन्ते—**अश्मन्वतीरिति** ॥ अश्मभिः पाषाणैः सिकताभिश्च तद्वतीः **रेवतीः** उदकाख्येन धनेन तद्वतीः । 'रयेर्मतौ बहुलम्' इति सम्प्रसारणम् । एवंभूताः कर्षूः **संरभध्वम् उत्तिष्ठत प्रतरत** च कर्षूः हे **सखायः**! समानख्यातयो ज्ञातयः! **अत्र** कर्षूषु श्मशाने वा **जहाम** परित्यजामः । **ये** अस्माकं **अशेवाः** असुखाः । शेवमिति सुखनाम । **असन्** । अस्तेः पञ्चमो लकारः । स्युः यान्यस्माकमसुखानि तान्यत्रैव जहाम। **शिवांस्तु वाजान् अभि** । वाजानित्यन्ननाम । शिवान्यन्नानि प्रति **उत्तरेम** कर्षूभ्यः ॥

[11]जघनेन कर्षूः पलाशशाखे शमीशाखे वा निघ्नन्ति ते अन्तरेण सर्पन्ति—**यद्वा इति** ॥ **वै** प्रसिद्धौ । **देवस्य सवितुः** सम्बन्धि यत् **पवित्रं** सर्वशोधयितृ **सहस्रधारं** सहस्रसङ्ख्याकं **अन्तरिक्षे विततं** रश्मिजालम् । **येन** रश्मिजालेन **इन्द्रमनार्तं** कर्तुं **आर्त्यै** आर्त्या **अपुनात्** शोधितवान् कः? सवितैव **तेनाहं मां सर्वतनुं** समस्तावयवयुक्तं अन्तर्बहिश्च **पुनामि** शोधयामि ॥

नाभि । [12]या राष्ट्रात्पन्नादपयन्ति शाखां अभि मृता नृपतिमिच्छमानाः । धातुस्तास्सर्वाः पवनेन पूताः प्रजयाऽस्मान्रय्या वर्चसा सꣳसृजाथ । [13]उद्वयं तमसस्परि पश्यन्तो ज्योतिरुत्तरम् । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् । [14]धाता पुनातु सविता पुनातु । अग्नेस्तेजसा सूर्यस्य वर्चसा ॥ ८ ॥

धेह्युत्तरेमाष्टौ च ॥ ३ ॥

[12]जघन्यो ऽध्वर्युश्शाखे व्युदस्यति—या राष्ट्रादिति ॥ येषु जीवत्स्वन्यो म्रियते ते अभिमृताः ज्ञातयः नृपतिं स्वामिनं इच्छमानाः इच्छन्तः राष्ट्रात् राष्ट्रस्थानीयात् अस्मदमात्यसङ्घातात् पन्नात् स्वामिनाशेन विपन्नात् निस्सृत्य याश्शाखाः । व्यत्ययेन द्वयोर्बहुवचनम् । ये शाखे अपयन्ति अन्तरागच्छन्ति । ता यूयं सर्वाः शाखा धातुः आदित्यस्य पवनेन रश्मिजालेन पूताः अस्मान् प्रजया पुत्रादिकया रय्या धनेन वर्चसा दीप्त्या संसृजाथ । पञ्चमो लकारः । संसृष्टान् कुरुत । सर्वत्र जात्यपेक्षं [वा] बहुवचनम् ॥

[13]आदित्यमुपतिष्ठन्ते अमात्याः—उद्वयमिति ॥ तमस उपरि स्थितं उत्तरं उत्कृष्टं ज्योतिः । देवत्रा 'देवमनुष्य' इत्यादिना सप्तम्यन्तात् त्राप्रत्ययः । देवेषु मध्ये उत्कृष्टज्योतिरित्यन्वयः एवंभूतं सूर्यं देवमुत्पश्यन्तः ऊर्ध्वं पश्यन्तः वयं उत्तमं ज्योतिः ब्रह्माख्यं अगन्म गच्छेम ॥

[14]अपोऽवगाहन्ते—धातेति ॥ धाता आदित्यः पुनातु अस्मान् सविता सर्वस्यानुज्ञाता । केन पुनातु—अग्नेस्तेजसा सूर्यस्य वर्चसा च ॥

इत्यारण्यके चतुर्थे तृतीयोऽनुवाकः ॥

[1]यं ते अग्निममन्थाम वृषभायेव पक्तवे। इमं तः शमयामसि क्षीरेण चोदकेन च । [2]यं त्वमग्ने समदहस्त्वमु निर्वापया पुनः। क्याम्बूरत्र जायतां पाकदूर्वा व्यल्कशा। [3]शीतिके शीतिकावति ह्लादुके ह्लादु-

---

[1]अस्थिसञ्चयने क्षीरमिश्रोदकेन उदुम्बरशाखया अस्थीन्यवोक्षति—यं त इति पञ्चभिः ॥ हे प्रेत! यं अग्निं ते त्वदर्थं **अमन्थाम** आधानकाले मथितवन्तः वयं **वृषभायेव** । द्वितीयार्थे चतुर्थी । वृषभमिव **पक्तवे** । तुमर्थे तवेप्रत्ययः । यथा आतिथ्यादौ वृषभं पक्तुमग्निं मन्थति तद्वत् त्वदर्थमग्निं अमन्थाम तमिमं अग्निं **शमयामसि** शमयामः केन? **क्षीरेण चोदकेन च** मिश्रितेन ॥

[2]**यं त्वमिति** ॥ हे **अग्ने**! **त्वं यं समदहः** सम्यग्दग्धवानसि त्वमु तमु । छान्दसो वकारोपजनः । तथैव बह्वृचाः पठन्ति । तमेव **पुनर्निर्वापय** शान्तं कुरु । किञ्च—**अत्र** श्मशाने **क्याम्बूः** शैवालविशेषः कियत् अम्बु उत्पत्तिस्थानमस्येति सः । अत्र प्रदेशे **जायतां** एवंनामायं देशः सिक्तोऽस्तु यथा शैवालमपि जायते तथा **पाकदूर्वा** बालाऽपि दूर्वा, **व्यल्कशा** विविधाङ्कुरा **जायताम्** ॥

[3]**शीतिके** इति ॥ कुम्भोदकं वृष्टिरूपेण रूप्यते शीतिका वृष्टिः। शीताधिदेवतेत्यन्ये । हे **शीतिके**! **शीतिकावति**! शीतिका कम्पकरव्याधिरतिशैत्येन समुत्पद्यते । तद्वति! अत्यन्तशैत्यवति! । **ह्लादुके**! सर्वस्य ह्लादयित्रि! **ह्लादुकावति**! अत्यन्तह्लादनवति! त्वमिमं प्रदेशं **मण्डूक्या**

कावति। मण्डूक्या सुसङ्गमयेमꣳ स्वंग्निꣳ शमय। शं ते धन्वन्या आपश्शमु ते सन्त्वनूक्याः। शं ते समुद्रिया आपश्शमु ते सन्तु वर्ष्याः। [5]शं ते स्रवन्तीस्तनुवे शमु ते सन्तु कूप्याः। शं ते नीहारो वर्षतु शमु पृष्वाऽवशीयताम् ॥ १ ॥ [6]अवसृज

---

मण्डूकस्त्रिया सुसङ्गमय। इमं चाग्निं सुष्ठु शमय। इममग्निं शमयित्वा प्रदेशमिमं तथा शीतं कृत्वा यथा न कदाचिदपि स्थानमिदं मण्डूकी जहाति ॥

[4]शं त इति ॥ हे प्रेत! धन्वन्याः मरुभूमिर्धन्वा तत्र भवाः **आपः** धन्वन्याः तव **शं भवन्तु** । **अनूक्या** अनुदको देश अनूकः। दकारलोपः छान्दसः। तत्र भवाः अनूक्याः ता अप्यापः शं ते **सन्तु** भवन्तु। उकारः पादपूरणः। समुद्रे अन्तरिक्षे भवाः **समुद्रियाः वर्ष्याः** ॥

[5]**शं ते स्रवन्तीः** नद्यादिषु स्रवन्त्यः आपः ते **तनुवे** तन्वै शरीराय **शं** भवन्तु। कूपे भवाः **कूप्याः**। **नीहारो** हिमानी स च ते **शं वर्षतु** सुखवृष्टिं करोतु। **पृष्वा** अवश्यायोदकं साऽपि शं भूत्वा **अवशीयतां** अवपततु ॥

[6]अतएव श्मशानाग्नेः दक्षिणतोऽङ्गारान्निर्वृत्य तिस्रस्स्रुवाहुतीर्जुहोति—**अवसृजेति** तिसृभिः ॥ हे **अग्ने**! त्वमिमं प्रेतं **पितृभ्यः पुनरवसृज**। वीप्सालोपोऽत्र द्रष्टव्यः—पुनःपुनरवसृज देहि युष्माभिरयं समानो जात इति पुनरुक्त्वा समर्पयेत्यर्थः। **यः** प्रेतः

पुन॑रग्ने पि॒तृभ्यो॒ यस्त॒ आहु॑त॒श्चर॑ति स्व॒धाभिः॑ । आयु॒र्वसा॑न॒ उप॑यातु॒ शेष॒ꣳ सङ्ग॑च्छतां त॒नुवा॑ जा॒तवेदः । [7]सङ्ग॑च्छस्व पि॒तृभि॒स्सꣳ स्व॒धाभि॒स्सम्मि॑ष्टापू॒र्तेन॑ पर॒मे व्यो॑मन्न् । यत्र॒ भूम्यै॒ वृण॑से॒ तत्र॑ गच्छ॒ तत्र॑ त्वा दे॒वस्स॑वि॒ता द॑धातु । [8]यत्ते॑ कृ॒ष्णश्श॑कु॒न आ॑तु॒तोद॑ पिपी॒लस्स॒र्प उ॒त वा॒ श्वाप॑दः । अ॒ग्निष्टद्वि॒श्वाद॑नृ॒णं कृ॑णोतु॒ सोम॑श्च॒ यो

---

ते तुभ्यं आहुतः संस्कारार्थं त्वयि क्षिप्तस्सन् चरति । लुप्तसनर्थमेतत् । पितॄन् प्रति जिगमिषति । केन हेतुना—**स्वधाभिः** अन्नैः पितृभ्यः पुत्रादिभिः दातव्यैः हेतुभूतैः । **आयुः** जीवितं **वसानः** आच्छादयन् जीवेनाधिष्ठितस्सन् **शेषं** भुक्तावशिष्टं कर्मफलं **उपयातु** उपभुङ्क्ताम् । तदर्थं च **तनुवा** तन्वा सूक्ष्मशरीरेण **सङ्गच्छतां** हे **जातवेदः**! सङ्गच्छस्व ॥

[7]हे प्रेत! **पितृभिस्सङ्गच्छस्व** पितृगणैरन्तर्भव । ततः **स्वधाभिः** अपि सङ्गच्छस्व इष्टापूर्तफलेन च सङ्गच्छस्व ! क्व **परमे व्योमन्** विशिष्टस्थाने स्वर्गाख्ये । पश्चाच्च **भूम्यै** भूम्यास्सम्बन्धिनि **यत्र** प्रदेशे **वृणसे** जन्म प्रार्थयसे **तत्र** प्रदेशे **गच्छ तत्र त्वा देवः सविता दधातु** उत्पादयतु ॥

[8]**यत्त** इति ॥ **कृष्णः शकुनः यत्** तव अङ्गं **आतुतोद** आपीडयत् **पिपीलः** पिपीलिका **सर्पः उत वा श्वापदः** सृगालादिः **तत्** सर्वं अयं **अग्निः विश्वात्** विश्वमत्तीति विश्वात्

ब्राह्मणमाविवेश । [9]उत्तिष्ठातस्तनुव१ सम्भरस्व मेह गात्रमवहा मा शरीरम् । यत्र भूम्यै वृणसे तत्र गच्छ तत्र त्वा देवस्सविता दधातु । [10]इदं त एकं पर ऊत एकं तृतीयेन ज्योतिषा संविशस्व । संवेशनस्तनुवै चारुरेधि प्रियो देवानां परमे सधस्थे ।

---

कृत्स्नभक्षयिता **अनृणं** अवश्यप्रतिकर्तव्यत्वादृणशब्देन गदो रोगो लक्ष्यते । अगदम् । तथैव बह्वृचाः पठन्ति—'अग्निष्टद्विश्वादगदं' इति । **कृणोतु** करोतु । **सोमश्च** अनृणं करोतु **यस्सोमो ब्राह्मणम्** । जातावेकवचनम् । ब्राह्मणान् । तथैव बह्वृचाः । **आविवेश** आविशति आविश्य तिष्ठति 'अग्नीषोमीयो हि ब्राह्मणः' इति ॥

[9]अयुजः स्त्रियस्सञ्चिन्वन्ति, तत्र प्रथमाया मन्त्रः—**उत्तिष्ठेति** ॥ हे प्रेत ! **अतः** श्मशानात् **उत्तिष्ठ** । उत्थाय च **तनुवं** तन्वं इतस्ततो विप्रकीर्णं अस्थिशरीरं **संभरस्व** कुम्भे सम्भृतं कुरु इह श्मशाने **गात्रं** स्वल्पमपि **माऽवहाः** मा अवहासीः मा त्याक्षीः **मा शरीरं** मा च स्थूलं अङ्गम् । सम्भृत्य च **यत्र भूम्यै** इत्यादि गतम् ॥

[10]द्वितीयस्याः—**इदं त** इति ॥ **इदं** अङ्गमस्थिरूपं हे प्रेत ! तव इदं **एकं** अङ्गम् । तृतीयस्याः—**पर** इति । उकारोऽप्यर्थे । परमपि तवैकं अङ्गम् । चतुर्थ्याः—**तृतीयेनेति** । **ज्योतिषा** अनन्तरोक्तेन **संवेशनः** संविष्टः सङ्गतः **तनुवै** तन्वा परिपूर्णया **चारुः प्रियश्च** पश्यतां **एधि** भव । **देवानां परमे सधस्थे** ॥

[11]उत्तिष्ठ प्रेहि प्रद्रवौकः कृणुष्व परमे व्योमन्न् । यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहेमम् । [12]अश्मन्वती रेवती [13]यद्वै देवस्य सवितुः पवित्रं [14]या राष्ट्रात्पन्ना [15]दुद्वयं तमसस्परि [16]धाता पुनातु । [17]अस्मात्त्वमधिजातोऽस्ययं त्वदधिजायताम् । अग्नये वैश्वानराय सुवर्गाय लोकाय स्वाहा ॥ १० ॥

अवंशीयताꣳ सधस्थे पञ्च च ॥ ४ ॥

[11]अथ अध्वर्युः कुम्भे सम्भृतान्यस्थीन्यादाय उत्तिष्ठति—**उत्तिष्ठेति** ॥ अस्थिरूपं प्रत्युच्यते—हे प्रेत! इत **उत्तिष्ठ** उत्थाय च **प्रेहि** गच्छ गच्छंश्च **प्रद्रव** शीघ्रं गच्छ प्रद्रुत्य च **परमे व्योमन्** उत्कृष्टे स्थाने **ओकः** वासस्थानं **कृणुष्व** कुरु । ओकःकरणप्रकारः—यमी यमस्य स्वसा **यमेन यम्या** च **संविदानः** एकमतिभ्यामनुज्ञातः **त्वं उत्तमं नाकं** प्रसिद्धं **अधिरोह** आरोह । **संविदानोत्तमम्**मिति छान्दसो गुणः ॥

[12–16]अश्मन्वतीरित्यादयः पञ्च गताः* कर्ष्वादि समानम् ॥

[17]अथ अस्थीनि पिष्ट्वा आज्येन संसृज्य अग्निहोत्रहवण्या जुहोति सोमयाजिनः—**अस्मादिति** ॥ अधिः पञ्चम्यर्थानुवादी । हे अग्ने! **अस्मात्** यजमानात् **त्वमधिजातोसि** आधानकाले । **अयं** तु इदानीं त्वत्तः **अधिजायतां अग्नये** तुभ्यं **वैश्वानराय** विश्वेषां नराणामयमुपास्यः वैश्वानरः **सुवर्गाय लोकाय** तत्प्राप्तिहेतुभूताय तदभिमानिने वा दत्तमस्तु ॥

इत्यारण्यके चतुर्थे चतुर्थोऽनुवाकः.

*आ. ४-३. 10—11

[1]आयातु देवस्सुमनाभिरूतिभिर्यमो हवेह प्रयताभिरक्ता । आसीदताꣳ सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्यै । [2]यमे इव यतमाने यदैतं

---

[1]अस्ति यमयज्ञो नाम बलिः मासिमासि कर्तव्यः कार्तिक्यां विशेषेण । तत्र प्रस्थपरिमितैः तिलैः कल्पितं गुडमिश्रं हविः कल्पयित्वा तूष्णीमभिक्रम्य आदाय ‘ नमो ब्रह्मणे प्रजापतये देवेभ्य ऋषिभ्यः पितृभ्यो यमाय ’ इति ग्रामाद्बहिः प्राचीमुदीचीं वा दिशं उपनिष्क्रामति । निष्क्रमणमन्त्रो निगदसिद्धः । निष्क्रम्य नद्यां सिकतिले प्रदेशे यत्र करकूपः उत्सः खनितुं शक्यते तत्र दिक्स्रक्तयः कोणा यस्यास्तादृशीं वेदिं करोति स्थण्डिलमात्राम् । तत्र स्थले प्रतिदिशं मध्ये च पञ्चोत्तरवेद्या दिक्स्रक्तयः दक्षिणे करकूपं खनति उत्तरेणाग्निं प्रतिष्ठाप्य दर्भैः प्रागग्रैः अग्निं वेदिं च परिस्तीर्य पञ्चसु उत्तरवेदिषु दर्भमयान् विष्टरान् विधाय प्रस्तरहस्तो यममावाहयति—**आयातु देव** इति द्वाभ्यां जगतीत्रिष्टुब्भ्याम् ॥ **देवः** दानादिगुणयुक्तो **यमः आयातु** आगच्छतु **सुमनाभिः** शोभनं मनः यासु क्रियासु क्रियमाणासु ताभिः **ऊतिभिः** पालनैः **प्रयताभिः** परिशुद्धाभिः अवद्यरहिताभिः सह **अक्ता** भक्तान् प्रतिगन्ता इह अत्र **हवा** हवे यज्ञे, सप्तम्येकवचनस्याकारः । इदानीं क्रियमाणे आगत्य च **सुप्रयते बर्हिषि आसीदतां** आसीदतु । हशब्दः पादपूरणः । **मम ऊर्जाय** अन्नाय बलाय वा **जात्यै** जननाय प्रजात्यै **शत्रुहत्यै** शत्रुवधाय च ॥

[2]उत्तरे मन्त्रे यमस्य यम्याश्च सहवचनम्—**यमे इव**

**प्र वां भरन्मानुषा देवयन्तः । आसीदतꣳ स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः ।** [3]**यमाय सोमꣳ सुनुत यमाय जुहुता हविः । यमꣳ ह यज्ञो**

यमळोत्पन्ने इव दृश्यमाने **यतमाने** तत्रतत्र हविर्ग्रहणाय गन्तुं यत्नं कुर्वाणे **यदा ऐतम्** । लडर्थे लङ् । इतः गच्छथः । यदेति वचनात् तदेति गम्यते । तदा **देवयन्तः** देवान् यष्टुकामाः **मानुषाः वां** युवाभ्यां **प्रभरन्** । 'हृग्रहोर्भः' इति भः, लडर्थे लङ् । प्रहरन्ति हवींषि स्तुतिश्चोपहरन्ति । तौ युवां **स्वं लोकं** स्वस्थानं **विदाने** जानन्तौ **आसीदतम्** । आसाद्य च **स्वासस्थे** शोभनासनस्थे **भवतं नः** अस्माकं **इन्दवे** ऐश्वर्याय । एवं विनियुक्तार्थगोचरता-लोभेन क्लेशेन व्याख्यातम् । बह्वृचास्तु—हविर्धानशकटयोरभि-धानं मन्यन्ते ॥

[3]अथ प्रस्तरं मध्यमवेद्यां विष्टरे निधाय अभिमन्त्रयते—'इमं यम प्रस्तरम्'* इति तिसृभिः पवित्रपाणिः अर्घ्यपाद्यस्नाना-चमनीयगन्धपुष्पधूपदीपमाल्यैरित्येतैरभ्यर्च्य मध्यमेन अन्तमेन वा पलाशपर्णेन जुहोति—यमाय अन्तकाय धर्माय अधर्माय अन्ताय अनन्ताय वैवस्वताय मृत्यवे विष्णवे इति । व्याहृति-भिः व्यस्ताभिः समस्ताभिश्च हुत्वा अर्कपर्णानि औदुम्बरपर्णानि वा निधाय† मध्यमस्यामुत्तरवेद्यां यमाय हविर्निवेदयन्ते—यमा-येति ॥ इतःपरे अनुष्टुभः । **सोमं** सोमवन्मधुरं तिललक्षणं हविः **यमाय सुनुत** अभिषवसदृशेन हस्तव्यापारेण आक्षि-पत हे परिचारकाः! । यमायैव हविः **जुहुत** निवेदयत जुह्वतो मे प्रयोजकाः भवत । **यमं ह** यममेव अयं **यज्ञो गच्छति**

*सं. १-६-१२. †पिधाय.

गच्छत्यग्निर्दूतो अरंकृतः । [4]यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत । स नो देवेष्वायमद्दीर्घमायुः प्र जीवसे । [5]यमाय मधुमत्तमꣳ राज्ञे हव्यं जुहोतन । इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्यः ॥ ११ ॥ [6]योऽस्य कौष्ठ्य जगतः पार्थिवस्यैक इद्वशी । यमं भङ्ग्यश्रवो गाय यो राजाऽनपरोध्यः ।

---

तिलक्षणो गच्छतु अग्निदूतः अग्निर्वोढृकः तत्र पूर्वं कृतत्वात् अरंकृतः पर्याप्तं शीघ्रं वा कृतः ॥

[4]प्रतीच्यामुत्तरवेद्यां हविर्निवेदनम्—यमाय घृतवदिति ॥ अभिघारेण घृतेन घृतवत् हविर्जुहोत जुहुत प्रचातिष्ठत प्रतिष्ठितं च उद्युक्ता भवत । सः यमः नः अस्मभ्यं देवेषु मध्ये प्रायमत् प्रकर्षेण आभिमुख्येन च ददातु दीर्घमायुः जीवसे जीवनाय ॥

[5]प्राच्यां—यमाय मधुमत्तमं अतिशयेन मधु स्वादुयुक्तं हव्यं यमाय राज्ञे जुहोतन जुहुत । इदं नमः अयं नमस्कारः इदं हविर्वा । पूर्वजेभ्यः पूर्वेभ्यश्च चिरन्तनेभ्यः पथिकृद्भ्यः मार्गकृद्भ्यः ऋषिभ्यः अस्त्वित्यध्याहार्यम् ॥ दक्षिणस्यां—'यौ ते श्वानौ'* इति गतम् । उत्तरस्यां—यमदूताभ्यां 'उरुणसौ'* इति गतम् ॥

[6]योऽस्य कौष्ठ्येति तिसृभिः यमगाथाभिः त्रिःप्रसव्यमप्रदक्षिणं परिगायन्ति—श्रवः अन्तर्धनं कीर्तिर्वा भङ्ग्यं भजनीयं अतिप्रभूतत्वात् । यमस्य भङ्ग्यश्रवनामा कश्चित्, तस्यैव गोत्रनाम कौष्ठ्य इति । स यमं गायंश्चरति । तं प्रति इदमुच्यते—

---

*आ. ४-३[5—6]

[7]यमं गाय भङ्ग्यश्रवो यो राजाऽनपरोध्यः। येनाऽपो नद्यो धन्वानि येन द्यौः पृथिवी दृढा। [8]हिरण्यकक्ष्यान्त्सुधुरान् हिरण्याक्षानयश्शफान्। अश्वाननश्यतो दानं यमो राजाऽभितिष्ठति। [9]यमो दाधार पृथिवीं यमो विश्वमिदं जगत्। यमाय सर्वमित्तस्थे

---

हे कौष्ठ्य! **भङ्ग्यश्रवः**! **यो** यमः **अस्य पार्थिवस्य** पृथिव्यां भवस्य **जगतः** जङ्गमस्य प्राणिजातस्य **एक इत्** एक एव **वशी** स्वामी **यश्च** यमः **राजा** सन् **अनपरोध्यः** अपरोधोऽतिक्रमः अनतिक्रमणीयः तं **यमं गाय** ॥

[7]यममिति पूर्वार्धं गतम्। **येन** यमेन **आपः** समुद्रादिषु स्थिताः **नद्यः** गङ्गाद्याः **धन्वानि** मरुभूमयः अधिष्ठीयन्त इति शेषः। **येन** च **द्यौः पृथिवी** च **दृढा** भवति ॥

[8]**हिरण्यकक्ष्यान्** हिरण्योदरपार्श्वान् **सुधुरान्** शोभनयुगान् **हिरण्याक्षान्** हिरण्यवर्णाक्षान् **अयश्शफान्** अयोवत् दृढखुरान् एवंभूतान् **अश्वान् अनश्यतः** अविनाशितान् दीयत इति **दानं** बहवोऽश्वाः एकं दानं एवंभूतान् अश्वान् दानं **यमो राजा अभितिष्ठति**। यमस्य एकमेव दानं एवं विधमिति स्तुतिः ॥

[9]यमो दाधारेत्यनुवाकशेषेण यममभिवादयन्ते। **यमो दाधार** धारयति पृथिवीम्। **यम** एव च **विश्वमिदं जगत्** तद्वशवर्तित्वात् **सर्वमित्** सर्वमेव **यमाय तस्थे** तस्थे। रेफोपजनश्छान्दसः। तच्छेषत्वेन आत्मानं प्रकाश्य तिष्ठति **यत्प्राणत्**। अनितेश्शत्रन्तस्य रूपम्। चेष्टावत् **वायुरक्षितं** वायुभिः पञ्चभिः पालितं तैर्वा रक्षितम् ॥

स्थे यत्प्राणद्वायुरंक्षितम् । [10]यथा पञ्च यथा षड्यथा पञ्चंदशरूपंयः । यमं यो विद्यात्स ब्रूयाद्यथैक ऋषिं-र्विजानते ॥ १२ ॥ [11]त्रिकंद्रुकेभिः पतति षडुर्वीरेक-मिद्बृहत् । गायत्री त्रिष्टुप्छन्दाꣳसि सर्वा ता यम

[10]यथा पञ्च ऋषयः सनकादयः यमं विजानते विजानन्ति । यथा षडृषयः काण्डर्षयः विजानते । यथा पञ्चदशऋषयः कर्मकृतः अध्वर्य्वादयः । अवयुत्य वादोऽयम् । यथा वा एकर्षिः ब्रह्मा जगत्कर्ता विजानाति यथैते यमं विजानते एवंभूतोऽयमिति । यथेति वचनात् तथेति गम्यते । तथा यमं यो विद्यात् जानीयात् स एव तं ब्रूयात् स एव तं वक्तुं प्रभवति के वयं तस्य वचन इति स्तुतिः ॥

[11]त्रिकद्रुकेभिः अभिप्लवषडहस्यादितस्त्रीण्यहानि ज्योतिर्गौरायुरिति संज्ञकानि त्रिकद्रुकाः । यथोक्तं सूत्रकारेण—'ज्योतिर्गौरायुरिति त्रिकद्रुकाः' इति । 'अभिप्लवत्र्यहं पूर्वं त्रिकद्रुकाः' इत्याश्वलायनः । द्वितीयार्थे तृतीया । त्रिकद्रुकान् पतति प्राप्नोति देवतात्वेन । षडुर्वीः महतीः पतति अधिष्ठातृत्वेन प्राप्नोति । 'द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्चौषधयश्च इत्येताष्षडुर्वीः' इत्यारभ्य होतृजपे कथिताः । यदि वा—प्राच्याद्याः प्रधानदिशश्चतस्रः ऊर्ध्वा अधरा चेति षट् , 'देवीष्षडुर्वीः'* इति समावर्तने दिशामुपस्थाने दर्शनात् । एकमित् इत् चार्थे । एकं च बृहत् ब्रह्म जगदाख्यं पतति तत इतो गच्छति प्राणिनां शुभाशुभकर्मनिरीक्षणार्थम् । गायत्री त्रिष्टुप् इत्युपलक्षणं गायत्र्यादीनि छन्दांसि सर्वा

*मं. २-९.

आहिता । [12]अह॑रहर्नय॑मानो॒ गामश्व॒ं पुरु॑ष॒ं जग॑त् । वैव॑स्वतो॒ न तृ॑प्यति॒ पञ्चा॑भि॒र्मान॑वैर्य॒मः । [13]वैव॑स्वते॒ विवि॑च्यन्ते॒ यम॒े राज॑नि॒ ते ज॒नाः । ये च॒ेह स॒त्येने॒च्छन्ते॒ य उ॒ चानृ॑तवा॒दिनः । [14]ते रा॑जन्नि॒ह विवि॑च्यन्ते॒ऽथा य॑न्ति॒ त्वामुप॑ । दे॒वाꣳश्च॒ ये नम॒-

सर्वाणि ता तानि प्रसिद्धानि यमे राजनि आहिता आहितानि स्थापितानि स्तुतित्वेन स्तोतृभिः ॥

[12] अहरहः वैवस्वतः विवस्वतः पुत्रः यमः गामश्वं पुरुषं जगत् यच्चान्यत् जङ्गमं सर्वं अहरहर्नयमानोऽपि न तृप्याति तृप्तिं न गच्छति । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चमानवाः तानप्यहरहर्नयते तैरपि नीयमानैर्नैव तृप्तिं गच्छाति अनुपरमन् नयत इति ॥

[13]वैवस्वते यमे राजनि ते जना विविच्यन्ते पृथक्क्रियन्ते यथा शूर्पे धान्यादीनि । इह च लोके ये च स्वार्थान् सत्येन इच्छन्ते इच्छान्ति । ये च । उकारः पादपूरणः । अनृतवादिनो भूत्वा स्वार्थान् इच्छन्ते । उभयेऽपि विविच्यन्ते ॥

[14]ते इति ॥ हे राजन्! यम! इह जगति ते विविंच्यन्ते विविक्ताश्च अथ अनन्तरं त्वामुपायन्ति उपागच्छन्ति त्वत्सालोक्यं प्राप्नुवन्ति । के ते? ये च देवान् नमस्यन्ति ये च ब्राह्मणान् अपचियति परिचरन्ति पूजयन्ति । चायतेश्छान्दसः श्यनूभावः शपश्लुः ॥

[15]यस्मिन्निति ॥ कर्यारूपेण परिणतं जगत्कारणं वृक्षः 'ब्रह्म वनं ब्रह्म स वृक्ष आसीत्'* 'ऊर्ध्वमूलमवाक्शाखम् । वृक्षं यो वेद संप्रति'† 'समानं वृक्षं परिषस्वजाते'‡ इत्यादौ दर्शनात् । यस्मिन्

*ब्रा. २-८-९. †आ. १-११. ‡मुं. ३-१.

स्यन्ति ब्राह्मणाश्श्चापचित्यंति । [15]यस्मिन्वृक्षे सुपलाशे देवैस्संपिबंते यमः । अत्रां नो विश्पतिः पिता पुंराणा अनु[1]वेनति ॥ १३ ॥

पथिकृद्भ्यो विजानतेऽनुंवेनति ॥ ५ ॥

[1]वैश्वानरे हविरिदं जुंहोमि साहस्त्रमुत्सँ शत-धारमेतम् । तस्मिन्नेष पितरं पितामहं प्रपितामहं

---

**वृक्षे सुपलाशे** पृथिव्यादिकार्यरूपे शोभनैः तद्वति **यमो देवैः संपिबते** सह भोगान् भुङ्क्ते **अत्र** वृक्षे **नः** अस्मान् **विश्पतिः** विशां मनुष्यादीनां स्वामी सः **पिता** सर्वस्य पितृस्थानीयः **पुराणाः** पुरातनाश्च पुरुषाः । यद्वा—'सुपां सुलुक्' इत्यादिना शस आकारः । पुराणान् तथैव बह्वृचाः पठन्ति । चिरन्तनान् अनादिप्रवृत्तान् अस्मान् **अनुवेनति** वेनतिः कान्तिकर्मा अन्यत्र, इह तु अनुज्ञाने द्रष्टव्यः । पञ्चमलकारः । भोगाय अनुजानीयात् । हविरुद्धरति—'नाके सुपर्णम्'* इति । प्रवाहयति—'उरुं हि राजा'† इति ॥

इत्यारण्यके चतुर्थे पञ्चमोऽनुवाकः.

---

[1]अथ लोष्टचिन्मन्त्राः । तदर्थं विमते [विमिते] श्मशानायतने मध्ये पालाशीं त्रिविष्टकां मेधीं निघ्नन्ति, तस्याः मूले अस्थीनि, शतातृण्यां च कुम्भं निदधाति, तस्य बिलं चर्मणा कुशैः परिणद्धं भवति, तस्मिन् दधि वाजिनमिश्रमानयति—**वैश्वानर इति** ॥ त्रिष्टुभस्सर्वाः । **वैश्वानरे** पृथिव्यां 'इयं वा अग्निर्वैश्वानरः'‡ इति

---

[1]पुराणाऽनु. *आ. ४-२.[3] †सं. १-४-४५. ‡ब्रा. ३-९-१७.

बिभरत्पिन्वमाने । [2]द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमं च योनिमनु यश्च पूर्वः । तृतीयं योनिमनु संचरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः । [3]इमꣳ समुद्रꣳ शतधारमुत्सं व्यच्यमानं भुवनस्य मध्ये । घृतं दुहानाम-

---

पार्थिवे कुम्भे **इदं हविः** वाजिनमिश्रं दधि **जुहोमि साहस्रं** सहस्रसङ्ख्यापरिमितं **उत्सं** सिकतिले प्रदेशे कराभ्यामेव खात्वा यत्र पानीयं पीयते सः उत्सः तं **शतधारं** तत्र यथा बह्व्यो धाराः प्रभवन्ति तद्वत् बहुदुघं **एतं** एतत् उत्सम् । सामानाधिकरण्यात् पुंस्त्वम् । प्रसिद्धिमाह—यथाऽयं प्रसिद्ध उत्सो बहुमधुधुक् एवं इदं हविरिति **तस्मिन्** वैश्वानरे हुतः **एषः** उत्सः नः अस्माकं पित्रादीन् **बिभरत्** बिभर्तु । **पिन्वमाने** । सप्तमी प्रथमार्थे । पिन्वमानः क्षरन् । पिन्वमाने तस्मिन् वैश्वानर इति वा ॥

[2]विक्षरन्तमभिमन्त्रयते—द्रप्स इति द्वाभ्याम् ॥ **द्रप्सः** विप्रुषः **चस्कन्द** स्कन्दति । **पृथिवीमनु** पृथिवीं प्रति **द्यां** अन्तरिक्षं च प्रति **इमं च योनिं** स्थानं कुम्भं **अनु** प्रति **यश्च पूर्वो** योनिः दधिवाजिनयोरुत्पत्तिकाले तं च प्रति । अथ यदि **तृतीयो योनिः** अस्ति तमपि **अनुसंचरन्तं** तमेवंभूतं **द्रप्सं जुहोमि** । अनुस्सादृश्ये । यथा **सप्तहोत्राः** होत्रादयः आग्नीध्रान्तास्सोमे विप्रुड्ढोमं कुर्वन्ति तद्वत् ॥

[3]इममिति ॥ समुद्रसामानाधिकरण्यात् पुंस्त्वम् । **इमं** हविः समुद्रवत् अक्षीयमाणं **शतधारं उत्सं** तदात्मकं तद्वदुपजीव्यं भुवनवद्विस्तीर्णस्यास्य स्थानस्य **मध्ये व्यच्यमानम्** । अचतिर्गतिकर्मा,

दितिं जनायाग्ने मा हिꣳसीः परमे व्योमन्न्। [4]अपेत
वीत वि च सर्पतातो येऽत्र स्थ पुराणा ये च नूतनाः।
अहोभिरद्भिरक्तुभिर्व्यक्तं यमो ददात्ववसानमस्मै।
[5]सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे।

---

'व्युक्षत् क्रूरमुदचन्त्वापः'* इत्यादौ दर्शनात्। विगम्यमानं विषिच्यमानम्। उत्तरपादो लुप्तोपमः। यथा **जनाय** भुवनोदरवर्तिने **घृतं** उदकं वृष्टिलक्षणं **दुहाना** क्षरन्ती **अदितिः** देवमाता द्यौर्वा उपकरोति तादृशं इदं हविः हे **अग्ने**! **परमे व्योमान्** उत्कृष्टस्थाने गतम्। **मा मा हिंसीः** अविच्छिन्नं कुरु॥

[4]हरिण्या पलाशशाखया शमीशाखया वा श्मशानायतनं संमार्ष्टि—**अपेतेति**॥ अत्र प्रदेशे **ये पुराणास्स्थ** पिशाचाश्चिरकालवासिनः **ये च नूतनाः** अभिनवाः स्थ उभयेऽपि यूयं इतः प्रदेशात् **अपेत** अपगच्छत। **वीत** विशेषेण दूरतरं गच्छत **विसर्पत** विविधं नाना गच्छत। कस्मादपगच्छाम इत्युच्यते—**अहोभिः** दिवसैः **अद्भिश्च** **अक्तुभिः** शुद्धिहेतुभिः रात्रिभिः **व्यक्तं** शोधितम्। **अवसानं यमः अस्मै** प्रेताय **अस्य** दहनार्थं **ददातु** ददाति। तथैव बह्वृचाः। यम एव अवसानं अस्मै ददाति अतः यूयं अपगच्छत॥

[5]अथ तस्य आयतनस्य कर्षणार्थं सीरं युनक्ति—**सवितैतानीति**॥ **सविता** आदित्यः **एतानि** इमानि **शरीराणि पृथिव्या मातुः** सर्वस्य मातृस्थानीयायाः **उपस्थे** अङ्के **आदधे**

---

*मं. १-१.

तेभिर्युज्यन्तामघ्नियाः ॥ १४ ॥ [6]शुनं वाहाश्शुनं नाराश्शुनं कृषतु लाङ्गलम् । शुनं वरत्रा बध्यन्ताꣳ शुनमष्ट्रामुदिङ्गय शुनासीरा शुनमस्मासु धत्तम् । [7]शुनासीराविमां वाचं यद्दिवि चक्रथुः पयः । तेनेमामुपसिञ्चतम् । [8]सीते वन्दामहे त्वाऽर्वाची सुभगे भव । यथा नस्सुभगा संसि यथा नस्सुफला संसि ।

---

आधत्तां स्थापयतु । **तेभिः** तैः शरीरैः हेतुभिः तत्संस्कारार्थं **युज्यन्ताम्** । सीरे **अघ्नियाः** गावः बलीवर्दाः ॥

[6–7]उत्तराभ्यां त्रिष्टुब्गायत्रीभ्यां कर्षति—**शुनमिति** ॥ **वाहाः** बलीवर्दाः **शुनं** यथा तथा **कर्षन्त्विति**, वक्ष्यमाणं विपरिणम्यते । **नाराः** नराश्च **शुनं** कर्षन्तु । लाङ्गलं च शुनं कर्षतु । करणस्य कर्तृत्वविवक्षा । **वरत्राः** वध्राः **शुनं बध्यन्ताम्** । **अष्ट्राः** दंष्ट्राः इह तु तदाकारं फालं तां **उदिङ्गय** उत्क्षिप । कर्षकं प्रति एतत् शुनः वायुः सीरः आदित्यः हे **शुनासीरौ**! युवां **शुनं** सुखं **अस्मासु** युक्तं स्थापयतम् । अस्माकं **धत्तम्** । हे **शुनासीरौ**! **इमां वाचं** स्तनयित्नुघोषलक्षणां **यत्** यदा **दिवि** अन्तरिक्षे **चक्रथुः पयः तेन** तत्कालभवेन पयसा उदकेन **इमां** भूमिं **उपसिञ्चतम्** ॥

[8]सीतां प्रत्यवेक्षते—**सीते इति** ॥ सीता लाङ्गलपद्धतिः हे **सीते**! **त्वां** वयं **वन्दामहे** नमस्यामः स्तुमो वा । हे **सुभगे**! सौभाग्यस्य हेतुभूते! त्वं **अर्वाची** अस्मदभिमुखी **भव** । **यथा नः** अस्मभ्यं **सुभगा ससि** । अस्तेः पञ्चमो लकारः । सुभगा स्याः । **तथा अर्वाची भव इति** ॥

[9]सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे। तेभिरदिते शम्भव । [10]विमुच्यध्वमघ्निया देवयाना अतारिष्म तमसस्पारमस्य। ज्योतिरापाम सुवरगन्म ॥ १५ ॥ [11]प्र वाता वान्ति पतयन्ति विद्युत उदोषधीर्जिहते पिन्वते सुवः। इरा विश्वस्मै भुवनाय जायते यत्पर्जन्यः पृथिवीꣳ रेतसाऽवति। [12]यथा

---

[9]मध्ये कुष्टस्य अस्थिकुम्भं निदधाति—सवितेति गता ॥ तेभिः तैः आस्थिभिः अदिते! अखण्डिते! वा द्यावापृथिवी शंभव। सकारस्य शकारः । सम्भव सङ्गच्छस्व ॥

[10]दक्षिणेंसे बलीवर्दान् विमुञ्चति—विमुच्यध्वं इति ॥ हे अघ्नियाः! बलीवर्दाः! यूयं विमुक्ताः भवथ । देवाः यैः यान्ति ते देवयानाः अन्याः वयं अस्य तमसः पारं अतारिष्म प्राप्तास्म तत् ज्योतिरापाम प्राप्नुयाम सुवरगन्म स्वर्गं गच्छेम ॥

[11]उदपात्रेण उदुम्बरशाखयाऽवोक्षति—प्रवाता इति ॥ अवोक्षणबिन्दवः पर्जन्यरूपेण स्तूयन्ते—यत् यदा पर्जन्यः पृथिवीं रेतसा उदकेन अवति सन्तर्पयति तदा वाताः प्रवान्ति। विद्युतः पतयन्ति पतन्त इव द्योतन्ते । ओषधीः ओषधयः उज्जिहते उद्गच्छन्ति । सुवः अन्तरिक्षं पिन्वते क्षरन्ति। विश्वस्मै भुवनाय भूतजाताय अन्नं जायते ॥

[12]पाञ्यां सर्वौषधीस्संन्युप्य वपति—यथेति ॥ यथा यमाय निषादपञ्चमाश्चत्वारो वर्णाः । हार्म्यं हर्म्ये भवं व्रीह्याद्योषधिसङ्घातं

**यमाय हार्म्यमवपन्पञ्चमानवाः। एवं वपामि हार्म्यं यथाऽसाम जीवलोके भूरयः। [13]चितस्स्थ परिचित ऊर्ध्वचितश्श्रयध्वं पितरो देवता। प्रजापतिर्वस्सादयतु तया देवतया। [14]आ प्यायस्व [15]सं ते ॥ १६ ॥**

**अग्निया अगन्म सप्त च ॥ ६ ॥**

---

पूर्वं **अवपन्** उप्तवन्तः। **एवं** अहमपि **हार्म्यं वपामि। यथा असाम** भवामः। पुत्राद्यपेक्षं बहुवचनम्। यथा वयं अस्मिन् **लोके भूरयः** प्रभूता भवामः तथा वपामीति ॥

[13]अपरिमिताभिः शर्कराभिः परिश्रयति—**चित इति** ॥ हे शर्कराः! यूयं **चितस्स्थ** चयनाकारभूतास्स्थ। **परिचितस्स्थ** परिः सर्वतोभावे। अन्यत् समानम्। ऊर्ध्वं याभिः चीयते ता **ऊर्ध्वचितस्स्थ** एवंभूता यूयं **श्रयध्वम्**। इमं देशं युष्माकं च **पितरो देवता। प्रजापतिः त्वा सादयतु तया देवतया** प्रजापत्याख्यया देवतया सहसाकांक्षत्वात् 'अङ्गिरस्वद्ध्रुवा सीद' इति सर्वत्र अनुषजतीति पूर्वमुक्तत्वाच्चापेक्षते। बहुवचनेन चोहः—ध्रुवास्सीदतेति। अङ्गिरस्वत् यथा पूर्वं अङ्गिरस ऋषेः अस्मिन् कर्मणि ध्रुवा यूयं सादत तथेहापि सीदतेति ॥

[14]सिकताभिर्व्यूहति—**आ प्यायस्वेति** गायत्र्या ब्राह्मणस्य ॥ श्वैत्ययोगात् सिकतासमूहस्सोमेत्यामन्त्र्यते—हे सोम! **आप्यायस्व** वर्धस्व ते तुभ्यं विश्वतः सर्वतः वृष्ण्यं बलं **समेतु** आगच्छतु **वाजस्य संगथे** संगमे **भव** वाजेन च सङ्गतो भव ॥

[15]त्रिष्टुभा राजन्यस्य—**सं त इति** ॥ हे सोम! ते **पयांसि**

[1]उत्ते तभ्नोमि पृथिवीं त्वत्परीमं लोकं निदध-न्मो अहꣳरिषम् । एताꣳ स्थूणां पितरो धारयन्तु तेऽत्रा यमस्सादनात्ते मिनोतु । [2]उपसर्प मातरं भूमि-

संयन्तु समागच्छन्तु वाजाश्च । उकारः पादपूरणः । यूयं तु वृष्ण्यानि बलानि च शरीराणि वा सेनालक्षणानि संयन्तु । अभिमातयः शत्रवः तान् सहते अभिभवतीति अभिमातिषाट् तस्य ते एवमाप्यायमानो वर्धमानस्त्वं अमृताय अमरणाय दिवि स्वर्गे लोके श्रवांसि अन्नानि उत्तमानि उत्कृष्टानि धिष्व प्रेतमिममभिनवं कुरु ॥

इत्यारण्के चतुर्थे षष्ठोऽनुवाकः.

---

[1]प्रतिदिशं विधृतिलोष्टानन्वीक्षमाण उपदधाति—उत्ते तभ्नोमी-त्यादिभिः प्रतिमन्त्रं प्रथमा जगती । द्वितीया त्रिष्टुप् । तृती-या संस्तारपङ्क्तिः । चतुर्थी मध्येज्योतिर्जगती ॥ हे प्रेत! ते तव त्वदर्थं पृथिवीं उत्तभ्नोमि विधृतिलोष्टैर्दृढीकरोमि त्वत् । षष्ठ्यर्थे पञ्चमी । परि उपरि तवोपरि इमं लोकं निदधत् स्थापयन् अहं मा उ मैव रिषं रिष्टो हिंसितो मा भूवम् । एतां स्थूणां चितिलक्षणां ते त्वदर्थं पितरो धारयन्तु अत्र चितौ यमः ते सादनात् सदनं गृहं मिनोतु ॥

[2]उपसर्पेति ॥ सर्वस्य मातृस्थानीयां एतां भूमिं उपसर्प उपगच्छ हे प्रेत! उरुव्यचसं महावकाशां पृथिवीं क्रियाश-ब्दोऽयम् । प्रथितां विस्तीर्णां सुशेवां सुसुखां एषा च भूमिः

मेतामुरुव्यचसं पृथिवीꣳ सुशेवाम् । ऊर्णम्रदा युवतिर्दक्षिणावत्येषा त्वा पातु निर्ऋत्या उपस्थे । [3]उच्छ्वञ्चस्व पृथिवि मा विबाधिथाः सूपायनाऽस्मै भव सूपवञ्चना । माता पुत्रं यथा सिचाऽभ्येनं भूमि वृणु । [4]उच्छ्वञ्चमाना पृथिवी हि तिष्ठसि सहस्रं मित उप हि श्रयन्ताम् । ते गृहासो मधुश्चुतो विश्वा-

---

**ऊर्णम्रदा** ऊर्णावत् मृदुतरा स्त्रीवत् सुखकरी मिश्रयित्री वा धान्यादीनां **दक्षिणावती** दानस्य निमित्तभूता **त्वा** त्वां **निर्ऋत्या उपस्थे** विभक्तिव्यत्ययः । मृत्युदेवताया उपस्थात् पाश्वात् **पातु** ॥

[3]उदिति ॥ श्वसितेरन्तर्भावितण्यर्थस्यैतद्रूपम् । हे **पृथिवि**! इमं प्रेतं **उच्छ्वञ्चस्व** उच्छ्वासय **मा विबाधिथाः** मा विबाधिष्ठाः । छान्दससिसज्लोपः । **अस्मै** अस्य प्रेतस्य **सूपायना** सूपगमना **भव सूपवञ्चना** सुप्रतिष्ठाना सूपवञ्चना अथ चरणीया भव । किंच—हे भूमि! एनं **अभिवृणु** छादय । **यथा माता पुत्रं** बालं अङ्कगतं **सिचा** वस्त्रदशया अभिवृणोति तद्वत् ॥

[4]उच्छ्वञ्चमानेति ॥ हिशब्दो हेतौ । यस्मात् त्वां **पृथिवी** विस्तिर्णा **उच्छ्वञ्चमाना** एतं प्रेतं मातेव बहुमन्यमाना **तिष्ठसि** । यस्माच्च **सहस्रं मितः** । वचनव्यत्ययः । **मिताः** शर्कराः **उपश्रयन्तां** उपश्रयन्ते समन्तात् धारयन्ति । लडर्थे लोट् । यस्मादेवं तस्मात् **ते** प्रकृताः पृथिवीशर्कराः गृहसामानाधिकर-

हाऽस्मै शरणास्सन्त्वत्र । [5]एणीर्धाना हरिणीरर्जुनीस्सन्तु धेनवः । तिलवत्सा ऊर्जमस्मै दुहाना विश्वाहा सन्त्वनपस्फुरन्तीः ॥ १७ ॥ [6]एषा ते यमसादने स्वधा निधीयते गृहे । अक्षितिर्नाम ते असौ । [7]इदं पितृभ्यः प्रभरेम बर्हिर्देवेभ्यो जीव-

---

ण्यात् पुंस्त्वम् । **गृहासः** गृहभूताः मधुश्चुतः मधुरसस्य अन्नस्य मधुन एव वा क्षरितारः **विश्वाहा** सर्वदा **अस्मै** प्रेताय **शरणाः** आश्रयभूताः सन्तु भवन्तु **अत्र** लोके ॥

[5]तिलमिश्राभिर्धानाभिः त्रिरपसव्यं परिकिरति—**एणीरिति** अस्तारपङ्क्तिः ॥ एतशब्दात् 'वर्णादनुदात्तात्' इत्यादिना ङीप्नकारयोश्छान्दस णत्वम्, 'वा छन्दसि' इति जसि पूर्वसवर्णः । **एणीः** श्वेता **धाना** भ्रष्टा यवा **हरिणीः** हरितवर्णाः । **अर्जुनीः** शुद्धाः भर्जनविशेषे वर्णभेदाः एवंभूता धानाः अस्मै प्रेताय **धेनवः सन्तु** तद्वत् कामदुघास्सन्तु । **तिलवत्साः** मिश्रिताः तिलाः तासां वत्सत्वेन रूप्यन्ते तिलैर्वा वत्सः तद्वत्यः । **ऊर्जं** अन्नं बलं वा **दुहानाः** क्षरन्त्यः **विश्वाहा** विश्वेष्वहस्सु सर्वदा **अनपस्फुरन्तीः** अचलन्त्यः सन्तु ॥

[6]अन्तश्शरा[श्शराव]स्थजलं दक्षिणत उपदधाति—**एषेति** ॥ हे प्रेत! **यमसादने** यमराष्ट्रे यत् ते गृहं तत्र एषा **स्वधा निधीयते** स्थाप्यते । सा ते **अक्षितिः नाम** प्रसिद्धा अक्षीणा हि **असाविति** प्रेतस्य नाम सम्बुद्ध्या निर्देशः यज्ञशर्मन् ॥

[7]समूलं बर्हिर्दक्षिणा स्तृणाति—**इदमिति** त्रिष्टुभा ॥ **इदं बर्हिः**

न्त उत्तरं भरेम। तत्त्वमारोहासो मेध्यो भवं यमेन त्वं यम्यां संविदानः। [8]मा त्वां वृक्षौ संबाधिष्टां मा माता पृथिवि त्वम्। पितॄन् ह्यत्र गच्छास्येधासं यमराज्ये। [9]मा त्वां वृक्षौ संबाधेथां मा माता पृथिवी मही। वैवस्वतꣳ हि गच्छासि यमराज्ये विराजासि।

---

**प्रभरेम** प्रहरेम। 'हृग्रहोर्भः' इति भः। प्रहरेम स्थापयामः। **देवेभ्यः** देवत्वमापन्नेभ्यः **जीवन्तः** स्वस्थास्सन्तः वयं **उत्तरं** उत्कृष्टतरं यथा तथा **भरेम**। उत्तरमिति विशेषविवक्षया पुनर्वचनम्। तत् बर्हिः **त्वमारोह असौ** यज्ञशर्मन्। औकारपाठस्तु छान्दसः। **मेध्यः** मेघस्थितः वायुः **भवन्** अनुस्वारस्तु छान्दसः। प्रेतत्वादन्तरिक्षे चरन् **यमेन यम्या च संविदानः** ऐकमत्यं गतः तत्र गतः तयोरनुज्ञां लभमानः यमी यमस्य स्वसा भार्या वा॥

[8]पालाशान् परिधीन् चतुरः प्रतिदिशं प्रसव्यं परिदधाति—**मा त्वेति** द्वाभ्याम्॥ पूर्वया पूर्वापरौ। उत्तरया दक्षिणोत्तरौ। हे प्रेत! **त्वां वृक्षौ** तद्विकारौ परिधी **मा बाधिष्टां** मा बाधिषाताम्। हे **पृथिवि! त्वं** च सर्व**माता** सती इमं प्रेतं मा बाधिष्ठाः। हे प्रेत! त्वं हि यत्र स्थाने स्थितान् **पितॄन् गच्छासि** गच्छेः **तत्र** यमराज्ये त्वं एधासि अहं च अत्रैव लोके **एधासं** एधिषीय॥

[9]उत्तमे मन्त्रे पूर्वं अर्धं गतम्। **मही** महती **वैवस्वतं गच्छासि** गच्छेः गत्वा च **यमराज्ये** स्थाने **विराजासि** विराज॥

[10]नळं प्लवमारोहैतं नळेन पथोऽन्विहि । स त्वं नळप्लवो भूत्वा संतर प्रतरोत्तर ॥ १८ ॥ [11]सवितैतानि शरीराणि पृथिव्यै मातुरुपस्थ आदधे । तेभ्यः पृथिवि शंभव । [12]षड्ढोता सूर्यं ते चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा । अपो

[10]मध्ये इषीका निदधाति—**नळमित्यनुष्टुभा** ॥ यो जले प्लवते न मज्जति स प्लवः नळैः कल्पितं एतं **प्लवं आरोह** तेन **नळेन** प्लवेन सर्वान् मार्गान् **अन्विहि** अनुगच्छ । **स त्वं नळैः** कल्पितप्लवो **भूत्वा** यत्तरितव्यं नद्यादि मार्गे **संतर प्रतर** प्रकर्षेण तर **उत्तर** उत्तरपारं प्राप्नुहि ॥

[11]अस्थीनि तेषु दर्भेषु निवपति—सवितेत्यादि ॥ गता* । **तेभ्यः** शरीरेभ्यः हे **पृथिवि** ! त्वं **शम्भव** ॥

[12]यथाङ्गमङ्गानि सन्निधायोपतिष्ठते—तत्र मन्त्रः—षड्ढोता सूर्यं ते चक्षुरिति ॥ '**सूर्यं ते चक्षुः । वातं प्राणः**'† इति षड्ढोता पूर्वमेव व्याख्यातः । इयानेव भेदः ते तव स्वभूतं चक्षुरिन्द्रियं सूर्यं साकांक्षत्वात् समानार्थायामृचि दर्शनाच्च गच्छत्विति गम्यते । एवं वातं प्राण इत्यादावपि द्रष्टव्यम् । द्यां पृष्ठं ; स्पर्शनात् पृष्ठम् । त्वयि पृष्ठलग्नं सूक्ष्मशरीरं द्युलोकं गच्छतु । आप्नोतेः **आत्मा** व्यापी श्रोत्रेन्द्रियं अन्तरिक्षं स्वप्रकृतिं गच्छतु । अङ्गैः अङ्गानि । विभक्तिव्यत्ययः । यज्ञं गच्छतु अङ्गैर्वा त्वं यज्ञं गच्छ यज्ञाङ्गं शरीरं आप्नुहि शरीरे भस्मीभूते **पृथिवीं गच्छ** तया सह एकीभव । एतावानेव मन्त्रः । 'वाचस्पते'† इत्यादिकस्तु

*आ. ४-६. 5 †आ. ३-४.

वां गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः । [13]परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाꣳ रीरिषो मोत वीरान् । [14]शं वातश्शꣳ हि ते घृणिश्शमु ते सन्त्वोषधीः । कल्पन्तां मे दिशश्श-

---

मन्त्रशेषो ग्रहाभिधानाख्यो होमेष्वेवोक्तः पुरस्तात् । 'सूर्यं ते चक्षुः' इति गतम् *॥

[13]भुक्तभोगेन वाससा कुम्भं निमृज्य शिरसा उपरि दक्षिणां व्युदस्यति—परमिति त्रिष्टुभा ॥ वक्ष्यमाणं वासो मृत्युत्वेन रूप्यते । हे मृत्यो! देवाः येन पथा यान्ति स देव यानः पन्थाः तं विना परं अन्यं पन्थां पन्थानं अनुपरेहि अनुपरागच्छ तद्गामिनं जनं अनुवर्तस्व । अयं पुनरस्मत्पिता देवयानं पन्थानमभिप्रस्थितः तं माऽनुपरागच्छ । किंच—चक्षुष्मांश्च त्वं भवसि । ब्रुवतो मे श्रद्धां द्रष्टुं शृण्वंश्च भवसि । न अनादरेण पराङ्मुखः । अतः चक्षुष्मते च शृण्वते च ब्रवीमि । किं ब्रवीषि? नः अस्माकं प्रजां दुहितृदौहित्रादिं मा रीरिषः मा हिंसीः । मा उत मोत मा च वीरान् पुत्रपौत्रादिकान् ॥

[14]उदपात्रेणौदुम्बरशाखयाऽवोक्षति—शं वात इति ॥ वातः ते शं अस्तु । घृणिः आदित्यः सोऽपि ते शं अस्तु । ओषधीः ओषधयश्च ते शं सन्तु । मे मह्यं दिशः शग्माः सुखा भवन्तु ॥

---

*आ. ४-१[18]

ग्माः । [15]पृथिव्यास्त्वा लोके सादयाम्यमुष्य श-
र्मासि पितरो देवता । प्रजापतिस्त्वा सादयतु त-
या देवतया । [16]अन्तरिक्षस्य त्वा दिवस्त्वा दिशां
त्वा नाकस्य त्वा पृष्ठे ब्रध्नस्य त्वा विष्टपे सादया-
म्यमुष्य शर्मासि पितरो देवता । प्रजापतिस्त्वा
सादयतु तया देवतया ॥ १९ ॥

अनपस्फुरन्तीरुत्तर देवतया द्वे च ॥ ७ ॥

[1]अपूपवान्घृतवाꣳश्चरुरेह सीदतूत्तभ्नुवन्पृथिवीं

---

[15–16]इष्टकाः प्रतिदिशमनन्वीक्षमाण उपदधाति—मध्ये पञ्च-मीम् । तस्मात् दक्षिणे षष्ठीम् । **पृथिव्यास्त्वा** यस्य लोकस्य पृथिवी अधिष्ठात्री स पृथिव्या लोकः तत्र **त्वा** त्वां **सादयामि** हे इष्टके! **अमुष्य** नामनिर्देशप्षष्ठ्या यज्ञशर्मणः **शर्म** शरणं **असि पितरश्च देवता!** **त्वा** त्वां **प्रजापतिः सादयतु** । सा च त्वं **तया देवतया** अङ्गिरस इव ध्रुवा सीद निश्चला सीद । एतेन उत्तरा व्याख्याताः । तत्र च आदितस्त्रिषु लोकेषु सादयामीत्यादेरनु-षङ्गः । चतुर्थे, पञ्चमे च सादयामीत्यादेः अनुषङ्गः । **नाकस्य** सुवर्गस्य लोकस्य **पृष्ठे** प्रधाने **सादयामि** **ब्रध्नस्य** आदित्यस्य **विष्टपे** विगतताप स्थाने सादयामीत्यादिः ॥

इत्यारण्यके चतुर्थे सप्तमोऽनुवाकः.

---

[1]तत्र पञ्च चरून् उपदधाति—प्रथमा जगती । द्वितीया द्विपदा गायत्री । शिष्टं यजुः । तेषामभिघारणानि घृतं शृतं

द्यामुतोपरि । योनिकृतः पथिकृतस्सपर्यत ये दे-
वानां घृतभागा इह स्थ । [2]एषा ते यमसादने स्व-
धा निधीयते गृहेऽसौ । दशाक्षरा ताꣳ रक्षस्व
तां गोपायस्व तां ते परि ददामि तस्यां त्वा
मा दभन्पितरो देवता । प्रजापतिस्त्वा साद-
यतु तया देवतया । [3]अपूपवाञ्छृतवान्क्षीरवान्द-
धिवान्मधुमाꣳश्चरुरेह सीदतूत्तभ्नुवन्पृथिवीं द्यामु-
तोपरि । योनिकृतः पथिकृतस्सपर्यत ये देवानाꣳ
शृतभागाः क्षीरभागा दधिभागा मधुभागा इह
स्थ । [4]एषा ते यमसादने स्वधा निधीयते

---

क्षीरं दधि मध्विति अपूपाभिधानाः भवन्ति । **अपूपवान्** अपू-
पेन अभिधानेन तद्वान् घृतेन अभिघारणेन तद्वान् एवंभूतः
**चरुः** इह स्थाने **आसीदतु** **उत्तभ्नुवन्** दृढीकुर्वन् **पृथिवीं**
**द्याम**प्युपरि उत्तभ्नुवन् । **ये देवानां** मध्ये इह कर्मणि **घृत-
भागाः स्थ** ते यूयं **योनिकृतः** प्रेतानां योग्यस्य स्थानस्य कर्ता-
रः **पथिकृतः** तेष्वपि यूयमेव च मार्गस्य कर्तारः इमं चरुं
**सपर्यत** बहुमानेन स्वीकुरुत ॥

[2–4]अथ प्रेतं एषा त इति असौ **यज्ञशर्मन्**! **दशाक्षरे**-
त्यादि स्वधाया विशेषणम् । दशाक्षरा विराट् छन्दः । तद्वत्
कामदुघा एषा स्वधा तां स्वधां **रक्षस्व** रक्षितां **गोपायस्व**
गोपाय गुप्तं कुरु । यथा अन्ये न जानन्ति **तां ते** तुभ्यं

गृहेऽसौ । शताक्षरा सहस्राक्षराऽयुताक्षराऽच्युता-क्षरा ताꣳ रक्षस्व तां गोपायस्व तां ते परिददामि तस्यां त्वा मा दभन्पितरो देवता । प्रजापतिस्त्वा सादयतु तया देवतया ॥ २० ॥

अपूपवानसौ दश ॥ ८ ॥

[1]एतास्ते स्वधा अमृताः करोमि यास्ते धानाः परिकिराम्यत्र । तास्ते यमः पितृभिस्संविदानोऽत्र

---

परिददामि रक्षार्थं ददामि । तस्यां विद्यमानायां त्वा त्वां मा दभन् मा हिंसिषुः पितरो देवता । प्रजापतिस्त्वा सादयतु इत्यादि गतम् । एतेन उत्तराः व्याख्याताः । ते सानुषङ्गाः प्र-दृश्यन्ते—अपूपवाञ्छृतवांश्चरुः ये देवानां शृतभागाः शताक्षरा तां रक्षस्वेत्यादि गतम् । अपूपवान् क्षीरवांश्चरुः ये देवानां क्षीरभागाः सहस्राक्षरा तां रक्षस्वेत्यादि गतम् । अपक्वं पयः क्षीरम् । पक्वं शृतम् । शताक्षरादयश्छन्दोविशेषाः । अच्युताक्षरा अविपरी-ताक्षरा अक्षीणाक्षरा अपरिमिताक्षरेत्यर्थः ॥

इत्यारण्यके चतुर्थे अष्टमोऽनुवाकः.

---

[1]अतिलाभिः धानाभिः त्रिः प्रसव्यं परिकिरति—एतास्त इति ॥ अत्र स्थाने याः धानाः ते त्वदर्थं परिकिरामि ता धानाः ते तुभ्यं अमृताः अविनाशिनीः करोमि ता धानाः ते यमः कामदुघाः

धेनूः कामदुघाः करोतु । [2]त्वामर्जुनौषधीनां पयो ब्रह्माण इद्विदुः । तासां त्वा मध्यादाददे चरुभ्यो अपिधातवे । [3]दूर्वाणाꣳ स्तम्बमाहरैतां प्रियतमां मम । इमां दिशं मनुष्याणां भूयिष्ठाऽनु विरोहतु । [4]काशानाꣳ स्तम्बमाहर रक्षसामपहत्यै । य एतस्यै दिशः पराभवन्नघायवो यथा ते नाभ-

धेनूः करोतु पितृभिः संविदानः ऐकमत्यं कुर्वन् अत्र कर्मणि ॥

[2]ओषधिस्तम्बान् प्रतिदिशमनन्वीक्षमाणः प्रसव्यमुपदधाति, तेषां मन्त्रलिङ्गेन द्रव्यनियमः—त्वामर्जुनेति ॥ इतःपरा अनुष्टुभः । 'सर्वं च तृणमर्जुनम्' इति नैघण्टुकाः । इह तु दूर्वादिसाहचर्यात् तादृश एवौषधिविशेषः श्वेतदूर्वाख्यः । हे अर्जुन! स्तम्ब! त्वां ओषधीनां व्रीह्यादीनां मध्ये पयः क्षीरं विदुः तद्रसत्वात् । ब्रह्माणः ब्राह्मणाः । इच्छब्दोऽवधारणे । साक्षात्पय एव विदुः । अतः तासां ओषधीनां मध्यात् त्वामाददे चरुभ्यः चरूणां अपिधातवे उपहितांश्चरूनपिधातुम् ॥

[3]दूर्वाणामिति ॥ अन्तरात्मनः शरीरात्मानं प्रति प्रैषः । हे मदीयशरीरात्मन्! एतां मम प्रियतमाम् । लिङ्गव्यत्ययः । पितृकृत्ये उपयुज्यमानत्वात् मम प्रियतमं दूर्वाणां स्तम्बं आहर स चाहृतो मयोपहृतस्सन् मनुष्याणामुपजीवनाय भूयिष्ठा । लिङ्गव्यत्ययः । भूयिष्ठो बहुशाखो भूत्वा । इमां क्रमप्राप्तामुत्तरां दिशं अनुविरोहतु । ओषधिरूपापेक्षया सर्वत्र स्त्रीलिङ्गनिर्देशः ॥

[4]काशानामिति ॥ पूर्ववत् प्रैषः । काशानां स्तम्बमाहर । किमर्थं? रक्षसां अपहत्यै अपघाताय । ये राक्षसाः अघाय-

**वान्पुनः । [5]दर्भाणाꣳ स्तम्बमाहर पितॄणामोषधीं प्रियाम् । अन्वस्यै मूलं जीवादनु काण्डमथो फलम् ॥ २१ ॥ [6]लोकं पृण[7]ता अस्य सूददोहसः ।**

वः परेषामनर्थमिच्छन्तः **एतस्यै** एतस्या दिशः प्रतीच्याः **पराभवन्** पराभूता भवन्ति । उपधानक्रममाहात्म्यात् **ते यथा पुनः नाभवान्** । पञ्चमो लकारः ॥

[5]अयं प्रेतः **काण्डं** शाखाया अधस्तात्प्रदेशं **अनुजीवात् अथो** अपिच **फलमप्यनुजीवात्** ॥

[6]**लोकं** पृणा उपदधाति—**लोकं पृणेति** ॥ पृणतिः पूरणकर्मा । लोकोऽवकाशः स च छिद्रस्य पृथगभिधानात् तद्व्यतिरिक्तः । अस्यां चितौ दृश्यमानं लोकं **पृण** पूरय । द्वयोरिष्टकयोरन्तरं **छिद्रं** तदपि **पृण** पूरय । **अथो** अपि च हे इष्टके! त्वं **शिवा** भूत्वा **सीद** । **इन्द्राग्नी बृहस्पतिश्चे**त्येते च देवाः **अस्मिन् योनौ** त्वां **असीषदन्** । लोडर्थे लङ् । सादयन्तु ॥

[7]पुरीषेण अनुविकिरन्ति—**ता अस्येति** ॥ 'इमा मे अग्न इष्टका धेनवस्सन्त्वित्याह धेनूरेवैनाः कुरुते ता एनं कामदुघा अमुत्राअमुष्मिन् लोक उपतिष्ठन्ते'* इति ब्राह्मणम् । **ता** इष्टका **अस्य** यजमानस्य **सूददोहसः** क्षीरलक्षणं अस्य दोग्ध्र्यः । **पृश्नयः** स्वल्पशरीरा गावः 'तेषां पृश्निर्घर्मधुगासीत्'† इति दर्शनात् । ता इष्टका एवंभूताः पृश्नयो भूत्वा अस्य **सोमं श्रीणन्ति** श्रयणीयक्षीरादिना संस्कुर्वन्ति क्व? **जन्मन् देवानां विशः** विङ्वं देवानामन्नस्य जन्मभूमौ यज्ञे **दिवः** स्वर्गस्य **आरोचने** प्रकाशके **त्रिषु** सवनेषु ॥

*सं. ५-४-२. †ब्रा. २-१-१.

[8]शं वात॒श्शꣳ हि ते॒ घृणि॒श्शमु॑ ते॒ स॒न्त्वोष॑धीः। कल्प॑न्तां ते॒ दिश॒स्सर्वाः॑ । [9]इ॒दमे॒व मेतोऽप॑रा॒मार्ति॑मारा॒म् कांच॒न । तथा॒ तद॒श्विभ्यां॑ कृतं॒ मि॒त्रेण॒ वरु॑णेन च । [10]व॒रणो॒ वा॑रयादि॒दं दे॒वो वन॒स्पतिः॑ । आर्त्यै॒ निर्ऋ॑त्यै॒ द्वेषाच्च॒ वन॒स्पतिः॑ । [11]विधृ॑तिरसि॒ विधा॑रया॒स्मद॒घा द्वेषाꣳसि॒ शमि॒ शमया॒स्मद॒घा

[8]उदपात्रेण उदुम्बरशाखयाऽवोक्षति—शं वात इति ॥ गताः* । ते तुभ्यं सर्वा दिशः कल्पन्ताम् ॥

[9]चितमग्निमुपतिष्ठते—इदमेवेति ॥ इदमेव अस्माकं यदिदानीमनुभूयते पित्रादिमरणकृतं इतो व्यसनात् अपरां कांचन आर्तिं माऽऽराम । आर्तेः लुङि रूपम् । मा प्राप्नुम । तथैव च तदश्विभ्यां मित्रेण वरुणेन कृतं अस्तु यथा पुनरन्यामार्तिं माऽऽराम इति ॥

[10]वारणशाखां पुरस्तात् निदधाति—वरण इव वरणो वृक्षविशेषः । स इदं स्थानं वारयात् वारयतु रक्षतु । देवो दीप्तिमान् वनस्पतिः वनस्य पाता । कुतो रक्षतु? आर्त्यै आर्त्याः दुःखात् निरृत्यै निरृत्याः कृच्छ्रापत्तेः । द्वेषाच्च शत्रोः वनस्पतिः । जातिशब्दोऽयम् । 'फली वनस्पतिर्ज्ञेयः' इति; पूर्वस्तु यौगिक इत्यपौनरुक्त्यम् ॥

[11]लोष्टमुत्तरतो निदधाति—विधृतिरिति ॥ हे लोष्ट! त्वं विधृतिरसि विधारणस्य कर्ताऽसि स त्वं अस्मत् अस्मत्तः ॥ शमीशाखां पश्चात्—शमि शमय ॥ यवं दक्षिणतः—यवेति गतम् ॥

*आ. ४-७[14]

द्वेषांꣳसि युव युवयास्मद्द्या द्वेषांꣳसि । [12]पृथिवीं गच्छान्तरिक्षं गच्छ दिवं गच्छ दिशो गच्छ सुवर्गच्छ सुवर्गच्छ दिशो गच्छ दिवं गच्छान्तरिक्षं गच्छ पृथिवीं गच्छापो वा गच्छ यदि तत्र ते हितमोषधीषु प्रतितिष्ठा शरीरैः । [13]अश्मन्वती रेवती [14]यद्वै देवस्य सवितुः पवित्रं [15]या राष्ट्रात्पन्ना [16]दुद्वयं तमस्स्परि [17]धाता पुनातु ॥ २२ ॥

अथो फलं धाता पुनातु ॥ १ ॥

[1]आरोहतायुर्जरसं गृणाना अनुपूर्वं यतमाना यतिष्ट । इह त्वष्टा सुजनिमा सुरत्नो दीर्घमायुः

---

[12]अथैनं चितमग्निमुपतिष्ठते—पृथिवीं गच्छेति ॥ निगदसिद्धम् ॥

[13–17]जवनेन चितिं कर्षादि समानमाम्नानात् । अश्मन्वतीरित्यादयः पञ्च गताः* ॥

इत्यारण्यके चतुर्थे नवमोऽनुवाकः.

---

[1]नवम्यां व्युष्टायां यज्ञोपवीती अन्तरा ग्रामं श्मशानं च अग्निमुपसमाधाय सम्परिस्तीर्य अपरेणाग्निं रोहितं चर्मानडुहं प्राचीनग्रीवं उत्तरलोमास्तीर्य तद्वेतसमालिनो ज्ञातीनारोहयति—आरोहतेति ॥ हे ज्ञातयः! इदं चर्म आरोहत आयुः जीवितं जरसं जरां गृणा-

---

*आ. ४-३.

करतु जीवसे वः । [2]यथाऽहान्यनुपूर्वं भवन्ति यथ-र्तव ऋतुभिर्यन्ति क्लृप्ताः । यथा न पूर्वमपरो ज-हात्येवा धातरायूंषि कल्पयैषाम् । [3]न हि ते

---

नाः प्रार्थयमानाः यावज्जरमायुः प्रार्थयमानाः आरोहत अनुपूर्वं ज्येष्ठक्रमेण वर्णक्रमेण च अन्येषु । प्रेतकर्मसु कनिष्ठक्रमेण प्रवृत्तिः । अत्र तु शान्तिकर्मणि सर्व एव प्रयत्नो अनुपूर्वं कर्तव्यः । यतिष्ठ द्वे एते पदे । यतिशब्दो यावन्त इत्यस्य अर्थे । स्त इति अस्तेर्लोटि मध्यमपुरुषबहुवचनम् । लडर्थे लोट् । यावन्त स्स्थ ते सर्वे आरोहतेति । बह्वृचास्तु—लडन्तमेवाधीयते—'यातिष्ठ' इति । पदकाले च द्वैपद्यम् । इह कर्मणि त्वष्टा हविषां पापानां वा तनूकर्ताऽयमग्निः सुजनिमा शोभनजन्मा सुरत्नः भक्तेभ्यो देयैः शोभनैः रत्नैरुपेतः वः युष्मभ्यं दीर्घमायुः क-रतु ददातु जीवसे जीवनाय ॥

[2]अथैनान् अनुपूर्वान् कल्पयति—यथाऽहानीति ॥ अहानि यथा अनुपूर्वं क्रमेण भवन्ति—आदित्यवारस्सोमवार इति । यथा वा वसन्तादय ऋतवः ऋतुभिः ग्रीष्मादिभिः क्रमेण क्लृप्ताः यन्ति गच्छन्ति । यथेति वचनात्तथेति गम्यते । तथा एषां ज्ञातीनां मध्ये पूर्वं पूर्वोत्पन्नं अपरः परोत्पन्नः यथा न जहाति तस्मिन् जीवति न म्रियते एवा एवं हे धातः ! प्रजापते ! एवं एषां आयूंषि कल्पय ॥

[3]अथ प्रतिलोमकृतया वारण्या स्रुचा चतुर्गृहीते द्वे आहुती जुहोति—न हीति ॥ हे अग्ने ! तनुवै । तृतीयार्थे चतुर्थी । तत्सम्बन्धिना तन्वा अस्मदीयो मर्त्यः क्रूरं कर्म पितृमेधं न हि

**अग्ने तनुवैं क्रूरं चकार मर्त्यैः । कपिर्बभस्ति ते-जनं पुनर्जरायु गौरिव । [4]अप नश्शोशुचदघमग्ने शुशुद्ध्या रयिम् । अप नश्शोशुचदघं मृत्यवे स्वाहा । [5]अनड्वाहमन्वारभामहे स्वस्तये । स न इन्द्र**

---

**चकार** । लोडर्थे लिट् । हि शब्दोऽवधारणे । नैव करोतु । उत्तरेणार्धेन अग्निस्स्तूयते । तत्रैकवाक्यताप्रसिद्ध्यर्थं **यस्य ते** इत्यध्याहारः । यस्य ते **तेजनं** तेजः **कपिः** आदित्यः कं उदकं भूयिष्ठं पिबति रश्मिभिरादत्त इति । **पुनः** वीप्साया लोपो द्रष्टव्यः । पुनःपुनः अहरहः **बभस्ति** भक्षयति रात्रौ प्रवेशितं तेजः प्रातरुपादत्ते; **जरायु गौरिव** यथा गौः प्रसूता अनिवार्यमाणा स्वं जरायु भक्षयते तद्वत् । 'अग्निं वावादित्यः सायं प्रविशति । उद्यन्तं वावादित्यमग्निरनु समारोहति '* इति । एवं नामभागस्त्वं यथाऽऽदित्यमाप्याययसि तेन चाप्याय्यसे इति ॥

[4]**अप न** इति ॥ हे **अग्ने** ! **नः** अस्माकं सम्बन्धि **अघं अपशोशुचत्** । यद्यप्यन्यत्र शुचिर्दीप्तौ शोके वा दृष्टः तथाऽप्यत्र उपसर्गवशात् अपनये द्रष्टव्यः । पुरुषव्यत्ययः । पञ्चमो लकारः । अपशोशुचत् अपनय **रयिं** धनं च **आशुशुद्धि** । शुन्धीति याच्ञाकर्मसु पठ्यते । तस्यैवेदं सु[वि]कृतं रूपम् । याच्ञया च तत्पूर्वं दानं लक्ष्यते । आभिमुख्येन पापमपनय । अप न इत्यादि । पुनरादरार्थम् । **मृत्यवे स्वाहा** त्वत्प्रसादादिदं मृत्यवे दत्तमस्तु ॥

[5]उत्तरेणाग्निं लोहितोऽनड्वान् प्राङ्मुखोऽवस्थितो भवति । तं ज्ञा-

---

*ब्रा. २-१-२.

इव देवेभ्यो वह्निस्संपारणो भव॥२३॥[6]इमे जीवा वि मृतैराववर्तिन्नभूद्भद्रा देवहूतिं नो अद्य। प्राञ्चोऽगामा नृतये हसाय द्राघीय आयुः प्रतरां दधानाः। [7]मृत्योः पदं योपयन्तो यदैम द्राघीय आयुः प्रतरां

---

तयोऽन्वारभन्ते—**अनड्वाहं** इति॥ अनः शाकटं तद्वहतीति अनड्वान् तद्वहनयोग्यं तं त्वा **अन्वारभामहे स्वस्तये** आविनाशाय। **स त्वं नः** अस्मभ्यं **वह्निः** वोढा **सम्पारणः** सम्यक्पारस्य च नेता **भव इन्द्र इव देवेभ्यः** यथा इन्द्रः वह्निः सम्पारणश्च तद्वत्॥

[6]अथ प्राञ्चो गच्छन्ति—**इमे जीवा** इति॥ जीवन्तः **इमे मृतस्य** सम्बन्धिनः वयम्। पञ्चम्यर्थे तृतीया। मृतेभ्यः पितृभ्यः **व्याववर्तिन्**। लङि उत्तमपुरुषबहुवचने छान्दसं रूपम्। व्यावर्तामहे अतः परं च **नः** अस्माकं **भद्रा देवहूतिम्**। विभक्तिव्यत्ययः। देवहूतिः देवयज्या **अभूत्** भवतु। **प्राञ्चः** जकारश्छान्दसः। प्राञ्चः प्राङ्मुखाः वयं **अगाम**। वर्तमाने लुङ्। संहिताकाले छान्दसो दीर्घः। बह्वृचाः ह्रस्वमेव पठन्ति। किमर्थं गच्छथ? **नृतये** नृत्ताय **हसाय** हास्याय च। आभ्यां च स्वैरचेष्टा लक्ष्यते। स्वैरं चेष्टितुं **द्राघीयः** दीर्घतरं **आयुः प्रतरां दधानाः** अतिशयेन॥

[7]जघन्यो वेतसशाखया अवकाभिश्च पदानि संलोपयन्नेति—**मृत्योरिति**॥ **मृत्योः** आगतस्य **पदं** पदनीयस्थानं **योपय-**

दधानाः । आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवथ यज्ञियासः । [8]इमं जीवेभ्यः परिधिं दधामि मा नो नु गादपरो अर्धमेतम् । शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दध्महे पर्वतेन । [9]इ-

न्तः लोपयन्तः प्रमृजन्तः यत् यस्मात् ऐम । एतेर्लुङि अडागमे छान्दसो वृद्धिः । आगतवन्तो वयम् । अनडुहो यत् पदप्रमार्जनं तत् मृत्योरेव पदानां प्रमार्जनत्वेन निरूप्यते । यस्मात् वयं मृत्योः पदं प्रमृजन्तः प्राङ्मुखा गताः, यस्मादिति । वचनात् तस्मादिति गम्यते; तस्मात् दीर्घतरं आयुः प्रकृष्टतरं दधानाः अस्मासु स्थापयन्तः आप्याययन्तः । प्रजया च धनेन च आप्यायमानाः वर्धमानाः शुद्धाः शरीरेण पूताः मनसा यज्ञियासः यज्ञार्हाः भवथ । पुरुषव्यत्ययः । भवामः ॥

[8]अथ एभ्योऽध्वर्युः दक्षिणतोऽश्मानं परिधिं दधाति—इममिति ॥ इमं अश्मानं जीवेभ्यः जीवतां एषामर्थाय परिधिं मृत्युः येन परिधीयते तिरोधीयते स परिधिः तं दधामि स्थापयामि नः अस्माकं मध्ये कश्चिदपि नु क्षिप्रं अकाल एव अर्धम् । धकारश्छान्दसः । एतं अर्थं मृत्युलक्षणं मा गात् मा गमः । अपरः मृतादन्यः सर्वे वयं शतं शरदः वत्सरान् जीवेम । पुरूचीः पुरूणि बहूनि आर्तवानि कुसुमादीनि अञ्चति इति पुरूचीः शरदः । मृत्युं दध्महे दकारश्छान्दसः दध्महे केन पर्वतेन अनेन अश्मना ॥

[9]स्त्रीणां अञ्जलिषु सम्पातान् अवनयति । इमा नारीरिति

**आ नारीरविधवास्सुपत्नीराञ्जनेन सर्पिषा संमृशन्ताम् । अनश्रवो अनमीवास्सुशेवा आरोहन्तु जनयो योनिमग्रे । [10]यदाञ्जनं त्रैककुदं जातꣳ हिमवतस्परि । तेनामृतस्य मूलेनारातीर्जम्भयामसि । [11]यथा त्वमुद्भिनत्स्योषधे पृथिव्या अधि । ए-**

---

तैः मुखानि विमृजन्ते ॥ **इमा नारीः** नार्यः अमात्यस्त्रियः **अविधवाः** भर्तृमत्यः **सुपत्नीः** सुपत्न्यः शोभनः पतिः यासां अविधवा इत्यनेनैव सिद्धे शोभनत्वविशेषविवक्षया पुनर्वचनम् । **आञ्जनेन** । आङ् ईषदर्थे । ईषदञ्जनसाधनेन । **सर्पिषा** सम्पाताज्येन । **संमृशन्तां** सम्यक् मुखानि मृजन्तु । **अनश्रवः** अश्रुरहिताः अरुदन्त्यः **अनमीवाः** अरोगाः **सुशेवाः** मानसदुःखरहिताः **आरोहन्तु जनयः** अपत्यजननयोग्याः वध्वः **योनिं** गृहं **अग्रे** प्रथमं पुंभ्यः ॥

[10]त्रैककुदेन अञ्जनेनाञ्जीरन्—**यदाञ्जनमिति** ॥ त्रिककुन्नामपर्वतः **त्रैककुदं** **यत्** एवंभूतं **आञ्जनं** अक्ष्णोः ईषदञ्जनसाधनं **हिमवतः** **परि** उपरि **जातम्** । **तेन** **अमृतस्य** अमरणस्य **मूलेन** कारणेन अक्षीण्यञ्जानाः **अरातीः** शत्रुजातीः **जम्भयामसि** जम्भयामः नाशयामः ॥

[11]पृथिव्यां ओषधिस्तम्बं प्रतिष्ठापयति—**यथेति** ॥ हे **ओषधे** **यथा** **त्वं** उद्भिद्य प्रकाशसे **पृथिव्या** **अधि** । अधिः पञ्चम्यर्थानुवादी । पृथिव्या **उद्भिनत्सि** । **एवं** **इमे** **मृतस्य**

**वर्मिम उद्भिन्दन्तु कीर्त्या यशसा ब्रह्मवर्चसेन ।**
[12]**अजोऽस्यजास्मदघा द्वेषाꣳसि यवोऽसि यवया-स्मदघा द्वेषाꣳसि ॥ २४ ॥**

**भव जम्भयामसि त्रीणि च ॥१०॥**

[1]**अप नश्शोशुचदघमग्ने शुशुद्ध्या रयिम् । अप**

---

अमात्याः **उद्भिन्दन्तु** प्रकाशन्तां कीर्त्यादिभिः । कीर्तेः यशसश्च विद्यादिकारणभेदेन भेदः । वृत्तस्वाध्यायसम्पत् ब्रह्मवर्चसम् ॥

[12]अजं एतदहः पचन्ति यवोदनं च—**अजोसि** इति ॥ अजस्य प्राश्नन्ति । **यवोसीति** यवोदनं च ॥ **अजोसि** त्वं तद्विकारमांसस्य अयं प्रकृतिशब्दः अज क्षिप । **अस्मत्** अस्मत्तः **अघानि द्वेषांसि** द्विषां चास्मासु शत्रूणाम् । यवोसीति निगदसिद्धम् । **यवय** अस्मत्तः पृथक्कुरु ॥

इत्यारण्यके चतुर्थे दशमोऽनुवाकः.

---

[1]वारणेनैव प्रतिलोमकृतेन स्रुवेण दशाहुतीः जुहोति—**अप न** इति ॥ छन्दोगब्राह्मणे अधीतं इतिहासं आचक्षते—कुत्सश्च लुशश्चेन्द्रं व्यह्वयताम् । स इन्द्रः कुत्समुपावर्तत । स तं शतेन वाध्रीभिराण्डयोरबध्नात् । मायं लुशं प्रतिगमदिति । एतत् ज्ञात्वा लुश इन्द्रमुपालभत । प्रमुञ्च परिकुत्सादिहागहि किमु त्वा वां मुष्कयोर्बद्ध आसत इति । कुत्सः इन्द्रातिक्रमजेन अघेन अभिभूतं आत्मानं मन्यमानः तदपनोदनार्थं अग्निं अभ्यष्टौत् । तत्र प्रथमा गता ॥

**नश्शोशुंचदघम् । [2]सुक्षेत्रिया सुंगातुया वंसूया चं यजामहे । अपं नश्शोशुंचदघम् । [3]प्र यद्भन्दिंष्ठ एषां प्रास्माकांसश्च सूरयः । अपं नश्शोशुंचदघम् । [4]प्र यदग्नेस्सहंस्वतो विश्वतो यन्ति सूरयः । अपं नश्शोशुंचदघम् । [5]प्र यत्ते अग्ने सूरयो जायेमहि प्र ते व-**

---

[2]**सुक्षेत्रिया** ॥ सर्वत्र तृतीयाया याडागमः । इह लोके तावत् शोभनक्षेत्रेच्छया परलोके च **सुगातुया** सुगतीच्छया **वसूया** च धनेच्छया त्वां **यजामहे** । त्वं च **अपनय नः** अघम् ॥

[3]**प्र यदिति** ॥ पुल्लिङ्गेऽपि 'सुपां सुलुक्' इत्यादिना सोर्लुक् । योऽहं **प्रभन्दिष्ठः** । भन्दतिः अर्चतिकर्मा । प्रकर्षेण स्तोता । कस्य? **एषां** पूर्वनिर्दिष्टस्य अग्नेः अयं प्रतिनिर्देशः । व्यत्ययेन बहुवचनम् । अस्य अग्नेः ये च **अस्माकासः** अस्माकं सम्बन्धिनः **सूरयः** मेधाविनः । प्रशब्दश्रुतेः भन्दिष्ठ इत्येतद्वचनात् परिणामेन अपेक्ष्यते । ये अस्मदीयाः सूरयः प्रभन्दिष्टाः तेषां सर्वेषां **नः** पापं **अपनय** ॥

[4]**प्र यदग्नेरिति** ॥ **यत्** । षष्ठ्येकवचनस्य लुक् । यस्य **अग्नेः सहस्वतः** बलवतः ज्वालां स्वभूताः **सूरयः विश्वतः** सर्वतः **प्रयन्ति** स त्वं नः **अघं** अपनय ॥

[5]**प्र यत्त इति** ॥ यदिति जसो लुक् । **यत्** ये वयं **ते** तव **सूरयः** प्रकर्षेण स्तोतारः ते वयं **प्रजायेमहि** प्रजां प्राप्नुयामः ते तव प्रसादेन । किञ्च—अस्माकं **अघं** अपनय ॥

यम् । अप॑ नः॒ शोशु॑चद॒घम् ॥ २५ ॥ [6]त्वꣳ हि
वि॑श्वतोमुख वि॒श्वत॑ः परि॒भूरसि॑। अप॑ नः॒ शोशु॑च-
द॒घम् । [7]द्विषो॑ नो विश्वतोमु॒खाति॑ ना॒वेव॑ पारय ।
अप॑ नः॒ शोशु॑चद॒घम् । [8]स नः॒ सिन्धु॑मिव ना॒वया-
ऽति॑पर्षा*स्व॒स्तये॑ । अप॑ नः॒ शोशु॑चद॒घम् । [9]आप॑ः
प्रव॒णादि॑व य॒तीरपा॒स्मथ्स्यं॑न्दताम॒घम् । अप॑ न-

[6]**त्वं हि** इति ॥ हि शब्दो हेतौ । हे **विश्वतोमुख** ! सर्वतो-
ज्वाल ! अग्ने ! यस्मात् **त्वं विश्वतः परिभूरसि** । परिपूर्वो भवतिः
परिग्रहे वर्तते । परिगृहीतोसि स्तोत्राणां यष्टॄणां च । तस्मात्
अस्माकमपि तथाविधानां अघं अपनय ॥

[7]**द्विष** इति ॥ हे **विश्वतोमुख** ! नः अस्माकं **द्विषः** शत्रून्
**अतिपारय** यथा वयं तान् अतीत्य गच्छेम तथा कुरु
**नावेव** यथा कश्चित् नाविकः सिन्धुं नावा अतिपारयति तद्वत् ।
त्वं अग्ने अघं अपनय ॥

[8]**स न** इति ॥ यस्तु एवमुक्तगुणः **सः** त्वं **नः** अस्मान् **अ-
तिपर्ष** अतिपारय **स्वस्तये** अविनाशाय **सिन्धुमिव नावया**
नाविकः ॥

[9]**आप** इति ॥ यथा **आपः यतीः** यन्त्यः **प्रवणात्** ।
विभक्तिव्यत्ययः । प्रवणे निम्ने प्रदेशे स्यन्दन्ते तथा **अस्मत्**
अस्मत्तः **अघं अपस्यन्दतां** अपेत्य स्रवतु । त्वं चाग्ने! अघमपनय ॥

*परुषा.

ऽशोशुंचदघम् । [10]उद्वनादुदकानीवापास्मथ्स्यन्दताम्घम् । अपं नऽशोशुंचदघम् । [11]आनन्दायं प्रमोदाय पुनरागाꣳ स्वान्गृहान् । अपं नऽशोशुंचदघम् । [12]न वै तत्र प्रमीयते गौरश्वः पुरुषः पशुः । यत्रेदं ब्रह्मं क्रियते परिधिर्जीवनाय कमपं नऽशोशुंचदघम् ॥ २६ ॥

अघमघं चत्वारिं च ॥ ११ ॥

---

[10]उद्वनादिति ॥ उद्वनं उन्नतप्रदेशः तस्मात् यथा उदकानि स्यन्दन्ते । शिष्टं गतम् ॥

[11]प्रत्येत्य गृहान् उत्तरपूर्वे देशे अगारस्य अग्निं उपसमाधाय संपरिस्तीर्य अनुलोमकृतया वारण्या स्रुचा द्वे चतुर्गृहीते जुहोति—आनन्दायेति ॥ आनन्दाय सुखाय प्रमोदाय हर्षाय पुनः अहं स्वान् गृहान् आगां आगतवानस्मि । हे अग्ने ! त्वं च अघं अपनय ॥

[12]न वा इति ॥ तत्र गृहे गवादि न वै प्रमीयते नैव म्रियते यत्र गृहे इदं ब्रह्म अयं मन्त्रः क्रियते होमे विनियुज्यते । परिधिः मृत्योः परिधिरूपं इदं ब्रह्म जीवनाय ज्ञातीनां कं सुखरूपं तद्धेतुभूतम् । हे अग्ने ! त्वं च अघं अपनय ॥

इत्यारण्यके चतुर्थे एकादशोऽनुवाकः.

[1]अपश्याम युवतिमाचरन्तीं मृताय जीवां परिणीयमानाम् । अन्धेन या तमसा प्रावृताऽसि प्राचीमवाचीमवयन्नरिष्ट्यै । [2]मयैतां मांस्तां म्रियमाणा देवी सती पितृलोकं यदैषि । विश्ववारा

---

[1]अथ उपाकृतां राजगवीं घ्नन्ति उत्सृजन्ति वा । यदि उत्सृजन्ति राजगवीं दारुचितिं अग्निं च त्रिः प्रसव्यं परिणयन्ति—**अपश्यामेति** तिसृभिः ॥ हे राजगवि ! **या त्वं अन्धेन तमसा** मरणभयजनितेन **प्रावृताऽसि** । पूर्वं येति वचनात् तामिति गम्यते । तां इदानीं उत्स्रक्ष्यमाणां **जीवां** जीवन्तीं **युवतिं** यौवनं प्राप्तामिव शोभमानां **आचरन्तीं** आभिमुख्येन आगच्छन्तीं तृणानि वा भक्षयन्तीं स्वस्थां **मृताय परिणीयमानां** मृतस्य संस्कारार्थं परितः नीयमानां वयं **अपश्याम** । लडर्थे लङ् । पश्यामः । एतेऽपि पार्श्वस्थाः **अवयन्** अवयन्तु अनुजानन्तु **अरिष्ट्यै** अहिंसायै । **प्राचीं** प्राङ्मुखीं **अवाचीं** अवाङ्मुखीं परिणीयमानां यतस्ततोऽभिमुखी भवति । अवयन् इत्यत्र स्वरश्छान्दसः । उत्सर्गपक्ष एव परिणयनं, आलम्भपक्षानुगुणश्च मन्त्रः । तत्रापिशब्दाध्याहारेण योजनीयम् ॥

[2]**मयैतामिति** ॥ प्रथमार्थे द्वितीया । एषा त्वं **मया मांस्ताम्** । मांसस्य अन्तलोपः । मांसतां **म्रियमाणा** मांसतां नीता **देवी** देवभूयं गता **विश्ववारा** सर्वेषां वरणीया **नभसा** आकाशदानेन **यदा पितृलोकं एषि** तदा **उभौ लोकौ पयसा**

नभ॑सा सं॒व्यय॑न्त्यु॒भौ नो॑ लो॒कौ पय॑सा॒ऽऽवृ॑णीहि ।
[3]र॒यि॒ष्ठाम॒ग्निं मधु॑मन्तमू॒र्मिण॒मूर्ज॑स्वन्तं* त्वा॒
पय॒सोप॒स॒ꣳ स॑देम । सꣳ र॒य्या सम्‌ वर्च॑सा सच॑-
स्वा नस्स्व॒स्तये॑ । [4]ये जी॒वा ये च॑ मृ॒ता ये जा॒ता ये
च॒ जन्त्याः॑ । तेभ्यो॑ घृ॒तस्य॑ धारयि॒तुं मधु॑धारा व्यु-

---

**संव्ययन्ती** आच्छादयन्ती **नः** अस्मभ्यं **आवृणीहि** । पृणातिः दानकर्मा, छान्दसो वकारः । आपृणीहि दातुं अर्हसि । या त्वं आलभ्यमानाऽप्येवमर्हसि किं पुनः सा उत्सृज्यमाना ॥

[3]**रयिष्ठामिति** प्रैतीं प्रत्युच्यते ॥ रयिः धनं तत्र तिष्ठतीति **रयिष्ठा** 'श्रियमिच्छेत् हुताशनात्' इति । **अग्निं मधुमन्तं मधुभिः** स्वादुभिः आज्यादिभिः युक्तं **ऊर्मिणं** ऊर्म्याकाराभिः ज्वालाभिः युक्तं **ऊर्जस्वन्तं** बलवन्तं **त्वा पयसा** पयस्विन्या राजगव्या सह **उपसंसदेम** सम्यक् उपसंपन्नाः स्मः । **स** त्वं **नः** अस्मान् **रय्या** धनेन **संसचस्व** सङ्गमय । उश्च.थैं । **वर्चसा** च **संसचस्व** **स्वस्तये** अविनाशाय ॥

[4]उत्स्रक्ष्यमाणां राजगवीं अभिमन्त्रयते—**ये जीवा इति** ॥ **ये** अस्मिन् लोके जीवन्तः **ये च मृताः ये** च जनिष्यमाणाः **तेभ्यः** सर्वेभ्यः **घृतस्य** घृतं **धारयितुं** उत्पादयितुं वा **मधुधाराः** मधुनः स्वादुनः क्षीरस्य धाराः **व्युन्दती** । उन्दी क्लेदने ; इह तु तद्धेतुभूतं क्षरणं विवक्षितम् । क्षरन्ती उत्तरत्र वाक्यसमाप्तिः ॥

---

*स्सन्तं.

न्दुती । [5]माता रुद्राणां दुहिता वसूनाꣳ स्वसाऽऽदित्यानाममृतस्य नाभिः । प्रणु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । [6]पिबतूदकं तृणान्यत्तु । ओमुत्सृजत ॥ २७ ॥

वधिष्ट द्वे च ॥ १२ ॥

[1]परेयुवाꣳसं प्रविद्वान्भुवनस्याभ्यावं वृत्स्वाजो भागोऽयं वै चतुश्चत्वारिꣳशद्य एतस्य त्वत्पश्च प्र केतुनेदं ते नाके सुपर्णं यौ ते ये युध्यन्ते तपसाऽश्मन्वती रेवतीस्सꣳरभध्वमष्टाविꣳशतिर्यं ते यत्त उत्तिष्ठेदं त उत्तिष्ठ प्रेहाश्मन् यद्वा उद्वयमयं पञ्चविꣳशतिरायातु त्रिꣳशद्वैश्वानरे तस्मिन्द्रप्स इममपेताहोभिर्युज्यन्तामग्निया अदिते पारं व आ प्यायस्व सप्तविꣳशतिरुत्ते तश्नोम्यक्षितिस्तेभ्यः पृथिवि षड्ढोता परं मे शग्माः पृथिव्या अन्तरिक्ष

[5—6]उत्सृजते—मातेत्यादि ॥ उत्सृजतेत्यन्तं मधुपर्के गतम्* । इयं रुद्रादीनां देवानां मात्रादिस्थानीया, सर्वेषां यज्ञभागित्वात् । तस्य च आज्यादिगव्यसाध्यत्वात् अमृतस्य अमृतत्वप्राप्तिहेतोः यज्ञस्य नाभिः प्रधानावयवः आज्यादिद्वारेण, 'एष वाव यज्ञो यदाज्यम्'† इत्यादिश्रुतेः । एवं नाम प्रशस्तेयं अतश्च

*मं. २-१०, †सं. २-६-२.

स्य द्वात्रिꣳशदपूपवानसौ दश शतदक्षिणाताः ते दिशस्सर्वा इदमश्मान्विꣳशतिराहत तनुवै क्रूरं चकार पुनर्मृत्यवे मा नो नु गाहध्व इमा नारीः परि त्रयोविꣳशतिरपं नस्सुक्षेत्रिया प्र यद्भन्दिष्ठः प्र यदग्नेः प्र यत्ते अग्ने त्वꣳ हि द्विषस्स नस्सिन्धुमापः प्रवणादुहनादानन्दाय न वै तत्र यत्रेदं चतुर्विꣳशतिरपश्यामावृणीहि द्वादशद्वादश ॥ १२ ॥

परेयुवाꣳसमायात्वेताः सप्तविꣳशतिः॥२७॥

सं त्वा सिञ्चामि यजुषा प्रजामायुर्धनं च ॥

ओं शान्तिश्शान्तिश्शान्तिः ॥ हरिः ओम्. तत्सत्.

सुमङ्गलीरियं वधूरिमाꣳसमेत पश्यत। सौभाग्यमस्यै दत्वा याथास्तं विपरेतन ॥

इति तैत्तिरीयारण्यके चतुर्थः प्रश्नः.

---

प्रणुवोचं नु क्षिप्रं प्रकर्षेण ब्रवीमि चिकितुषे जिज्ञासते । कित ज्ञाने । सनन्तः । जनाय किंकिं ब्रवीषि? मा गां अनागां अनागसं इमां गां अदितिं अखण्डितां मा वधिष्ट। एषा कामं पिबतु उदकम्, तृणानि च अत्तु । ओं उत्सृजतेत्याह॥

इत्यारण्यके चतुर्थे प्रश्ने द्वादशोऽनुवाकः.

पितृमेधप्रश्नः समाप्तः.